गमनं कार्यस्यावश्यकत्वात् न संभवतीति विद्यातः समागत्य नन्दादीनां सान्त्वनार्थमुद्धवं प्रेषयतीति निरूप्यते। तत्र सन्ति त्रिविधाः, प्रकटसन्देशयोग्या यशोदानन्दप्रभृतयः, मित्रभूता गोपा अल्पगोप्याः, गोप्यस्त्वतिगोप्याः। अत एतादृशेर्थे निपुणेन दूतेन भाव्यमित्युद्धवं प्रेषणार्थं वर्णयति **वृष्णीनां प्रवर** इति।

श्रीशुक उवाच—**वृष्णीनां प्रवरो मन्त्री कृष्णस्य दयितः सखा।**

**शिष्यो बृहस्पतेः साक्षादुद्धवो बुद्धिसत्तमः॥ १॥**

कुलीनः सर्वकर्मसु प्रशस्तः। तत्रापि स्वगोत्रजः, तत्रापि महानिति प्रेषणे स्वरूपयोग्यता निरूपिता। दौत्यार्थं सहकारियोग्यतामाह **मन्त्रीति**। स हि मन्त्रं न प्रकाशयति। तर्ह्युचितमेव वदेन्नानुचितमिति भगवदुक्तमपि न वदेदतो गुह्यार्थे प्रेषणमयुक्तमित्याशङ्क्याह **कृष्णस्य**

श्रीपुरुषोत्तमकृतो भ्रमरगीतप्रकाशः।

**वृष्णीना**मित्यस्याभासे। **कार्यस्यावश्यकत्वा**दित्यादि। मथुरादिस्थितानामुद्धारस्य तथात्वात्। यदि स्वयं तत्र गच्छेत्, तदा तदवस्थां पश्यन् तत्रैव
१०-४३-१
तिष्ठेदिति अग्रिमकार्यं न स्यादिति भावः।

श्रीविट्ठलेशात्मजश्रीवल्लभकृतलेखः।

बाललीलायामेतयोरिव प्रौढलीलायां तासां मुख्यत्वादध्यायान्तरेण स्वतन्त्रतया कथनमिति भावः। **तेनेति**। सन्देशप्रेषणेन दौत्यकैरायास्ये इति भगवदुक्तमपि समर्थितमित्यर्थः। नन्वेतादृशनिरोधोपि तत्प्रकरणे एव कुतो नोक्तस्तत्राहुः। **राजसत्वं चेति**। विकलत्वास्त्रास्थ्यादिभावरूपविक्षेपवत्त्वमधुना सिद्धमेतस्य तदङ्गत्वात्पूर्वं तदकथनमित्यर्थः। प्रयोजनान्तरमाहुर्**गुणेति**। भगवान् लोकरीत्यायातोपि 'बीजं भक्ति'रिति कारिकोक्तगुणैर्निरोधं कृतवानिति **गुणोत्कर्षो** निरूपितः, उक्तसमर्थनं जातम्, गुणोत्कर्षश्च निरूपितो जात इति समुच्चयार्थमुभयत्र चकारः। **तेषामेव चेति**। साक्षात्पुरुषोत्तमे पुत्रत्वसम्बन्धो नन्दादीनामेव, प्रद्युम्नव्यूहाभावात्स्वरूपे एव लीलार्थं पुत्रत्वस्थापनात्। वसुदेवगृहे व्यूहविशिष्टपुरुषोत्तमप्राकट्येपि वंशसम्बन्धः प्रद्युम्नांशेन। अत एव 'पुरुषोत्तमस्तु नन्दगृह एवे'ति पूर्वमुक्तम्। अत्रायमभिसन्धिः। वासुदेवो नन्दगृहे आविर्भूतस्तस्मिन्नाधारे भक्तहृदयस्थितः पुरुषोत्तम आविर्भूतः। तत्र प्रद्युम्नाभावाद्वासुदेवस्य च तत्कार्यं न भवतीति स्वस्मिन्नेव तदीयपुत्रत्वादिसम्बन्धं स्वीकृतवान्। व्यूहत्रयविशिष्टः पुरुषोत्तमो वसुदेवगृहे प्रकटः। अत्र प्रद्युम्नांशेनैव पुत्रत्वादिसम्बन्धः। ततो गोकुलगमने उभयोरेकीभावेन स्थितिः। पुनर्मथुरागमने वासुदेवमपि गृहीत्वा चतुर्व्यूहविशिष्टः सन्वसुदेवगृहाविर्भूतो भगवान्पुरुषोत्तमो मथुरां गतः। नन्दगृहाविर्भूतस्तु पुरुषोत्तमः केवलो भक्तहृदयाधारे स्थितः। अत एव तदनन्तरं केवलपुरुषोत्तमकार्यं भक्तेषु नानाविधविलासं कृतवान्न तु व्यूहकार्यमिति। **स हि मन्त्र**-

**दयित** इति । दयितोऽत्यन्तं प्रियः, यद्यनभिप्रेतधर्मवान् भवेत् तर्ह्यत्यन्तं प्रीतिविषयो न स्यात्, गुर्वादिरप्येतादृशो भवतीति पितृव्यत्वाच्च तथात्वे गुह्यं न वक्तव्यमित्याशङ्क्याह **सखेति** । भगवतः समानशीलव्यसनवान् । तथाप्यनीतिज्ञश्चेत् देशकालप्रकरणादिनिरपेक्षतया वदेत्, ततश्च यथार्थमपि भाषितं फलाय न भवेदित्यत आह **बृहस्पतेः** देवगुरोः शिष्य इति । नीतिस्तत्रैव (प्रतिष्ठिता) तिष्ठति । **साक्षादिति** न ग्रन्थद्वारा । साक्षादुद्धवो वा उत्सवात्मकः, दूरे गतस्य बन्धोः पुनरागमनख्यापकः परम्परयोत्सवहेतुर्भवति अयं तु **साक्षात्** । एवं दृष्ट्वैव जानन्ति भगवद्दर्शनेनैव च सुखिता भवन्ति, तथापि यावदुक्तार्थग्रहणसामर्थ्यं मृग्यत इति तादृशो वक्तव्य इत्यत आह **बुद्धिसत्तम** इति । बुद्ध्यात्यन्तं सन्, बुद्धिमत्त्वेऽपि कार्यसिद्धौ स्वतोपि छायया गोकुलवासिनां दुःखदूरीकरणसमर्थ इति तथोक्तम् ॥ १ ॥

एवं दूतगुणानुक्त्वा तादृशे भगवन्नियोगमाह **तमाहेति** ।

**तमाह भगवान् प्रेष्ठं भक्तमेकान्तिनं क्वचित् ।**
**गृहीत्वा पाणिना पाणिं प्रपन्नार्तिहरो हरिः ॥ २ ॥**

*तेन कार्यं सेत्स्यतीति* ज्ञानार्थमत्यनुरोध्येषु स्वागमनार्थं च प्रेष्ठोऽत्यन्तं प्रियः अतः स्वसमान इति प्रतिनिधित्वात्प्रेषणीयः । तथापि स्त्रीषु विक्रियां प्राप्स्यतीत्याशङ्क्याह **भक्तमिति** । स्त्रीकृतस्तथा भविष्यतीत्याशङ्क्याह **एकान्तिनमिति** । एकान्ते स्थातुं योग्यम्, उभयेषां विकारानालम्बनमिति, **क्वचिदेकान्ते** यत्र कोपि न पश्यति तत्र **पाणिना पाणिं गृहीत्वा** आहेति संबन्धः । एवं निर्बन्धेन कथने को हेतुस्तत्राह **प्रपन्नार्तिहर** इति । शरणागता गोकुलवासिनः, तेषामार्तिर्हर्तव्येति सहज एव धर्मस्तस्य तादृश इति न तद्धर्मपरित्यागः ॥ २ ॥

---

श्रीपुरुषोत्तमकृतो भ्रमरगीतप्रकाशः ।

१०-४३-२ **तमाहेत्यत्र** । उभयेषामिति । स्त्रीणामेकान्ते चेत्यर्थः ।

---

श्रीविठ्ठलेशात्मजश्रीवल्लभकृतलेखः ।

मिति । नित्ययोगे मत्वर्थीय इति । नित्यं तेनैव सह मन्त्रस्य योगो बहिर्न प्रकाश इति भावः । **बुद्धिसत्तम** इति तमप् प्रत्ययस्यार्थमाहुः **स्वतोपि छाययेति** । प्रतिच्छायया भगवत्सादृश्येनेत्यर्थः । अत एवाग्रिमाध्याये प्रलम्बबाहुत्वादिकं वक्ष्यते इति भावः ॥

**तमाहेत्यत्र** । **तेनेति** । कार्यं तेन सेत्स्यतीति हेतोस्तमाहेति शेषः । **प्रेष्ठपदतात्पर्यमाहुः** । **ज्ञानार्थमिति** । अन्तरङ्गज्ञानयोग्यतार्थम् । **अत्यनुरोध्येषु** व्रजीयेषु स्वस्य भगवतोऽगमनेपि तेनैव कार्यसिद्ध्यर्थं च प्रेष्ठपदमित्यर्थः ।

भगवद्वाक्यान्याह चतुर्भिः **गच्छोद्धवेति** ।

**गच्छोद्धव व्रजं सौम्य पित्रोर्नौ प्रीतिमावह ।**
**गोपीनां मद्वियोगाधिं मत्सन्देशैर्विमोचय ॥ ३ ॥**

'प्रमाणं च प्रमेयं च उपपत्तिश्च बाधकम् । चत्वारोऽत्रैव वक्तव्या अन्यथा प्रेषणं न हि' ॥१॥

आदौ नियोगमाह हे **उद्धव व्रजं गच्छ** । सौम्येति सम्बोधनान्नान्यः प्रेषयितुमुचित इति सूचितम् । गत्वा कर्तव्यमाह **पित्रोः** यशोदानन्दयोः **नौ** आवयोः उभाभ्यां तस्मिन्नेव पितृत्वं स्थापितमिति तदुपपादितम् । अतो यथैत्र प्रीतिर्भवति अस्मदागमनेनेव तथा **प्रीतिमावह,** अयं प्रकटः सन्देशः । गुप्तमाह **गोपीनां मद्वियोगाधिमिति** । मम वियोगेन य आधिः मनःपीडा तां **मत्सन्देशैः** मत्पत्रलिखितैः तत्र प्रकटीकृतैः **विमोचय,** आधिग्रस्तास्ताः यथा तद्वासो गच्छति तथोपायं कुरु ॥ ३ ॥

ननु तासु को विशेष इत्याशङ्क्य तासां स्वरूपमाह अस्मत्कथने प्रमेयबलत्वेन **ता मन्मनस्का** इति ।

**ता मन्मनस्का मत्प्राणा मदर्थे त्यक्तदैहिकाः ।**
**ये त्यक्तलोकधर्माश्च मदर्थे तान्बिभर्म्यहम् ॥ ४ ॥**

प्राणिनामात्मा मदीय एव सर्वसाधारणः स च सिद्धत्वात्, ज्ञातेऽपि तथा नादरणीयः किन्तु देहेन्द्रियमनांस्यन्यपराण्येवोत्पत्तिशिष्टानि तानि चेन्मत्पराणि स्युस्तदा तत्सङ्घाता मदीया भवन्ति । तदाह '**मय्येव** मनो यासां मय्येव प्राणा इन्द्रियाणि च मदर्थमेव जीवन्ति मय्येव सति जीवन्ति सर्वाणीन्द्रियाणि मद्विषयकमेव कुर्वन्ति, देहमपि मदर्थमेव कुर्वन्ती'त्येतदर्थमाह **मदर्थे त्यक्तदैहिका** इति । दैहिका हि देहोपयोगिनस्तेषु विद्यमानेषु न भगवदर्थमेव देहो भवेत् । अतस्ते त्यक्तव्याः । ननु तेषां त्यागे देहनिर्वाहो न

---

श्रीपुरुषोत्तमकृतो भ्रमरगीतप्रकाशः ।

भगवद्वाक्यानां चतुर्भिर्निरूपणे हेतुमाहुः **प्रमाणमिति** । **बाधकमिति** । अप्रेषण इति शेषः । **अन्यथा** एतच्चतुष्टयाभावे । **न हीति** । न युक्तमित्यर्थः । तथा च तदर्थं **चत्वारः** श्लोका इति भावः ।

१०-४३-३

---

श्रीविट्ठलेशात्मजश्रीवल्लभकृतलेखः ।

**गच्छोद्धवेत्यत्र** । चतुर्णां वाक्यानामर्थमाहुः । **प्रमाणं चेति** । प्रमाणं गच्छेति भगवतो नियोगः । वेदरूप इत्यर्थः । **प्रमेयं** ता मन्मनस्का इत्यनेनोक्तं स्वामिनीस्वरूपम् । प्रेषणे **उपपत्ति**'मयि ता' इति श्लोकोक्ता । अप्रेषणे **बाधकं** 'धारयन्त्यतिकृच्छ्रेणे'त्यनेनोक्तम् । एतादृशैतच्चतुष्टयाभावे **प्रेषणं न** स्यादित्यर्थः । **अस्मत्कथने इति** । अस्मच्छब्दवाच्य आत्मा । भगवत आत्मत्वेन कथने तासां स्वरूपबलेनेव विशेष इत्यर्थः ॥

भवेत्, तत्राह **ये त्यक्तलोकधर्माश्च मदर्थ** इति । **त्यक्तः लोकधर्मो** वैदिकश्च यैः चकारात्सर्वे लौकिकधर्माः **वेदैश्च परिगृहीताः**, एतादृशानहं **बिभर्मि** यथा मद्धस्तस्थितपदार्थः केनापि नोपहन्यते तथा त इत्यर्थः । अतस्तेषां न कोप्युपद्रवः किन्तु मद्विरहः स संदेशैर्निराकर्तव्यः ॥ ४ ॥

ननु फलसाधकत्वात् भक्तिमार्गे विरह एव पुरुषार्थ इति किमिति निराक्रियते तत्राह **मयि ता** इति ।

**मयि ताः प्रेयसां प्रेष्ठे दूरस्थे गोकुलस्त्रियः ।**
**स्मरन्त्योऽङ्ग विमुह्यन्ति विरहौत्कण्ठ्यकातराः ॥ ५ ॥**

**ता विमुह्यन्ति** क्षणे क्षणे मूर्च्छां प्राप्नुवन्ति **कातरा** दीनाश्च भवन्ति । प्राणरक्षा दैन्यं च दूरीकर्तव्यम् । ननु मूर्च्छायां को हेतुः ज्ञानस्य मानसव्यापारस्य वा घातकत्वाभावात् । प्राणघाते हि मूर्च्छा भवति तत्राह **ता मयि दूरस्थे** सति **गोकुलस्त्रियः** विचारचातुर्यादिरहिताः **प्रेयसामतिप्रियाणां** सर्वेषामेव मध्ये **प्रेष्ठे**तिप्रिये प्राणादप्यधिकप्रिये दूरे विद्यमाने सति **स्मरन्त्य** एव **विमुह्यन्ति** । स्मरणमात्रमेव मूर्च्छाहेतुः । **अङ्गे**ति संबोधनं तासु स्नेहात् तदर्थं प्रेषणीयेऽपि स्नेहसूचकम् । मरणमनेनैव भवत्यनेन नेति किञ्चिदुपपन्नमस्ति, यथा महाभयात्प्राणोत्क्रमणम्, अतिक्रूरदर्शनाच्च, यथा वा पुत्राद्यपगमश्रवणे तथा तासामपि प्राप्तिसंभावनारहिते मयि सति मत्स्मरणमात्रेणापि । न हि दृष्टेऽनुपपन्नं नाम । भगवत्प्राप्तिसंभावनाभावसहिता भगवत्स्मृतिः महाप्रहार इव मूर्च्छाहेतुः । प्रेष्ठत्वात्स्मरणमावश्यकम्, अतोऽचिकित्स्यदोषात् निरन्तरं मूर्च्छैव । किञ्च, पूर्वमनुभूतस्यार्थस्य

श्रीपुरुषोत्तमकृतो भ्रमरगीतप्रकाशः ।

**ता** इत्यत्र । **स्वरूपमाहे**ति नियोगात्मकप्रमाणवाक्योपष्टम्भायाहेत्यर्थः । **अस्मत्कथने** इति । अस्मच्छब्दप्रयोग इत्यर्थः । **सिद्धत्वादित्यादि** । मदीयत्वस्य
१०-४३-४
सिद्धत्वात् । ज्ञातेपि तथात्वे मम नादरणीय इत्यर्थः । **मय्येव सति जीवन्तीति** । एतेनाहमेव प्राणो यासां ता मत्प्राणा इत्यर्थोपि क्रोडीकृतः । प्राणस्य[1] राजसत्वमपि तेन संसिद्धं बोधितम् । **वेदैश्च परिगृहीता** इति व्यापकत्वात्मारामत्वादय इत्यर्थः ।

श्रीविट्ठलेशात्मजश्रीवल्लभकृतलेखः ।

**ता मन्मनस्का** इत्यत्र । **वेदैश्चे**ति । तथा च लोकवैदिकधर्मलौकिकधर्मवेदानां त्याग उक्त इति भावः ॥

**मयि ता** इत्यत्र । किंचिदुपपन्नमस्तीति काकुना योज्यम् । **मत्स्मरणे** इति । बहिःसंवेदनाभावे अन्तःस्वरूपमात्रस्मरणे इत्यर्थः । **मद्धर्मे**ति । बहिःसंवेदने लीलास्मरणे इत्यर्थः ॥

१ प्राणश्च राजस इति पाठः

साम्प्रतमभावो विरहः तेन तासामुत्कण्ठा महती अत औत्कण्ठ्येन कातरा दीनाश्च मत्स्मरणे मूर्च्छा मद्धर्मस्मरणे तु कातरत्वमिति उभयं मत्सन्देशो निवारयिष्यति ॥ ५ ॥

तर्ह्येवं मूर्च्छायां जीवने का प्रत्याशेत्याशङ्कायामाह **धारयन्त्यतिकृच्छ्रेणेति** ।

**धारयन्त्यतिकृच्छ्रेण प्रायः प्राणान्कथञ्चन ।**
**प्रत्यागमनसन्देशैर्बल्लव्यो मे मदात्मिकाः ॥ ६ ॥**

अतिकष्टेन प्राणान् धारयन्ति । बह्व्यो मृता इति प्रायग्रहणम् । देहेन्द्रियान्तःकरणानि तु विकलान्येव प्राणान् केवलं धारयन्ति । तत्र का उपपत्तिरित्याशङ्कायामाह **कथञ्चिदिति** । न काप्युपपत्तिः प्रसिद्धा । वस्तुतस्तु मरणमेवोचितम् । जीवनमस्तीति किञ्चित्साधनं परिकल्प्यते अप्रसिद्धत्वात्कथञ्चिदित्युक्तम् । **प्रमेयबलेनेति** । **भगवदिच्छयेति** जीवनमात्रम् । प्रमेयबलस्यापि दुःखदूरीकरणे न सामर्थ्यम् किन्तु धारणात्मकं भूत्वा कथञ्चिद्धारयति । तर्हि सन्देशेन किं कर्तव्यं तत्राह **प्रत्यागमनसन्देशैरिति** । भगवान् प्रत्यागमिष्यतीति यो ममैव सन्देशः आयास्य इति तज्जीवने साधनं तत् कालेन जीर्णं चेत् मरणमेवेति तदर्थमुपायान्तरं कर्तव्यम् । स उपायः पत्रे स्पष्टो भविष्यतीति भावः । ननु स्त्रीणां स्थाने तत्रापि गुह्यसन्देशे कथं पुरुषाः प्रेष्यन्ते तत्राह—**बल्लव्यो म** इति । त्वयि न सन्देहः ताः पुनः **मे** मदीयाः न हि मदीयानामन्यत्र मनो भवति, मत्सम्बन्धस्यैव तथा सामर्थ्यात् । वल्लवीपदेन चैतज् ज्ञापयति वल्लवानां गोपानां स्त्रियः अहोरात्रं च गोपाः स्त्रीणां वलयप्राया इति ता आवेष्ट्यैव तिष्ठन्तीत्यतिकामुकाः नित्यं स्त्रीसुखदातारस्तादृशानामपि स्त्रियो भूत्वा तान्परित्यज्य मत्पराश्चेदन्यस्मिन् शङ्कैव नोदेति । ननु ममैव यदि तास्वन्यथाबुद्धिर्भवेत् तदा का गतिरित्याशङ्कायामाह **मदात्मिका** इति । अहमेवात्मा यासां मत्स्वरूपास्ता अतस्तव तासु मद्बुद्धिरेव भविष्यतीति न काचिच्चिन्तेत्यर्थः ॥ ६ ॥

एवमुपपत्तिपूर्वकं व्रजगमनार्थमाज्ञसस्तथा कृतवानित्याह **इत्युक्त** इति ।

श्रीशुक उवाच—**इत्युक्त उद्धवो राजन्सन्देशं भर्तुराहृतः ।**
**आदाय रथमारुह्य प्रययौ नन्दगोकुलम् ॥ ७ ॥**

**राजन्निति** । ईश्वराज्ञा सेवकैरवश्यं कर्तव्येति ज्ञापनार्थम् । स हि उत्सवात्मकः यत्रैव गच्छति तत्रैवोत्सवः । भर्ता हि स्वामी, अनेन पातिव्रत्यं तस्योक्तम्, तेन निन्दा-

---

श्रीपुरुषोत्तमकृतो भ्रमरगीतप्रकाशः ।

१०-४३-७ **इत्युक्त** इत्यत्र । **तत्रैवोत्सव** इति । तेन तत आरभ्य गोकुले न कस्यापि विरहक्लेश इति ज्ञापितम् ।

---

श्रीविठ्ठलेशात्मजश्रीवल्लभकृतलेखः ।

**इत्युक्त** इत्यत्र । **निन्देति** । निन्दा साधारणकार्यकर्तृत्वेनाज्ञैः क्रियमाणा,

१०-११

स्तुतिः लोकातिक्रमः परलोकादिबाधो वा सर्वमविगणय्य **भर्तुः सन्देशमेवादाय नन्दस्य गोकुलं प्रययौ ।** तत्राप्यादरपूर्वकं परमपुरुषार्थं प्राप्त इव, भगवत्स्मरणेन मार्गे वैकल्ये गमनं बाधितं भविष्यतीति रथेन प्रययौ ॥ ७ ॥

गमनदिवसे सन्देशो वक्तुमशक्य इति आदौ नन्दश्च वक्तव्य इति स्मारकेण तासां विरहोधिको भविष्यतीति सन्ध्यायां गत इत्याह **प्राप्त** इति ।

**प्राप्तो नन्दव्रजं श्रीमान्निम्लोचति विभावसौ ।**
**छन्नयानः निविशतां पशूनां खुररेणुभिः ॥ ८ ॥**

**नन्दस्यैव व्रजं** गतः, विशेषाकारेण कालस्य तथात्वात् अतिथिप्रकारेण गमनमाशङ्क्य निराकरोति **श्रीमानिति** सर्वसम्पत्तियुक्तः । **विभावसौ** सूर्ये **निम्लोचति** अस्तं गच्छति सति, विशेषेण भाः कान्तिरेव धनं यस्येति योगप्राधान्यात् सूर्यवाचकोग्निवाचकश्च । अनेन सर्वेषां लौकिकवैदिककर्मणि वैयग्र्यात् स्वाज्ञानं सूचितम् । **किञ्च । निविशतां पशूनां खुररेणुभिश्छन्नयानः** आछन्नरथः । प्रवेशे पशूनां वेगो भवति ॥ ८ ॥

*भगवद्रहितत्वात्* पञ्चधा वर्णयति गोकुलम् । ऐश्वर्यरहिता अन्ये गुणाः सन्ति, वीर्यं कामे प्रतिष्ठितमिति । तत्र पशूनां कामलीलामाह **वासितार्थे** इति ।

---

श्रीपुरुषोत्तमकृतो भ्रमरगीतप्रकाशः ।

१०-४३-८ **प्राप्त** इत्यत्र । **कालस्य तथात्वादिति** तत्र भगवदागमनकालः स इति, तस्य विशेषाकारत्वादित्यर्थः ।

---

श्रीविठ्ठलेशात्मजश्रीवल्लभकृतलेखः ।

अस्तुतिरिदं कार्यं महतोऽप्रशस्तमिति । **लोकातिक्रमः** अयमेतादृश इति लोककृतोतिक्रमः । **परलोकबाधो** भगवति दोषारोपवाक्यश्रवणम् । **आदिपदेनायमेव** भक्तिमार्गबाधोपि । इदं सर्वं भगवदाज्ञायामादरादविगणय्येति भर्तृपदतात्पर्यमुक्तम् ।

**प्राप्त इत्यत्र । कालस्येति** । सन्ध्याकाले नन्दव्रजएव गमनं उचितं न तु गोपिकागृहे । तासां मिलनासम्भवादित्यर्थः । **अनेनेति** । विभावसुपदे सूर्यवाचकत्वे तन्निम्लोचे लौकिकगृहादिकार्यवैयग्र्यम् । अग्निवाचकत्वे तन्निम्लोचे अग्निहोत्रिणां बहुकर्त्तव्यमापततीति वैदिककार्यवैयग्र्यम् । **किञ्चेति** । छन्नरथत्वादपि सर्वेषां तदज्ञानमित्यर्थः । **भगवद्रहितत्वादिति** भगवतो भक्तहृदयस्थत्वेन गोकुले तदभावः । अत एव भक्तहृदये एव सर्वलीलाविष्करणमैश्वर्यं न तु गोकुले इतिभावः ।

**वासितार्थेऽभियुद्ध्यद्भिर्नादितं शुष्मिभिर्वृषैः ।**
**धावन्तीभिश्च वास्राभिरूधोभारैः स्ववत्सकान् ॥ ९ ॥**
**इतस्ततो विलङ्घद्भिर्गोवत्सैर्मण्डितं सितैः ।**
**गोदोहशब्दाभिरवं वेणूनां निःस्वनेन च ॥ १० ॥**
**गायन्तीभिश्च कर्माणि शुभानि बलकृष्णयोः ।**
**स्वलङ्कृताभिर्गोपीभिर्गोपैश्च सुविराजितम् ॥ ११ ॥**

**शुष्मिभिर्मत्तवृषैर्नादितम्** । तेन पितरोऽपि तृप्यन्तीति प्रसिद्धिः । स च नादो जयपूर्वक इति वक्तुं युद्धमाह **युद्ध्यद्भिरिति** । **वासिता** भोगयोग्या गौः यथा ऋतुकाले स्त्री, सा विरलैव भवतीति तदर्थं बहवो वृषा युद्धं कुर्वन्ति । वृषभाणामुक्त्वा गवामाह **धावन्तीभिरिति** । **वास्राः** सद्यःप्रसूता धेनवः सवत्साः ताः पुनः इतस्ततो धावन्ति वत्सादर्शनात् । अथवा वास्राभिर्धेनुभिश्च नादितं ऊधसो भारेण धावनमशक्यमिति, तथापि धावनं प्रेमाधिक्यात्, तद्वीर्यमेव स्त्रीपुरुषैर्निरूपितम् । **सवत्सकानन्यान्** स्थूलान्विल-**ङ्घद्भिः गोवत्सैर्विशेषेण** लङ्घद्भिर्मण्डितम्, वत्सकान् प्रति धावद्भिर्धेनुभिर्मण्डितम्, तानेव विलङ्घद्भिः **गोवत्सैश्च मण्डितम्** । **इतस्तत** इति **श्रीवर्णनम्**, श्वेतगोवत्सैः शोभा-तिशयो भवतीति, गोदोहशब्देन अभितो रवो यत्र । **वेणूनां निःस्वनेन च** मण्डितम्, स्वरूपतः शोभा धनं श्रीकार्यं च वीणादिवादनवद् वेणुवादनमपि श्रीकार्यमेव । चकारा-द्वीणादिवाद्यान्यपि ॥ ९–१० ॥

**गायन्तीभिश्चेति** । **बलकृष्णयोः शुभानि** कौतुकलीला**कर्माणि**, गोकुलवा-सिनामुत्सवनिरूपणार्थं कर्मणां शुभत्वं निरूपितम्, त्यक्त्वा गत इत्यपि कर्म भवति, तथापि स्वस्य हितकरं न भवति तद्व्यावृत्त्यर्थं वा, गानं च यशोरूपं स्त्रियश्चेद्गायन्ति । अन्यथा भगवद्गुणगानस्य विहितत्वात् धर्मत्वमेव स्यात् । अतो **गोपा(न्)** गोपीश्च वर्णयति, स्वलङ्कृ-ताभिः गोपीभिः गोपैश्च स्वलङ्कृतैः सुष्ठुविराजितमिति ॥ ११ ॥

---

श्रीविट्ठलेशात्मजश्रीवल्लभकृतलेखः ।

**वासितार्थ** इत्यत्र । **तेनेति** । वृषोत्सर्गप्रकरणे तथोक्तम् । एतस्य कामस्य धर्मा-विरोधित्वबोधनायेदमुक्तम् । तेन 'धर्माविरुद्धो भूतेषु कामोस्मी'तिवाक्याद्विभूतिरूपत्वमे-वेति भावः । कार्पण्याभावमप्याहुः **जयपूर्वक** इति ।

**गायन्तीभिश्चेत्यत्र** । **उत्सवनिरूपणार्थमिति** । भगवद्वियोगेपि स्वामिनीगानेनैव परमानन्दसिद्धेरिति भावः । **स्त्रियश्चेदिति** । पुरुषाणां धर्मबुद्ध्यापि गानं सम्भवतीति भावः ।

ज्ञानार्थं धर्ममाह प्रवृत्तिस्वभावमेव ज्ञानं उपयोगीति, अग्न्यर्कातिथीति ।

**अग्न्यर्कातिथिगोविप्रपितृदेवार्चनान्वितैः ।**
**धूपदीपैश्च माल्यैश्च गोपावासैर्मनोरमम् ॥ १२ ॥**

**अग्नयः** अग्निहोत्रादिना पूज्यन्ते । **अर्कः** सन्ध्यावन्दनादिभिः, **अतिथयः** पूज्यन्त एव, **गावो** व्रतादौ दाने च, तथा **विप्राः**, **पितॄणां देवतानां** च नैमित्तिके **अर्चनम्**, अनेन श्रौतः स्मार्तश्च धर्मस्तत्र वर्तत इति निरूपितम्, देवता हविर्मन्त्राश्च श्रौते निरूपिताः । **पितरो देवा** स्मार्ते श्राद्धे होमे च । तान्त्रिकधर्मोऽपि तत्र वर्तत इति ज्ञापयितुमाह **धूपदीपैश्च माल्यैश्चेति**, अर्चनायामन्वितैर्धूपादिभिर्विराजितं मनोहरं वा, व्रजस्य गृहाः सुन्दरा न भविष्यन्तीति धर्मप्रस्तावे आधारत्वेन निरूपितम् । **गोपानामावासै**रुत्तमगृहैः **मनोरमं** सर्वेषामेव मनोरतिजनकम् ॥ १२ ॥

वैराग्यं निरूपयन् गृहे उद्वेगे बहिर्निर्गतस्य महत्सौख्यं तत्रेति वदन् आह **सर्वतः पुष्पितवनमिति** ।

**सर्वतः पुष्पितवनं द्विजालिकुलनादितम् ।**
**हंसकारण्डवाकीर्णैः पद्मखण्डैश्च मण्डितम् ॥ १३ ॥**

**सर्वतः पुष्पितानि वनानि** यत्र । अत्र वनशब्देन उपवनप्रायाणि वनानि जलानि चोच्यन्ते । पुष्पाणामत्युत्कृष्टत्वाय तद्गन्धरसाभिज्ञान्निरूपयति **द्विजानामलीनां च कुलैर्नादितमिति**, जलस्थानामुत्कर्षं वक्तुं विशेषमाह **हंसैः कारण्डवैराकीर्णमिति** । मुख्यानि पद्मानीति **पद्मखण्डैः** पद्मसमूहैः **मण्डितमिति** ॥ १३ ॥

एवं व्रजं वर्णयित्वा तादृशे गतस्य पूजादिकमाह **तमागतमिति** ।

**तमागतं समागम्य कृष्णस्यानुचरं प्रियम् ।**
**नन्दः प्रीतः परिष्वज्य वासुदेवधियार्चयत् ॥ १४ ॥**
**भोजितं परमान्नेन संविष्टं कशिपौ सुखम् ।**
**गतश्रमं पर्यपृच्छत् पादसंवाहनादिभिः ॥ १५ ॥**

सम्यगासाद्याग्रे गत्वा । तत्र हेतुद्वयं **कृष्णस्यानुचरम्** । पूर्वमपि **प्रियमिति** । अतो **नन्दः** आगमनेनैव **प्रीतः** अनेन स्वशेषत्वमुक्तम् । **परिष्वज्येति** स्वसमानत्वम् ।

---

श्रीपुरुषोत्तमकृतो भ्रमरगीतप्रकाशः ।

१०-४३-१२ अग्नीत्यस्याभासे उपयोगीति भक्त्युपयोगीत्यर्थः ।

तमित्यत्र अनेनेत्यादि आगमनमात्रेण प्रीत्युक्त्या । **स्वशेषत्वम्**, स्वार्थं

---

श्रीविट्ठलेशात्मजश्रीवल्लभकृतलेखः ।

**तमागतमित्यत्र** । **स्वशेषत्वमिति** । **प्रीत** इतिपदेन तद्विषयिणी प्रीतिरुक्ता ।

**वासुदेवधिया** भगवत्सेवके भगवद्बुद्धिः कर्तव्येति तद्बुद्ध्या अर्चयति 'यो यच्छ्रद्धः स एव स' इति वाक्यात् ॥ १४ ॥

विजातीयत्वात् **परमान्नेन** पायसेन **भोजनमिति** केचित्, वस्तुतस्तूत्कृष्टेनान्नेन। ततः **कशिपौ** पल्यङ्के तूलिकायां **सुखमुपविष्टमित्युपलक्षणतया** राजोपचारा निरूपिताः। ततो **गतश्रमं** स्वयमन्येन वा **पादसंवाहनादिभिः** कुशलं **पर्यपृच्छत्** तस्य तु कुशलं स्वामिकुशलेनैवेति भगवन्तं पृच्छन् आदौ स्वमित्रं वसुदेवं पृच्छति, परिशब्दार्थः ॥ १५ ॥

तदेवाह **कच्चिदङ्गेति** ।

**कच्चिदङ्ग महाभाग सखा नः शूरनन्दनः ।**
**आस्ते कुशल्यपत्याद्यैर्युक्तो मुक्तः सुहृद्वृतः ॥ १६ ॥**

हे **अङ्ग** परमस्निग्ध भगवद्भक्तत्वात् **महाभाग नः सखा** शूरस्य **नन्दनः** वसुदेव **अपत्याद्यैर्युक्तः** बन्धनान्**मुक्तः सुहृद्भिश्च वृतः कुशल्यास्त** इति । अनेन रोहिण्याद्यास्तत्रैव गता इति ज्ञापितम् । अन्यतोपि समागताः पुत्रादयश्चेत्यपि पृष्टम् । स्वस्य सखित्वेन पुत्रस्थापनकन्यानयनादिभिः वैमनस्यं परिहृतं परमानन्दः प्रापित इति ।

---

श्रीपुरुषोत्तमकृतो भ्रमरगीतप्रकाशः ।

१०-४३-१४ प्रेषितत्वेन स्वार्थत्वम् । यद्वा **स्वो** भगवान्, तदङ्गत्वमित्यर्थः । तथा च यथा भगवदङ्गस्य कस्यचिद्दर्शने भगवदागमननिश्चयेन सुखं भवति, तथा जातमिति तथेति भावः ।

१०-४३-१५ अग्रिमे **केचिदित्यत्रारुचिबीजं** तु यत्र तद्भक्तैव सर्वेश्वरोपि तथा, तत्रायं सेवकः कथं न तथा भवेदिति ज्ञेयम् ।

अग्रिमे **परिशब्दार्थमिति** । **पर्यपृच्छदिति** शुकवाक्ये यः **परिशब्दस्तद्वाच्य**मित्यर्थः । एतेन तत्रत्य**परिशब्द**व्याख्यापेक्षा न कर्तव्येति भावः ।

१०-४३-१६ ननु सखित्वेपि विरोधोत्पत्तिसामग्रीसत्त्वे कथं तदनुत्पत्तिस्तत्राहुः **परमानन्दः प्रापित** इति । प्रद्युम्नेन भगवता पुरुषोत्तमो नन्दपुत्रत्वेन ज्ञापयित्वा प्रापित इति तथेत्यर्थः । न च मायां हत्वा भगवान् कियत्कालं दत्त इति परमानन्दः

---

श्रीविट्ठलेशात्मजश्रीवल्लभकृतलेखः ।

तेन 'फलं च पुरुषार्थत्वा'दिति प्रतितत्रशेषाध्यायोक्तन्यायेनोद्धवस्य पुंप्रीतिसाधनत्वेन फलत्वान्नन्दशेषतोक्तेत्यर्थः । स्वमध्यपातित्वमिति वा । **वस्तुतस्त्विति** । रात्रौ पायसभोजनस्य निषिद्धत्वादिति भावः ।

**शूरनन्दन** इति पितृनाम्ना तस्य स्वतो महत्वमुक्तम् । **मुक्त** इत्यनुवादोपि सर्वचिन्ताव्यावृत्त्यर्थः ॥ १६ ॥

अतः परं भगवत्कुशलं पृच्छन् आदौ प्रातीतिकं दोषं परिहरति **दिष्ट्या कंस** इति ।

**दिष्ट्या कंसो हतः पापः सानुगः स्वेन पाप्मना ।**
**साधूनां धर्मशीलानां यदूनां द्वेष्टि यः सदा ॥ १७ ॥**

**कंसो** यो **हतः** सानुगो भ्रातृसहितः **तद्दिष्ट्या**, आमयरूप इत्यशक्य इति च इन्द्रादीनामप्यशक्य इति । मातुलो भगवता हत इति । तदर्थमाह **स्वेन पाप्मना हत** इति । भगवतापि मारणपक्षे दोषाभावाय **पाप** इति । तस्योत्कटं पापमाह **साधूनां धर्मशीलानां यदूनां द्वेष्टीति** । षष्ठ्या तत्सम्बन्धि सर्वमेव द्वेष्टीति निरूपितम् । **साधूनामिति** ज्ञानमार्गोत्कर्षः, **धर्मशीलानामिति** कर्ममार्गे, **यदूनामिति** भक्तौ, अतः सन्मार्गमात्र एव तस्य द्वेष्य इति । उत्कटं पापं तद्वधश्च युक्त एवेति निरूपितम् । कार्यवशात् कादाचित्को द्वेषः नात्यन्तं विगीत इति **सदेति** ॥ १७ ॥

एवं दोषं परिहृत्य भगवद्गुणान्नवभिर्वक्तुं तस्य भक्तरक्षा तद्गुणानामाधिक्यं पराक्रमाश्चोच्यन्ते । एवं सति दशभिर्गुणातीतेन सह कुशलमुक्तं भवति । तत्र प्रथमं अस्माभिर्निरन्तरं स्मर्यते तत्स्मारकाणां बहूनां विद्यमानत्वात्तथापि किं स स्मरति न वेति स्मारकाभावात् पृच्छति **अपीति** ।

**अपि स्मरति नः कृष्णो मातरं सुहृदः सखीन् ।**
**गोपान्व्रजं चात्मनाथं गावो वृन्दावनं गिरिम् ॥ १८ ॥**

**अपिः** सम्भावनायाम् **नः** अस्मान् । **कृष्णेति** स्नेहेन नामग्रहणम् । स्मारकाभावात् कथं स्मरणमित्याशङ्क्य सम्बन्धानाह **मातरमिति** । **आदिपदै**श्चिन्तात्र संस्कारोद्बोधिका

---

श्रीपुरुषोत्तमकृतो भ्रमरगीतप्रकाशः ।

प्रापित इत्यस्य वाक्यस्यार्थ इति वक्तुं शक्यम्, उत्तरत्र भगवदपहरणेन पूर्वदत्तस्याप्यपहरणात् (न)सखित्वे तस्य हेतुत्वमुपपद्यते इति बाललीलासुखानुभावनेनेति वार्थः । ननु बन्धननिर्मोकः स्वयमेव दृष्ट इति किं तदनुवादेन इत्यत आहुः **मुक्त इतीति** ।

**अपि स्मरतीत्यत्र** । ननु सम्बन्धमात्रं न स्मारकं, सति सम्बन्धेपि बहूनामस्मरणस्यानुभवसिद्धत्वात्तत्राहुः **चिन्तेति** । सम्बन्धस्य चिन्ताजननस्वभावत्वादिति भावः ।

१०-४३-१८

---

श्रीविट्ठलेशात्मजश्रीवल्लभकृतलेखः ।

**अपि स्मरतीत्यस्याभासे, दशभिरिति** । भक्तरक्षादित्रयं त्रिभिस्त्रिभिः । पूर्वोक्तेन दोषाभाव एवं दशभिरित्यर्थः । व्याख्याने **चिन्तात्रेति** । सदृशस्य तत्राभावाददृष्टस्य च ब्रह्मण्यभावा'त्सदृशादृष्टचिन्ताद्या'इत्यत्रोक्तेषु मध्येत्र चिन्तैवोद्बोधिकेत्यर्थः ।

निरूपिता । **मातरं** यशोदाम्, **नः** इति पूर्वं स्वात्मानमुक्तवान्, बहुवचनं तु सर्वापेक्षम्, **सुहृदः** अस्मानन्यांश्च उपनन्दादीन्, **सखीन्** मित्राणि गोपालान्, **व्रजं** स्थानम्, तस्य स्मरणे हेतुः **आत्मनाथ**मिति । आत्मैव नाथो यस्येति । पाल्यमानत्वाद्गावः **गा** इत्यर्थः । क्रीडास्थानं **वृन्दावनं** विशेषलीलाधारो गोवर्द्धन इति **गिरिम्** एवमष्टौ स्मरणहेतवः ॥ १८ ॥

स्मरतीत्युत्तरं प्राप्याह **अप्यायास्यती**ति ।

**अप्यायास्यति गोविन्दः स्वजनान्सकृदीक्षितुम् ।**
**तर्हि द्रक्ष्याम तद्वक्त्रं सुनसं सुस्मितेक्षणम् ॥ १९ ॥**

यो हि यत्स्मरति सर्वदा स तदभिलाषी सन् तत्र गच्छति, अतोत्रापि सम्भावना । नन्वत्र गुणभावः तत्र च राज्यमिति कथमागमनमिति चेत्तत्राह **गोविन्द** इति । देवादिभिः सर्वैरेवात्रेन्द्रत्वेन स्थापितः । किञ्च । **स्वजनानिति** । स्वजना हि द्रष्टव्याः, यद्यपि बहुधैवागमनमुचितं **सकृद**प्यायास्यतीति परमोभिलाषो द्योतितः । आयास्यतीत्युत्तरे मनोरथमाह **तर्हि द्रक्ष्याम तद्वक्त्र**मिति । ईश्वरप्रेरणाभावात् आज्ञाभावाच्च गमनमसम्भावितम्, यतस्ते निरुद्धाः, आगमनमेव हि निरोधज्ञापकम् । **सुनस**मिति सौन्दर्यं निरूपितम् । **सुस्मित**सहित**मीक्षणं** यत्रेति तस्य सर्वे कृपादिभावा निरूपिताः । नित्यं निरीक्षितमिति प्रेमाधिक्यात् कामितमिव जातम् ॥ १९ ॥

अस्माकं तु तत्स्मरणं सर्वदैव स्मारकाणां बहुत्वादिति वक्तुं भगवत्कृतोपकारान्निर्दिशति **दावाग्ने**रिति ।

**दावाग्नेर्वातवर्षाच्च वृषसर्पाच्च रक्षिताः ।**
**दुरत्ययेभ्यो मृत्युभ्यः कृष्णेन सुमहात्मना ॥ २० ॥**

---

श्रीपुरुषोत्तमकृतो भ्रमरगीतप्रकाशः ।

**तर्ही**त्यत्र । ननु गमनसामर्थ्यस्य विद्यमानत्वात् कथमेवं श्रीनन्दैरसामर्थ्यमुद्भाव्यते तत्राहुः **ईश्वरे**त्यादि । ननु किमिति न प्रेरयति आज्ञां वा
१०-४३-१९
न दत्तवांस्तत्राहुः **यत** इत्यादि । तत्र ज्ञापकमाहुः **आगमन**मित्यादि । इदं 'स्मरतां कृष्णवीर्याणी'त्यत्र स्फुटीभविष्यति ।

---

श्रीविठ्ठलेशात्मजश्रीवल्लभकृतलेखः ।

**अप्यायास्यती**त्यत्र । **अगमनमेवे**ति । निरुद्धैर्भगवदिच्छानुरूपमेव कर्तव्यमिति भावः । **नित्यं निरीक्षित**मिति । वक्त्रमध्ये निरीक्षितमपि प्राप्तमेवातो नित्यमिति भावः ।

साक्षान्नन्देन यावद्दृष्टं तावद्गणयति विशेषतः । **दावाग्निः** कालियह्रदे । **वातवर्षाद्** गोवर्द्धनोद्धरणे **वृषोरिष्टः सर्पः** सुदर्शनः, । **चकारा**त्सर्वे श्रुताः सङ्गृहीताः । द्वितीयचकारेण वरुणाद्युपद्रवात् । किंबहुना **दुरत्ययेभ्यो मृत्युभ्यः** ये मृत्यवोऽप्रतीकार्याः कंसादयो दावानलादय एव वा । **कृष्णेन सुमहात्मनेति** फलरूपेण साधनरूपेण च, आत्मत्वादुपकारानपेक्षत्वं महत्वाद्बहूपकारत्वम् । एवमप्यप्रार्थितमपि सर्वमेव हितं करोतीति सुष्ठुत्वम् ॥ २० ॥

तर्हि कथं न गम्यत इत्याशङ्क्याह **स्मरता**मिति ।

**स्मरतां कृष्णवीर्याणि लीलापाङ्गनिरीक्षितम् ।**
**हसितं भाषितं चाङ्ग सर्वा नः शिथिलाः क्रियाः ॥ २१ ॥**

**कृष्णवीर्याणि स्मरता**मप्यस्माकं **सर्वाः क्रियाः शिथिला** भवन्ति । भगवतः स्थाने गमनं प्रेम्णा भवति अस्मदीयो भगवान् किमिति तत्र तिष्ठति गत्वा समानेय इति, तत्र वीर्याणि स्मृत्वा एतावन्तमुपकारं भगवान् कृतवान् किमस्माभिः कृतं के वा वयं कथं चैतद् धार्ष्ट्यमिति शैथिल्यं भवति । सुखार्थं चेत् कृष्णत्वात् सदानन्द इति स्मृत एव सुखं प्रयच्छति । अत उभयथापि गमनं बाधितम् । अथेन्द्रियसुखार्थं भगवान् द्रष्टव्य इति चेत्तत्राह **लीलापाङ्गनिरीक्षितमिति** लीलया यदपाङ्गनिरीक्षणं तत् स्मरतामिति, भगवतो दृष्टिश्चेद्भाव्यते तावतैव पश्यतीति बुद्ध्या चक्षुः शाम्यति । लीलापूर्वकं पश्यतीति लीलादर्शनेन प्राणास्तृप्यन्ति, अपाङ्गेन यत्पश्यति तेनैश्वर्यं प्रकटीभवद् धार्ष्ट्यं दूरीकरोति । **हसितेन** च मोहयति, **भाषितेन** श्रोत्रादि सुखं सम्पादयति, अतः सर्वार्थं प्रयत्नाद् दूरीकरोति नास्माकं गमनसामर्थ्यमिति भावः । **चकारा**त्सर्वं भगवच्चरित्रम् । **अङ्गे**त्यप्रतारणाय, **सर्वा** दैहिक्यो मानसिक्यो लौकिक्यो वैदिक्यश्च, तदर्थमुद्योगे तत्स्मरणमावश्यकम्, स्मरणे च गमनासम्भवः ॥ २१ ॥

**किञ्च** । क्षणे क्षणे वयं मुक्ताश्च भवाम इत्याह **सरिच्छैले**ति ।

**सरिच्छैलवनोद्देशान्मुकुन्दपदभूषितान् ।**
**आक्रीडानीक्षमाणानां मनो याति तदात्मताम् ॥ २२ ॥**

यत्र यत्र भगवता स्वानुभावः स्थापितः तद्दर्शनेनैव **मनस्तदात्मतां** भगवदावेशमेव प्राप्नोति तेन सुतरामेव गमनाभावः । **सरि**द्यमुना **शैला** गोवर्द्धनादयः, **वनो-**

---

श्रीविट्ठलेशात्मजश्रीवल्लभकृतलेखः ।

**स्मरतामित्यत्र** । **अपाङ्गेनेति** अस्मासु प्रकटीभवदित्यर्थः । भगवत्कटाक्षेणैव सर्वस्यैश्वर्यं सिद्ध्यतीति 'तद्भ्रूविजृम्भः परमेष्ठिधिष्ण्य'मित्यत्र निरूपितमिति भावः । **धार्ष्ट्य-मिति** मथुरागमनप्रागल्भ्यमित्यर्थः । ईश्वरस्यैव स्वगृह एव लीलारसानुभवः इति भावः ।

**देशाः** वृन्दावनभूमयः । एतेषु भगवदनुभावार्थमाह **मुकुन्दस्य** मोक्षदातुः **पदैर्भूषितानिति** । अनभिप्रेतेष्वपि कदाचित्पदानि भवन्तीति तेषु भगवतस्तात्पर्यार्थमाह **आक्रीडानिति** आसमन्तात् क्रीडास्थानभूतान् । **ईक्षमाणानामिति** नैकट्याद्दर्शनमावश्यकम्, ईक्षणमेव च मनसस्तदात्मकत्वे हेतुः ॥ २२ ॥

ननु कथमेवं सामर्थ्यमवगतं विपरीतबुद्धेर्दृढत्वादित्याशङ्क्याह **मन्ये कृष्णं च रामं चेति** ।

**मन्ये कृष्णं च रामं च प्राप्ताविह सुरोत्तमौ ।**
**सुराणां महदर्थाय गर्गस्य वचनं यथा ॥ २३ ॥**

महत्वाद्वस्तुसामर्थ्येनैव मनस्तदात्मकं भवतीति श्रुतमपि कदाचिदसम्भावनया प्रतीतिं न गृह्णाति, ममत्वनुभवः प्रतीतिं गृह्णातीति **मन्य** इत्याह **कृष्णं च रामं चेति** चकारद्वयं सर्वदेवगणसमुच्चयार्थम् । ननु तादृशयोः सुरोत्तमयोर्ब्रह्मादेरप्यधिकयोरिहागमने को हेतुरित्याशङ्क्याह **सुराणां महत्**कार्यार्थमिह स्वयमेव समागतौ नतूत्पन्नौ येन विना तत्कार्यं न भवति । ननु तर्को न प्रमाणमिति कथं निर्णेतुं शक्यते तत्राह **गर्गस्य वचनं यथेति** । **गर्गस्य** तथैव वचनं अतः प्रमाणानुभवाभ्यां देवोत्तमत्वं सिद्धमिति माहात्म्यज्ञानं युक्तमेव ॥ २३ ॥

सामर्थ्येनापि तन्निश्चीयत इत्याह **कंसमिति** त्रिभिः

**कंसं नागायुतप्राणं मल्लौ गजपतिं तथा ।**
**अवधिष्टां लीलयैव पशूनिव मृगाधिपः ॥ २४ ॥**

सात्त्विकी राजसी तामसी च लीला क्रमेण निरूपिता, **नागायुत**स्य हस्तिनां दशसहस्रस्य यावद्बलं तावान् **प्राणो** बलं यस्य, **मल्लावपि तथा** चाणूरमुष्टिकौ **नागायुतप्राणौ, गजपतिः** कुवलयापीड**स्तथा** । वस्तुतोयमपि नागायुतप्राणः, चाणूरस्तु स्वापेक्षया हीनत्वं युद्धार्थं वदन् तथोक्तवान् । दशसहस्राणां वा द्विपानां सत्त्वं बिभर्तीति तत्र योजनीयम् । अन्यथात्र **तथे**तिवचनमसङ्गतं स्यात् । ततश्चतुर्णां बलं चत्वारिंशत्सहस्रगजपरिमितं भवति, एतादृशानपि **लीलयैवावधिष्टाम्** । तर्हि मन्त्रादिसामर्थ्येन हतवानित्याशङ्क्य दृष्टान्तमाह

---

श्रीपुरुषोत्तमकृतो भ्रमरगीतप्रकाशः ।

१०-४३-२३ **मन्ये** इत्यत्र । **महत्त्वादिति** । **स्वपुत्र** इति विपरीतबुद्धेः प्रबलत्वात् । **प्रतीतिमिति** सुरोत्तमत्वनिश्चयम् ।

१०-४३-२४ **कंसमि**त्यत्र । 'ननु सहस्रद्विपसत्त्वधृ'गिति पूर्ववाक्यानुरोधेन गजपतौ नागायुतप्राणत्वं न वक्तुं शक्यमिति कथमेवमुच्यत इत्यत आह **चाणूर** इत्यादि । **तत्र योजनीयमिति** उक्तरीतिकविग्रहेण योजनीयमिति ।

**पशूनिव मृगाधिप** इति । सिंहः स्वभावत एव पशून् हन्ति, गजो हि तस्य प्रतिपक्ष्यपि भवति न तु पशवो गवादयः, अतस्ततोनन्तगुणं सामर्थ्यं भगवतः सूचितम् ॥ २४ ॥

राजसीं लीलामाह **तालत्रयमिति** ।

**तालत्रयं महासारं धनुर्यष्टिमिवेभराट् ।**
**बभञ्जैकेन हस्तेन सप्ताहमदधाद्गिरिम् ॥ २५ ॥**

**तालवृक्षस्य** शतत्रयहस्तपरिमितस्य यावान् विस्तारः, **तालानां** त्रयं यत्रेति । **महासारमिति** । अतिदृढम् । **धनुर्यष्टिमिति** । धनुरेव यष्टिरूपमनम्रम् । अनम्रस्य भङ्गः सुतरामेवाशक्यः, अत्रापि प्रकारान्तरेण भङ्गाभावाय दृष्टान्तः **इवेभराडिति** । यष्टिमिव वा इभराडिति । यष्टिरपि इक्षुः । 'यथेक्षुदण्डं मदकरी'ति वाक्यैकवाक्यतया, तत्रापि **एकेनैव हस्तेन बभञ्ज** । एकेनैव हस्तेनेत्यग्रेऽपि सम्बध्यते । **सप्ताहमदधाद्गिरिमिति** ॥२५॥

तामसीमाह **प्रलम्ब** इति

**प्रलम्बो धेनुकोऽरिष्टस्तृणावर्तो बकादयः ।**
**दैत्याः सुराऽसुरजितो हता येनेह लीलया ॥ २६ ॥**

नात्र क्रमो विवक्षितः, आदिशब्देन वत्सादयः सर्व एव **दैत्याः** मानुषैरवध्या । किञ्च । **सुरासुरजितः**, सुरा असुराश्च जिता यैः, ते सर्वे अस्मत्समक्षमेव **लीलयैव हताः** । अतः सामर्थ्येनापि देवोत्तमत्वमेवेति निर्द्धारः ॥ २६ ॥

एवं स्निग्धस्य भगवद्गुणानुवर्णने यद्भाव्यं तज्जातमित्याह **इतीति** ।

श्रीशुक उवाच—**इति संस्मृत्य संस्मृत्य नन्दः कृष्णानुरक्तधीः ।**
**अत्युत्कण्ठोऽभवत्तूष्णीं प्रेमप्रसरविह्वलः ॥ २७ ॥**

अयमर्थः । नोद्धवो बोधितः किन्तु पदार्थस्मरणाभिलाष एवेत्युत्तमाधिकारं बोधयितुं **संस्मृत्य संस्मृत्येत्युक्तम्**, न तूक्त्वोक्त्वा । यत्रैव स्मरणानन्तरं वचने असामर्थ्यं बुद्धेरनुरागः मनस उत्कण्ठा तत्रैव **तूष्णीं** स्थित इति । स्मरणतूष्णींभावयोर्मध्ये

---

श्रीपुरुषोत्तमकृतो भ्रमरगीतप्रकाशः ।

१०-४३-२५ **तालत्रयमित्यत्र** । यष्टेरिक्षुत्वस्मारणेन भगवतस्तद्भञ्जने आयासलेशोपि नास्तीति व्यज्यते ।

---

श्रीविट्ठलेशात्मजश्रीवल्लभकृतलेखः ।

**इति संस्मृत्येत्यत्र । किन्तु पदार्थेति** । पदार्थो भगवान् तत्कृतं यत्स्मरणं तदभिलाष इत्यर्थः । भगवता स्मरणे कृते सति स्वस्य तत्र गमनेन भगवतो वात्रागमनेन दर्शनं भवेदिति भावः ।

भावद्वयमवान्तरव्यापाररूपमुत्पन्नमित्याह **कृष्णानुरक्तधीरत्युत्कण्ठ** इति । चित्तस्य स्मरणं बुद्धेरनुरागः मनस उत्कण्ठा, मनश्च वाचः पूर्वरूपम्, तत्र अनुरक्तबुद्ध्या, औत्कण्ठ्येन च ज्ञानक्रियारूपाभ्यां शब्दोत्पत्तिप्रतिबन्धात्**तूष्णीमभवत्** । तर्हि तयोः प्रतिबन्धकत्वेन न पुरुषार्थपर्यवसायित्वमित्याशङ्क्य तयोः स्वतन्त्रकार्यमाह **प्रेमप्रसरेण** प्रेमप्रचारेण **विह्वलो** जात इति ॥ २७ ॥

एवं यशोदापि जातेत्याह **यशोदेति** ।

**यशोदा वर्ण्यमानानि पुत्रस्य चरितानि च ।**
**शृण्वन्त्यश्रूण्यवास्राक्षीत्स्नेहस्नुतपयोधरा ॥ २८ ॥**

नन्देनैव **वर्ण्यमानानि** भगवतश्**चरितानि शृण्वन्ती च**कारात्स्मरन्ती च अन्तः प्रेमपूर्णा **अश्रूणि नेत्रयोरस्राक्षीत्** विरहव्याकुला जाता । अन्तर्भगवदावेशेन दृढप्रेम्णा **स्नुतपयोधरा** जाता । यथा नन्दे आवेशो विरहश्च एवमस्यामपि द्वयं वर्णितम् । ॥२८॥

उभयेनापि अनुराग एव भगवति परमप्रेमात्मको निरूपितो भवति । परमयं लौकिकः, अयं च ज्ञानेनालौकिकः कर्तव्यः तत्कर्तुं प्रेषित उद्धव इति तदुपयोगि सर्वमाहेत्याह **तयोरित्थमिति** ।

**तयोरित्थं भगवति कृष्णे नन्दयशोदयोः ।**
**वीक्ष्यानुरागं परमं नन्दमाहोद्धवो मुदा ॥ २९ ॥**

उभयोरपि, भक्तौ मुख्यत्वान्नन्दस्य प्रथमतो नन्दग्रहणम्, सहजः सम्बन्धो लौकिको नास्तीति न यशोदायां विशेषः । **नन्दयशोदयोः भगवति कृष्णे** आविर्भूते सदानन्दे **परममनुरागं** सर्वक्रियात्याजनपूर्वकसर्वभावभगवद्ग्रहणात्मकं **वीक्ष्य**, यशोदा कदाचिल्लज्जिता भविष्यतीति **नन्दमाह** यतः स **उद्धवः** उत्सवात्मकः तस्मिन्नागते शोकांशेन न भाव्यमिति **मुदेति** । भगवद्भक्तान् दृष्ट्वा सम्भाषणेनाहमपि कृतार्थो भविष्यामीति वा॥२९॥

स्नेहमभिनन्द्य विषयस्यालौकिकत्वं बोधयति येन माहात्म्यज्ञानपूर्वकः सर्वतोधिकः स्नेहो भवति । **युवामिति** ।

उद्धव उवाच—**युवां श्लाघ्यतमौ नूनं देहिनामिह मानद ।**
**नारायणेऽखिलगुरौ यत्कृता मतिरीदृशी ॥ ३० ॥**

---

श्रीपुरुषोत्तमकृतो भ्रमरगीतप्रकाशः ।

**तयोरित्यत्र** । **मुख्यत्वान्नन्दस्येति** वरयाचनस्य नन्दकृतत्वादिति भावः । उपसर्जनत्वेन यशोदापदस्य पूर्वनिपातो यद्यप्यपेक्षित इत्यभ्यर्हितत्वबोधनाय तथोक्तम् ।

१०-४३-२९

प्रथमतोभिनन्दनं **देहिनां** मध्ये तत्रापीह भूमौ **युवां** यशोदानन्दौ **श्लाघ्यतमौ**, सत्कर्मणा श्लाघ्या भवन्ति । ततोपि ज्ञानेन ततोपि भक्त्या, भक्तावपि परमप्रेम सर्वोत्कृष्टम्, प्रमाणात्तु प्रमेयबलमधिकं तेन स्वतन्त्रभक्त्यपेक्षयापीयं प्रमेयभक्तिः रसाला, अत आह **नूनमिति** । **मानदेति** सम्बोधनं मह्यं मानं प्रयच्छसीति मद्वाक्यमपि सत्यतया स्वीकुर्वित्यर्थः । ननु पुत्रस्नेहोऽतिशयः कथं स्तूयते तत्राह **नारायण** इति, अयं हि नारायणो मूलपुरुषः । नारायणशब्दोत्र पुरुषोत्तमवाची । **अखिलगुराविति**, प्रमाणरूपोपि । सर्ववेदवक्ता नारायणः पुरुषोत्तम एवेति । अतः सर्वशास्त्रार्थरूपे प्रमेयबलवति **यद्यस्मात्कारणाद्** एतादृशी **मतिः कृता** । देवोत्तमत्वं तु नन्देनोत्कटकोटिकसम्भावनया ज्ञातमेव, तस्मादसम्भावना न भविष्यतीति तत्र पुरुषोत्तमत्वं बोधितवान् ॥ ३० ॥

अतः परं तस्मादधिको विषयो नास्ति भक्तेरप्यधिकं कर्तव्यं नास्तीति वक्तव्यम् । तत्र प्रथमं भगवतः सकाशादन्यो महान्नास्तीत्याह **एतौ हीति द्वाभ्याम्** ।

**एतौ हि विश्वस्य च बीजयोनी**
**रामो मुकुन्दः पुरुषः प्रधानम् ।**
**अन्वीय भूतेषु विलक्षणस्य**
**ज्ञानस्य चेशात इमौ पुराणौ ॥ ३१ ॥**

धर्म्युत्कर्षेण धर्मोत्कर्षेण च माहात्म्यं द्विविधमिति । तत्र प्रथमं स्वरूपोत्कर्षमाह । एक एव ताभ्यां ज्ञात इति आवेशिनमपि ज्ञापयितुं तुल्यतया सम्बन्धं च दूरीकर्तुं कृष्णरामौ निर्दिशति । **एतौ हि** निश्चयेन **विश्वस्य बीजयोनी** समवायिकारणं निमित्तकारणं

---

श्रीपुरुषोत्तमकृतो भ्रमरगीतप्रकाशः ।

**एतावि**त्यत्र । ननु भगवत एव स्वरूपोत्कर्षस्य वक्तव्यत्वे द्वयोर्निर्देशो न सङ्गच्छत इत्यत आहुः **एक एवेत्यादि** । **ज्ञात** इति उत्कृष्टत्वेन ज्ञातः ।
१०-४३-३१ **ज्ञापयितुमिति** तत्त्वेन ज्ञापयितुम् । **तुल्यतया सम्बन्धमिति** लौकिकतुल्यतया पुत्रत्वादिसम्बन्धमित्यर्थः । ननु बीजस्य समवायित्वे कार्यस्य तदपे-

---

श्रीविट्ठलेशात्मजश्रीवल्लभकृतलेखः ।

**युवामित्यत्र ततोपीति** ज्ञानेन श्लाघ्यतरा भक्त्या श्लाघ्यतमा भवन्तीत्यर्थः ॥ **एतौ हीत्यत्र एक एवेति** ताभ्यां **ज्ञातः** । उपकारित्वेनेति शेषः । पुत्रत्वप्रकारकलौकिकस्नेहवत्वात्कृष्ण एवोपकारित्वेन ज्ञातः । अत एव दावाग्नेरिति श्लोके कृष्णेनेत्येवोक्तम् । तत्र लौकिकभावनिराकरणे रामोपि भगवदावेशाद्भगवानिव ज्ञातो भवत्यतोत्रोभयोरुक्तिरित्यर्थः । **तुल्यतयेति** अलौकिकभावे कृष्णस्तदावेशी रामश्च तुल्य इति लौकिकसम्बन्धं दूरीकर्तुमित्यर्थः । **तत्रेति** बीज इत्यर्थः । बीजयोनिरूपस्य

च । बीजं हि समवायिकारणं, तत्र भगवत्सामर्थ्येन सजातीयत्वमापद्यमानाः भूम्यवयवाः पुष्णन्ति, ततो वर्धते, सजातीयैव योनिरपि मृग्यते, विजातीयायां नोत्पद्यते, उत्पन्नमप्यन्यथा स्यात्, एतदुभयमेव दृष्टं कारणम् । अन्यत्तु जलान्नादिकं साधनपोषकत्वेन । तत्र यद्येकप्रकारेण भवेतां वृद्धिह्रासौ आविर्भावतिरोभावौ न सङ्गच्छेयाताम्, ततो भगवानुभयात्मको भवति । लोके तु उभयोः साधका अन्येपि मृग्यन्ते, अत्र भगवानेवेति तदेकप्रयोजनाय च तथाजात इति न सहकार्यपेक्षा । अत एव ब्रह्म प्रथमं प्रकृतिपुरुषरूपेण

श्रीपुरुषोत्तमकृतो भ्रमरगीतप्रकाशः ।

क्षया गुरुत्वपरिमाणाद्याधिक्यं न स्यादित्यत आहुः तत्रेत्यादि तत्र बीजे । तथा चोक्तदोषाभावान्न तावन्मात्रस्य समवायित्वक्षतिरित्यर्थः । नन्वेवं वृद्ध्या कार्यमहत्त्वादिसिद्धौ योनेर्निमित्तत्वं न स्यादित्यपेक्षायां भगवदिच्छायाः प्रकारं बोधयितुं दृष्टानुरोधेनोभयोः कारणत्वं समर्थयन्ति सजातीयेत्यादि । अन्यथा स्यादिति । योन्यभावे योनिवैजात्ये च कार्यं प्रत्युत विनाशि स्यात् योनिबीजविलक्षणं वा स्यात् । तथा च दर्शनानुरोधाद्भगवदिच्छयोभयोरपि कारणत्वे विप्रतिपत्तिर्न कार्येत्यर्थः । नन्वेवं सति जलाद्यवयवानामपि कारणत्वमस्त्विति शङ्कायां तेषामन्यथासिद्धत्वमाहुः अन्यदित्यादि । साधनं बीजयोन्यात्मकं कार्योत्पत्त्यनन्तरमपि तैः कार्यपोषणस्य दृष्टत्वात् तेन तथेतिभावः । नन्वेवं दृष्टानुरोधे सशरीरस्य पोषकत्वं लोकानुरोधि शास्त्रे च दृष्टमित्युभयोः समवायित्वमेवाङ्गीकार्यमित्याशङ्कायामाहुः तत्र यदीत्यादि । तत्रेति विश्वे । उभयात्मक इति बीजयोनिभूतसमवायिनिमित्तात्मकः । ननूक्तकार्यार्थं रूपभेदो न युक्तः लोकन्यायेन सहकार्यान्तरादपि वृद्ध्यादिसिद्धेरित्यत आहुः लोके त्वित्यादि । अत्रेति सृष्टौ । तथा च तदानीमन्याभावाद्विश्वार्थमेव बीजयोनिभावतः प्राकट्येनासाधारणत्वाच्च नात्र लोकन्यायेन सहकार्यपेक्षा, लौकिकानां साधारणत्वेनात्र तद्वैलक्षण्यादिति भावः । नन्वादौ सहकार्यभावे मानाभावाद्योनिसामर्थ्येनापि स्वरूपोत्कर्षस्य सिद्धेरुक्तं न साधीय इत्याकाङ्क्षायां तत्र मानं बोधयितुमाहुः अत एवेत्यादि । अत एव सहकार्यभावादेव । तथा

श्रीविठ्ठलेशात्मजश्रीवल्लभकृतलेखः ।

भगवत उभयरूपेणाविर्भावे हेतुमाहुः । तत्र यदीति । एकत्वेनैवाविर्भावे बीजशक्तेर्वृद्धौ योनिशक्तेरपि वृद्धिर्योनिशक्तेर्वृद्धौ बीजशक्तेरपि वृद्धिस्तत्तच्छक्तेर्ह्रासे तत्तच्छक्तेर्ह्रास इति वृद्धिर्ह्रासौ एकप्रकारेण भवेताम् । तदा कदाचित्क्वचिद्बीजधर्मतिरोभावेन योनिधर्माविर्भावो योनिधर्मतिरोभावेन बीजधर्माविर्भाव इति वैचित्र्यं न स्यादित्यर्थः । तदेकप्रयोजनायेति मोक्षाभ्युदयैकप्रयोजनायोभयरूपेण जात इति सहकारिविरहेपि कार्यं साधयति, अन्यथा प्राकट्यं निःप्रयोजनकं स्यादिति भावः । अत एवेति । यतः सर्वेषामेकप्रकारेण वृद्धि-

१ षाट्कौशिकत्वमिति पाठः । २ पारार्थ्य इति पाठः ।

भवति । एवं सति युक्तिर्ब्रह्मणि सङ्गच्छते । ब्रह्मवादे तु तदेव सर्वशक्तियुतं क्रमेणैवाभिव्यक्तो भविष्यामीति प्रथमसृष्टौ तादृशमुत्पाद्य क्षयवृद्ध्यनपेक्षं वा तादृशमेवोत्पाद्य पश्चाल्लोके बहूपकारसिद्ध्यर्थमेवैकैकस्य बहुधोपयोगाय शक्तिसमूहं विभज्य, बीजयोन्यादिभावेन वस्तूनि परिकल्प्य स्थापितवानिति विशेषः । उभयथापि पश्चात् प्रकारद्वयं सिद्धमिति मन्तव्यम् ।

---

श्रीपुरुषोत्तमकृतो भ्रमरगीतप्रकाशः ।

च 'तन्मायाफलरूपेण केवलं निर्विकल्पितम् । वाङ्मनोगोचरातीतं द्विधा समभवद् बृहत्' इति वाक्यान्नोक्तेर्थे विप्रतिपत्तव्यमिति भावः । नन्वेवं प्रकारेण प्रकृतिपुरुषभावेन सृष्टौ भवने किं प्रयोजनमत आहुः **एवं सतीति** । पुराणोक्तप्रकारेण प्रकृतिपुरुषभावेन सृष्टौ सत्कार्यवादोक्तयुक्तिर्ब्रह्मणि सङ्गता भवति, अन्यथा स वादोऽप्रामाणिकः स्यादिति मन्वादिपरिगृहीततदनुग्रहाय[1] तथा भवनमित्यर्थः । ननु उत्तरकाण्डसिद्धाद् ब्रह्मवादादयं वादो विरुद्ध्यत इति कथमयमङ्गीकार्य इत्याकाङ्क्षायामाहुः **ब्रह्मवादे** त्वित्यादि । **क्रमेणेति** आकाशादिक्रमेण । **तादृशमिति** सर्वशक्तियुतं विश्वपुरुषम् । **क्षयवृद्ध्यनपेक्षमिति** 'एतस्माज्जायते प्राण' इति श्रुत्युक्तसाक्षात्सृष्टिप्रकारेण तदनपेक्षम् । **बीजयोन्यादिभावेनेति** 'वडवेतराभवदश्ववृष इतर' इत्यादिश्रुतिबोधितेन । तथा चावान्तरविशेषो यथोत्तरकाण्डे न दोषावहस्तथायमपीति न विरोध इति भावः । ननु तत्र श्रुत्योः समानबलत्वाद्यवस्थायां न दोषः, प्रकृते तु दौर्बल्याद्विरोधो वज्रलिप्तो दोषः इत्यत आहुः **उभयथेत्यादि** । **इति मन्तव्यमिति** अतो हेतोर्युक्तिभिरनुचिन्तनीयम् । तथा च प्रतिज्ञादृष्टान्तानुपरोधस्य पश्चात् प्रकारद्वयस्य क्रमस्य चोभयत्र **प्राप्तौ** स्मार्तानङ्गीकारे स्मृत्यनवकाशदोषप्रसङ्गाङ्गीकारे चानुभवानुग्रह इति सूक्ष्मेक्षिकया विभाव्यानुभवेनैव विरोधः परिहरणीयः इति भावः । ननु भवत्वेवम्, तथाप्यत्रोत्कर्षमात्रस्य बोधनीयत्वात्तस्य मोक्षदातृत्वमात्रेणैव सिद्धेः सृष्टिबीजयोनित्वबोधनस्य किं प्रयोजनमत आहुः

---

श्रीविट्ठलेशात्मजश्रीवल्लभकृतलेखः ।

-ह्रासवैचित्र्यं न भवति अत एवेत्यर्थः । **एवंसतीति** । विचित्ररूपेणाविर्भावे सतीत्यर्थः । तर्हि ब्रह्मवादे कथं वैचित्र्यमित्यत आहुः । **ब्रह्मवादे** त्विति । **तादृशमिति** कारणस्यैकत्वेपि स्वत एव वृद्धिह्रासयुतमित्यर्थः । **क्षयेति** । वृद्धिह्रासावनपेक्ष्य स्वत एव विचित्रमित्यर्थः । 'कदाचित्सर्वमात्मैव भवती'ति पक्षोयम् । **उभयथापीति** भगवदीयसाङ्ख्ये प्रथमं प्रकृतिपुरुषत्वेन योनिबीजविभागस्ततः सृष्टिः । ब्रह्मवादे स्वत एव प्रथमसृष्टिस्ततो योनिबीजविभागस्ततः प्रवाहरूपा सृष्टिरित्यर्थः । **पश्चादिति** 'आसीज्ज्ञानमथो

१ अनुगृहीतत्त्वे इति पाठः । २ तौल्यमिति पाठः ।

अनुभवसिद्धत्वात् । तथात्रापि मोक्षसृष्ट्यादिचतुर्विधपुरुषार्थान् साधयितुं सर्वस्यापि सर्वं मा भवत्विति स्वशक्तिं विभज्य मोक्षभक्त्योः स्वयं बीजं योनिश्च रामः । सृष्ट्यादौ तु विपरीतामिति । उभावपि योनिबीजभावेन सर्वलोकानां हितार्थमवतीर्णौ । अत एकस्यैव हितार्थत्वेन ग्रहणे न कोपि पुरुषार्थः सिद्ध्येत् । अत एव सर्वत्राभ्युदयफलेषु रामस्य प्राधान्यम्, भगवतः सहभावमात्रम् । क्वचिद्रामस्य प्राधान्यं प्रथमनिर्देशेन । साक्षान् महती शक्तिः कृष्ण एवेति न क्वापि सहभावो निरूपितः । निःश्रेयसे तु रामस्य सहभावः साधारण्ये द्वयोस्तुल्यतया निरूपणमिति सर्वत्रैव विमर्शः । अतो भगवतो जगत्का-

---

श्रीपुरुषोत्तमकृतो भ्रमरगीतप्रकाशः ।

तथेत्यारभ्य **निरूपयती**त्यन्तम् । **मोक्षेत्यादि** मोक्षश्च सृष्ट्यादिश्च मोक्षसृष्ट्यादी तयोः सम्बन्धिनस्तानित्यर्थः । अत्रावान्तरसन्दर्भः सिध्येदित्यन्तः । तस्य शास्त्राभिप्रेतत्वे गमकमाहुः **अत एव सर्वत्रे**त्यादि । **अत एवे**ति अतः सृष्ट्यादिसम्बन्धिपुरुषार्थेषु रामस्य बीजत्वादेवेत्यर्थः । अभ्युदयफले रामप्राधान्योदाहरणं तालवनप्रवेशे 'बलः प्रविश्य बाहुभ्या'मित्यादिनोक्तलीलायाम् । नन्वभ्युदयफलत्वावच्छेदेन यदि रामस्य प्राधान्यम्, तदा तादृशस्य स्थलमात्रे भगवतः सहभाव उच्येत, स तु क्वचिद्व्यभिचरतीत्यतो नैवमिति शङ्कायामाहुः **क्वचिदि**त्यादि । तदुदाहरणमपि तत्रैव 'राम राम महासत्त्व कृष्ण दुष्टनिबर्हण। इतो विदूरे सुमहद्वनं तालालिसङ्कुल'मिति श्रीदामादिवाक्ये । नन्वेवं सति **न्यायतौल्याद्भ**गवतोपि क्वचिदभ्युदयफले सहभाव उच्येत, स तु न दृश्यते, अतो नैवं शास्त्राशय इत्यत आहुः **साक्षादित्यादि**। तथा च निरूपणाभावेप्युन्नेय इति भावः। **निःश्रेयसे त्विति**। तदुदाहरणं त्वक्रूरप्रसङ्गे द्रष्टव्यम् । निःश्रेयसपदं भक्तेरप्युपलक्षणम् । तदुदाहरणं तु 'सहरामो व्रजस्त्रीणां चिक्रीडे जनयन्मुदम्'इत्यादौ द्रष्टव्यम् । **साधारण्य** इति

---

श्रीविट्ठलेशात्मजश्रीवल्लभकृतलेखः ।

ह्यर्थ एकमेवाविकल्पित'मित्यत्रोक्तात्स्वरूपैक्यात्पश्चादित्यर्थः । **मोक्षसृष्ट्यादी**ति सृष्टिरभ्युदयः काम इत्यर्थः । तद्गुणसंविज्ञानेन मोक्षकामादिचतुर्विधपुरुषार्थानित्यर्थः । अत्र मोक्षस्य भगवदेकसाध्यत्वेनान्यानधीनत्वज्ञापनाय विपरीतः क्रम उक्तः । **मोक्षभक्त्योरिति** मोक्षभक्त्योर्दातव्ययोः 'सोश्नुते सर्वान्कामा'निति सायुज्योपयोग्यलौकिकशरीराणां 'सर्वाभेदादन्यत्रेमे'इति न्यायेन पुरुषोत्तमात्मकत्वात्स्वयं बीजमुपादानकारणम् । तत्राक्षरज्ञानस्य स्वरूपयोग्यता सम्पादकत्वाद्रामोऽक्षरात्मको योनिर्निमित्तमात्रमित्यर्थः । **सृष्ट्यादाविति** कामादौ दातव्ये तदुपयोगिशरीराणामक्षरात्मकत्वाद्राम उपादानकारणम् ।

---

१ शयनावतारादिति पाठः ।

रणत्वं मोक्षदातृत्वं च निरूपयन् एवं निरूपयति । एषा युक्तिर्हिशब्देनोच्यते । एतौ कृष्णरामौ विश्वस्य बीजयोनी उभावपि । तौ गणयति **रामो मुकुन्द** इति । नाम्ना-अभ्युदयनिःश्रेयसफलं ज्ञापितम् । **एतावि**ति भक्त्या प्रादुर्भूतौ प्रदर्शयन्निवाह 'द्रष्टुमेष्याव' इत्यनेन सत्यं निरूपितम् । द्विरूपता किमर्थेत्याशङ्क्य दृष्टान्तमिव वदन् स्वरूपद्वयं निर्दिशति **पुरुषः प्रधान**मिति । अनयोः प्रकृते विशेषमाह **अन्वीय** सर्वेषु **भूतेषु विलक्षणस्य** विः काल एव लक्षणं यस्य तस्याभ्युदयस्येशानौ । तथा **ज्ञानस्य** च मोक्षसाधकस्य विलक्षणत्वं प्रापञ्चिकाद्वैलक्षण्यं चकाराद्भक्तेरपीशाते समर्थौ भवतः । एतदर्थमेवैतौ प्रादुर्भूतावित्यर्थः । एवं हि सति ब्रह्म भगवान् कार्यमिव एतत्प्रयोजनकावेतावाविर्भावितावििति शङ्का स्यात् तद्व्यावृत्त्यर्थमाह **इमौ पुराणा**विति । एतावेवंभूतौ पूर्वसिद्धावेवानन्तमूर्तित्वाद्भगवतः ॥ ३१ ॥

एवं स्वरूपोत्कर्षमुक्त्वा धर्मोत्कर्षमाह **यस्मिञ्जन** इति ।

**यस्मिञ्जनः प्राणवियोगकाले**
**क्षणं समावेश्य मनो विशुद्धम् ।**
**निर्हृत्य कर्माशयमाशु याति**
**परां गतिं ब्रह्ममयोऽर्कवर्णः ॥ ३२ ॥**

यद्यपि परःसहस्रं भगवद्धर्माः सन्ति, तेषां माहात्म्यं च भगवत एव, धर्मधर्मिणोरभेदात् भगवानेव धर्मरूपेण भवतीति सिद्धान्तात्, सिद्धान् धर्मान् परित्यज्य प्रमाणबलेन भावकेन मनसा परिकल्पितं भगवद्रूपं सर्वेषां स्वाधीनं मत्वा तस्य माहात्म्यमाह । **यस्मिन्** मानसे रूपे **जनः** प्राणी **प्राणवियोगकाले क्षणं मनो विशुद्धं समावेश्य कर्माशयं निर्हृत्य**

---

श्रीपुरुषोत्तमकृतो भ्रमरगीतप्रकाशः ।

सामान्यतो निरूपणे । तदुदाहरणं च रिङ्गणलीलादौ । नन्वेवमेवात्र श्रीमदुद्धवाशय इत्यत्र किं गमकमत आहुः । एषेत्यादि । द्रष्टुमित्यादि, इदं वाक्यम् । **अनेन** प्रादुर्भूतप्रदर्शनेनेत्यर्थः । **किमर्थे**ति । ननु '**एष्याम**' इति बहुवचनस्य एकत्वविवक्षायामप्यनुशासनसिद्धत्वेनैकस्यागमनेपि वाक्यसत्यत्वसिद्धेर्द्विरूपतात्र किमर्थेत्यर्थः । **पुरुष** इत्यादि । तथा च यथा शक्तिविभागात् सृष्ट्यर्थं द्विरूपता, तथात्र द्विविधफलदानार्थं **से**त्यर्थः । तदेव विशदयन्ति **अनयो**रित्यादिना विलक्षणपदेनाभ्युदयबोधस्य तात्पर्यमाहुः **विलक्षणत्व**मित्यादि ।

---

श्रीविट्ठलेशात्मजश्रीवल्लभकृतलेखः ।

भगवांस्तु दातृत्वेन निमित्तकारणमित्यर्थः । **प्रापञ्चिका**दिति । प्रापञ्चिकादभ्युदयाद्भगवद्दत्ताभ्युदयस्य वैलक्षण्यं ज्ञापयितुं विलक्षणपदेन निर्देशः । **एवं हीति** । ब्रह्म भगवान् भिन्नः कारणरूपः । एतौ कार्यमिव प्रपञ्चरूपमिवाविर्भूतावििति शङ्केत्यर्थः ।

परां गतिं याति । साधनान्तरनिरपेक्षत्वज्ञापनाय **यस्मिन्** मानसे रूप इत्युक्तम् । **जन** इति सामान्यतः, न तु ब्राह्मण ऋषिर्वा । तत्रापि **प्राणवियोगकाले** सर्वेन्द्रियविकले अशुद्धावस्थायां **क्षणं** चित्तं **समावेश्य,** न तु बहुकालम्,नापि वाग्देहयोरनुवृत्तिः । तदपि रूपं सर्वफलसाधकमिति **विशुद्ध**मित्युक्तम् । अन्यथा कामनायां तदेव फलिष्यतीति । विशेषेण शुद्धिः कामनाभाव एव । ननु 'यदा सर्वे प्रलीयन्ते कामा येऽस्य हृदि स्थिताः । अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुत' इति श्रुतेः कामनाभाव एव पुरुषार्थसिद्धौ निष्कामं सदात्मगात्म्येव भवतीति ज्ञानेपि सिद्धे किं भगवद्धर्ममाहात्म्यमिति चेत् । सत्यम् । नात्र निष्कामता साधनान्तरेण भवतीति निरूप्यते, येनान्यथासिद्धं स्यात्, किन्तु **क्षणं** सम्यगावेशनेनैव **मनो** विशुद्धमपि भवति । ततः **कर्माशयं** कर्माण्याशरतेस्मिन्निति बीजात्मकं सङ्घातं च निवर्त्य स्वाभिमानपरित्यागेन मृतमिव तदिति ज्वालनामिव तं कारणभूतमपि सङ्घातं दग्ध्वा उत्तरत्र गमने साधनान्तरमप्यनपेक्ष्य **परां गतिं** स्वरूपेणैव **याति** । तत्रापि न सायुज्यार्थं जीवभावेन गमनम्, किन्तु **ब्रह्ममयः** 'ब्रह्मैव सन् ब्रह्माप्येती'त्येषा गतिर्भवति । तत्रापि भगवद्धर्माणामपि सर्वेषां स्फूर्तिर्भवतीति ज्ञापयितुं **अर्कवर्ण** इति । तस्माद्यावान् पुरुषार्थः सर्वैरेव ज्ञानादिभिर्भवति क्रमेणापि साध्यं सकृदेव च भवतीति भगवद्धर्माणां माहात्म्यमुक्तम् ॥ ३२ ॥

एतादृशे च भगवत्स्वरूपे यैः सर्वात्मना सर्वदा सर्वभावेन मनो विहितम्, तेषां फले किं वक्तव्यमित्याह **तस्मिन् भवन्ताविति** ।

**तस्मिन् भवन्तावखिलात्महेतौ**
**नारायणे कारणमर्त्यमूर्तौ ।**
**भावं विधत्तां नितरां महात्मन्**
**किं वावशिष्टं युवयोः सुकृत्यम् ॥ ३३ ॥**

यादृशं हि उपास्यं चिन्त्यं ध्येयं वा तादृश एव भवतीति सर्वजनीनम् । भगवांश्च सर्वफलरूपः । अतो नावशिष्यत इति वक्तुं सर्वहेतुत्वमाह **अखिलात्महेता**विति ।

---

श्रीपुरुषोत्तमकृतो भ्रमरगीतप्रकाशः ।

**तस्मिन्नित्यस्याभासे** । **सर्वात्मनेति** । सर्वैर्बाह्याभ्यन्तरसाधनैरित्यर्थः । **उपास्य**मिति उपासीतेति विधिप्राप्तं । लौकिक्याः चिन्तायाः विषयं **चिन्त्यम्** ।
१०-४३-३३ योगशास्त्रे तु ध्यानविषयत्वे बोधितमित्यवान्तरभेदः । **सर्वजनीनमिति** ।

---

श्रीविठ्ठलेशात्मजश्रीवल्लभकृतलेखः ।

**यस्मिन् जन इत्यत्र** । **तदपीति** । सर्वफलसाधकं भवतीति हेतोः कामना सम्भवति तद्व्यावृत्त्यर्थं मनसो विशुद्धत्वमुक्तमित्यर्थः । **अन्यथेत्यस्यैवं** विवरणं **कामनाया**मिति । **तदेवेति** । कामितमेवेत्यर्थः । **बीजात्मकमिति** । लिङ्गशरीरमित्यर्थः ।

अखिलानामात्मा हेतुश्च, 'सर्वस्यात्मा भवति सर्वमस्यान्नं' भवतीति फलं सिध्यति । किञ्च । विकृतेऽपि हेतुरात्मेति च वक्तुं **नारायण** इत्याह। अयं पुरुषो नारायणः । किञ्च । कारणार्थं सर्वेषामुद्धारार्थमेव कपटवेशमपि कृतवान् । अनेन फलावश्यकत्वं द्योतितम् । प्रायिकत्वशङ्काव्यावृत्त्यर्थम्, यतः 'लोकस्य व्यसनापनोदनपरो दासस्य किं न क्षम' इति सिद्धान्तो भवति । तत्रापि **नितरां भावं विधत्ताम्**, रसत्वव्यावृत्त्यर्थं भावपदम् । पुत्रत्वेपि देवत्वप्रतीतेः, तथापि फले स्वरूपयोग्यताप्यपेक्ष्यत इति यथा मर्यादायां ब्राह्मणानामेव मुक्तिः, पुष्टौ वा वैकुण्ठेषु पक्ष्यादिरूपत्वम्, तद्व्यावृत्त्यर्थमाह **महात्मन्निति** । महात्मत्वं भगवदागमनान्निश्चीयते । अतः युवयोः कृत्यं नावशिष्यते । अनेनेयमेवावस्था पुरुषार्थ इति ज्ञापितम् ॥ ३३ ॥

एवं विषयं साधनं चाभिनन्द्य लौकिकभावेन खेदं वारयितुमाह **आगमिष्यतीति** ।

**आगमिष्यत्यदीर्घेण कालेन व्रजमच्युतः ।**
**प्रियं विधास्यते पित्रोर्भगवान् सात्वतां पतिः ॥ ३४ ॥**

---

श्रीपुरुषोत्तमकृतो भ्रमरगीतप्रकाशः ।

पेशस्कारिणि तथादर्शनात्तथेत्यर्थः । **इति फलमिति** एतच्छ्रुत्युक्तं फलमित्यर्थः । **विकृतेपीति** फले इत्यर्थः । **पुरुष इति** पूर्वोक्तो मोक्षभक्त्योर्बीजभूत इत्यर्थः । **कारणार्थमित्यस्यैव** विवरणं **सर्वेषामित्यादि** । **रसत्वव्यावृत्त्यर्थमिति**, रसत्वस्य सम एव विषये सिद्धेः । प्रकृते च देवत्वस्यासमत्वात् प्रतीतत्वेन तदभावात्तद्व्यावृत्तिरिति भावः ।

---

श्रीविट्ठलेशात्मजश्रीवल्लभकृतलेखः ।

**तस्मिन्नित्यत्र** । **सर्वमस्यान्नमिति** । यस्य ब्रह्म च क्षत्रं चेति वाक्यात्सर्वमुक्तिस्थानत्वेन फलरूपत्वं सिध्यतीत्यर्थः । तथा **चाखिलात्महेता**वित्यत्र हेतुशब्देन फलमिति भावः । **विकृतेपीति** । अखिलपदेन व्यष्टिरूपः प्रपञ्च उक्तः । अत्र विकृतपदेन महदादिप्रसङ्गे तृतीयस्कन्धे विकुर्वत्पदेन तेषु विकारकथनात्समष्टिरूपो विराडुच्यते । तत्रापि भगवानेव **हेतुरात्मा** चेत्यर्थः । **कारणार्थमिति** । मानुषभावस्वीकाराभावे सेवाद्यसम्भवेन सर्वोद्धारो न स्यादिति भावः । **अनेनेति** स्वामिनः फलदानपरत्वसूचनेनेत्यर्थः । ननु सर्वोद्धारपरत्वेपि सर्वविलक्षणानामस्माकं किमित्यत आहुः । **लोकस्येति** । **रसत्वेति** चर्वणायां जायमानायामास्वाद्यो **रसः**, सर्वदा तथाविधो **भाव** इति विभेदः । देवत्वाप्रतीतेर्हेतोः केवलपुत्रत्वज्ञानेपि भावपदं रसत्वव्यावृत्त्यर्थमुक्तम् । 'रतिर्देवादिविषया भाव'इत्यत्रादिशब्देन मुनिगुरुनृपपुत्रादिविषयेत्युक्तेर्नासम्भव इति भावः । **तद्व्यावृत्त्यर्थमिति** । पक्ष्यादिरूपतापेक्षाव्यावृत्त्यर्थमित्यर्थः । इदमेव स्वरूपं योग्यं न तु रूपान्तरापेक्षेति भावः ॥

**अदीर्घेणैव कालेन व्रजमागमिष्य**तीति यतः **अच्युतः** स्वरूपतो धर्मतश्च, अन्यथा वाक्यतश्च्युतः स्यात् । लौकिकभाषया बोधनमिति केचित् । शास्त्रार्थतः समागमिष्यतीत्यन्ये । भगवद्वाक्यानुरोधेन भगवदीयानां च 'कुरून्मधून्वे'ति वाक्याच्च 'पित्रो'रिति विशेषवचनाच्च 'गतांश्चिरायिता'नितिवाक्यविरोधाभावात् नन्दं द्रष्टुं समागत एव भगवान्परं यथा न गोपिकाप्रतीतिस्तथेत्यर्थादवगम्यते । आर्थिके विरोधाभावादिममर्थमेव ज्ञापयितुमाह **प्रियं विधास्यते पित्रो**रिति । यथैव प्रियं भवति, येन प्रकारेणागते, तथैव विधास्यति । एतादृशकरणे सामर्थ्यमाह **भगवा**निति । एवं गुप्ततयागमने हेतुमाह **सात्वतां पति**रिति । यादवानां भगवद्भक्तानां च पतिः । यादवानुरोधान्मार्गानुरोधाच्च तथा समागमिष्यतीति भावः । 'प्रीतिमावहे'ति वाक्यादेवमुच्यते, अन्यथा शास्त्रार्थमात्रमेव कथयेत् ॥ ३४ ॥

---

श्रीपुरुषोत्तमकृतो भ्रमरगीतप्रकाशः ।

**आगमिष्यतीत्यत्र । लौकिकभाषये**त्यादि । 'द्रष्टुमेष्याम' इत्यस्य लौकिकभाषात्वाद्भगवतोक्त्या तयाच्युतत्वस्य न बाधनमित्यर्थः । **एवमिति**
१०–४३–३४
यथा गोपिका न जानन्ति तथेत्यर्थः । **यादवाना**मित्यादि । एवमेतद्भावकथनेन तासु कृपाऽभावशङ्का परिहृता । एवं श्रीनन्दाश्वासनस्य तात्पर्यमाहुः **प्रीति**मित्यादि । **शास्त्रार्थमात्र**मिति अन्तर्हृदीत्यादिना वक्ष्यमाणमित्यर्थः ।

---

श्रीविठ्ठलेशात्मजश्रीवल्लभकृतलेखः ।

**आगमिष्यतीत्यत्र । वाक्यविरोधाभावा**दिति । **चिरायिता**निति वाक्यं हि स्वामिनीः प्रति । अतो नन्दं द्रष्टुं आगमनेपि तद्वाक्यं न विरुद्धत इत्यर्थः ।

नन्दं द्रष्टुमित्यत्र **हरिधनाः** । वियोगो द्विविधः धर्मधर्मिभेदेन । तत्र धर्मिरूपोग्रिमाध्याये स्वामिनीषु वक्ष्यते । धर्मरूपोत्रोच्यते । तत्र स्वरूपरक्षार्थं संयोगात्मकस्य धर्मिरूपस्याऽऽगमनमावश्यकमन्यथा वियोगेनैतद्देहादीनामन्यथाभावः स्याद् वह्निसम्बन्धे वह्निभिन्नस्य दाहवत् परन्तु स्वरूपत एव समागतो न धर्मतः । अतो न दर्शनम् । स्वामिनीषु त्वलौकिकसामर्थ्यदानेन देहादीनां विप्रयोगात्मकत्वं सम्पादितम्, अयमेव धर्म्यात्यको वियोगः तत्र वह्निना वह्नेरिव वियोगेनान्यथभावो देहादीनामशक्यः, अतः स्वामिनीप्रतीत्या नागमनम् । तत्र संयोगात्मकस्याऽऽगमने प्रत्युतान्यथाभावः स्यात् । तेषां विप्रयोगात्मकत्वसम्पादनात् । अत एव पुनः सम्बन्धे सर्वदाह एव भवेदित्यग्रिमाध्याये वक्ष्यते, इति पूर्वापरावलोकनेन व्याख्यातवन्तः । **मार्गानुरोधा**दिति भक्तिमार्गानुरोधादित्यर्थः । प्रकटतयानागमने एवमागमने च क्रमेण हेतुद्वयमुक्तम् । सर्वथाऽनागमने भक्तरक्षासम्भवाद्भक्तिमार्गो न प्रवर्तेतेति भावः । सात्वतपदस्यार्थद्वयमभिप्रेत्येदं द्वयमुक्तम् ।

न केवलं स्नेहोत्कर्षेणैव भवतीनामुत्कर्षः किन्तु प्रपत्तिरप्युत्कृष्टेत्याह **दिष्ट्येति**।

**दिष्ट्या पुत्रान्पतीन्देहान्स्वजनान्भवनानि च ।**
**हित्वा वृणीत यूयं यत्कृष्णाख्यं पुरुषं परम् ॥ २६ ॥**

प्रपत्तिबाधका एते पुत्रादयः, पुत्रादीनामासक्तिजनकत्वात्, अनासक्तो हि प्रपद्यते, स्त्रीणां सुतरामेवैते प्रतिबन्धका इति गणयति । देहाः स्वस्यैव अवस्थाभेदेन भिन्नाः नानाविधोपयोगा इति तदपेक्षाभावाय बहुवचनम् । स्वार्थे विनियोगाभावात्त्यागः । अन्यथा भगवतः स्थाने गच्छेयुः । किन्तु भगवदाकाङ्क्षामेव भावयमानास्तिष्ठन्तीति पुत्रादिवद् देहत्यागोपि । तथा भिन्नानां स्वजनानां गोपिकानां परस्परमपि प्रासङ्गिकः समाजः, गृहाणामाधारभूतानामपि परित्यागः पूर्वमुपपादितः । चकाराल् लोकानामपि । वृथा परित्यागं वारयति वृणीतेति । पुरुषपरित्यागो दोषायेति तदर्थमाह **परमिति** । व्यभिचारिण्योपि यदि पतिं भजन्ति तदापि पूर्वदोषं परित्यज्य कृतार्था भवन्ति । जगति प्रायेण चर्षणीरूपाः व्यभिचारिण्य

श्रीपुरुषोत्तमकृतो भ्रमरगीतप्रकाशः ।

**दिष्ट्येत्यत्र** । **प्रपत्तिस्तदेकतानत्वम्** । इदमेव चानन्यत्वम् । **भगवदाकाङ्क्षा-मिति** । भगवत्कृतां स्वाकाङ्क्षाम् । **भिन्नानामिति** । भगवद्वार्तोपयोगि-

१०-४४-२६

भिन्नानाम् । **व्यभिचारिण्य** इत्यादि । मूले **परमित्यनेन** 'तथा पुरुषशब्दोयं वासुदेवे प्रतिष्ठितः । स्त्रीप्रायमितरत् सर्वं जगद्ब्रह्मपुरःसरमिति' 'भगवानिति शब्दोयं तथा पुरुष इत्यपि । निरुपाधी च वर्तेते वासुदेवे सनातन'इत्यादिवाक्यैः पुरुषत्वं भगवत्येव सत्यमन्यत्र तु गौणं 'ते सर्वे पुरुषांशत्वादुच्यन्ते पुरुषा इति' । इति वाक्येन पुरुषांशत्वाच्च, 'स वै पतिः स्यादकुतोभयः स्वयं, समन्ततः पाति भयातुरञ्जन'मितिवाक्यात्पतित्वमपि तत्रैव मुख्यम्, तेन विवाहित इवात्र वाचनिकत्वस्य तौल्येप्युक्तविशेषत्वसत्त्वादेतद्भजनमेव मुख्यमिति सूचितम् । एवं सति 'व्यभिचाराद्दतौ शुद्धि'रित्यादिवाक्याल्लौकिके गौणेपि यत्रैवं भजनव्यवस्था, तत्रैवं मुख्यभजने कः सन्देह इति भावः । नन्वेवं गौणपतिभजनस्यापि कृतार्थताहेतुत्वे **तत्त्यागेन** भगवद्भजनस्य कथमुत्कृष्टत्वमित्यत आहुः **जगती-त्यादि** । **चर्षणीरूपा** जन्मभिः परिभ्रमणशीलाः । तत्र जन्मभेदान्न दोष इति चेत्तत्राहुः

श्रीविट्ठलेशात्मजश्रीवल्लभकृतलेखः ।

भातेर्डवतुरिति सूत्रात् । भातीति दीप्तिकथनेनेदं सामर्थ्यं सूचितमिति भावः । •मुनीनामन्तर्मुखत्वं साधयति । **अन्यथेति** । अन्तर्मुखत्वाभावे । दानादि साधनं परित्यज्य मनने कथं प्रवृत्ता भवेयुरतोन्तर्मुखास्तेषामपीयं भक्तिः प्राथ्येत्यर्थः ।

**दिष्ट्येत्यस्य** व्याख्यानान्ते पुरुषपरित्यागे दोषाभावमुपपादयितुमाहुः । **जगतीति**।

१ हेतुत्वेन अग्रे इति पाठः ।

एव, परं दिनवज्जन्मव्यवस्था, अतः परः पुरुषः सेव्य एव । ननु पूर्वमपि स्थिताः यथा दोषाच्चतोपगता एवमग्रेऽपि भविष्यन्तीति किं परमपुरुषप्रपत्त्येत्याशङ्क्याह शृणीतेति । इदानीं हि वरप्राप्तो भगवान् पूर्णमिच्छयेति विशेषः । किञ्च । कृष्णारब्धमिति । स हि तदर्थमेवावतीर्णः, प्रमेयबलेनापि न त्यक्ष्यति, पुरुषत्वेन फलान्तराभावेन न काचित् क्षतिः ॥ २६ ॥

एवं भक्तिप्रपत्ती निरूप्य सर्वात्मभावं निरूपयति सर्वात्मभाव इति ।

**सर्वात्मभावोधिगतो भवतीनामधोक्षजे ।**
**विरहेण महाभागा महान्मेनुग्रहः कृतः ॥ २७ ॥**

तदुपपादितं दशधा । तत्रापि विशेषमाह विरहेणेति । संयोगे भवेदपि तादृशी मतिः, सर्वोप्यात्मनो भावः भगवत्येवाधिकृतः उत्तरोत्तरवृद्धिमारब्ध इव । विषयस्याप्यलौकिकत्वमाह । अधोक्षज इति । अधः अक्षजं यस्मादिति, कोपि भावः तत्र कर्तुमशक्यः, तादृशे सर्वात्म-

श्रीपुरुषोत्तमकृतो भ्रमरगीतप्रकाशः ।

परमिति । 'वासांसि जीर्णानि' इति वाक्यात् स्थूलशरीरस्याप्रयोजकत्वात् प्रतिक्षणं भेदेनापि तथात्वाल्लिङ्गशरीरस्य च तस्यैव जन्मान्तरेपि सत्त्वादेकस्थूलशरीरे यथा तत्परिच्छेदकस्य दिनरूपकालस्य न व्यभिचाराभावसाधकत्वमेवं सूक्ष्मतत्परिच्छेदस्य जन्माद्युपलक्षितकालस्यापि न तथात्वमतो याः प्रभोरभक्तास्ताः पतिव्रता अपि तत्प्राया एवेत्यर्थः । सिद्धमाहुः अत इत्यादि । तथा च या न त्यजन्ति तासामप्येतदावश्यकमिति किं वाच्यमेतस्योत्कर्ष इत्यर्थः । स्थिता इति । भजनं कुर्वन्त्यः स्थिताः । दोषादिति । भगवता तथात्वेन विचारिताद् गोपसम्बन्धत्वेन दोषविचारितादित्यर्थः । पुरुषत्वेनेति । 'पुरुषान्न परं किञ्चित्, सा काष्ठा सा परा गति'रिति श्रुतेरित्यर्थः ।

श्रीविट्ठलेशात्मजश्रीवल्लभकृतलेखः ।

प्रत्युत पुरुषभजने व्यभिचार इत्यर्थः । तदुपपादयन्ति दिनवदिति । पूर्वदिनसिद्धस्वपतित्यागे इव जन्मान्तरसिद्धस्वपतित्यागेपि व्यभिचार इत्यर्थः । पूर्वमपीति । श्रुतित्वदशायामपीत्यर्थः । प्रलये वेदानां भगवद्धृदयस्थत्वोक्तेरिति भावः । दोषादिति । प्रवृत्तिनिवृत्तिबोधनाधिकारलक्षणदोषादित्यर्थः । इदानीं हीति । गोपीत्वदशायामित्यर्थः । अत एव 'गोप्यो भूत्वा हरिं गता' इति वाक्यम् । यद्यपि तदर्थमेव प्रादुर्भूतत्वात्प्रमेयबलेन न त्यक्ष्यति तथापि फलं मोक्षादिकमेव दास्यति । तथा सति स्वतन्त्रभक्तिहानिरित्यत आहुः । पुरुषत्वेनेति । नायकत्वेन नायिकासु रसरीत्यैव स्वानन्दं दास्यति न तु मोक्षादिकमतो न स्वतन्त्रभक्तिहानिरित्यर्थः ।

सर्वात्मभाव इत्यत्र । दशधेति । भगवता सह सँल्लापादिदशप्रकारैः सदा तद्भावनमिन्द्रियवतां फलमिति पूर्वमुपपादितमित्यर्थः । सर्वोपीति । दशप्रकारकोपीत्यर्थः ।

**भावो** दुर्लभः। तत्रापि बह्वीनाम्, तत्रापि साधनरहितानां **भवतीनाम्**। तर्हि साधनाभावे दृश्यमानं कार्यं भ्रमप्रपन्नं भविष्यतीत्याशङ्क्याह हे **महाभागा** इति। भवतीनामुत्पत्तिशिष्टमेव तादृशं भाग्यं साधनमिति न साधनाभावः। ननु स्तुतिरेवैषा क्रियते न वस्तुत इत्याशङ्क्याह **महान्मेनुग्रहः कृत** इति। न हि कोपि परस्तोत्रं कुर्वन् आत्मनो गुणभावमङ्गीकरोति, अतः स्वाभिप्रायप्रदर्शनेन त्वयाप्येवं कर्तव्यमिति उपदेशेन महानेवानुग्रहः कृतः ॥ २७ ॥

अतोनुगृहीतेन धाष्टर्यात् किञ्चिद्विज्ञाप्यत इत्याह **श्रूयतामिति**।

**श्रूयतां प्रियसन्देशो भवतीनां सुखावहः।**
**यमादायागतो भद्रा अहं भर्तृरहस्करः ॥ २८ ॥**

स्तोत्रवदेतदप्यनभिप्रेतं ज्ञास्यन्तीत्याह **प्रियसन्देश** इति। भगवतोयं सन्देशः प्रियत्वात् प्रीतिजनक एव भविष्यति, सन्देशपदेन चैतज् ज्ञापयति। तदुक्तं भवतीभिरवश्यं कर्तव्यमिति। अन्यथा तदुपदेशं शृणुतेत्येव वदेत्। प्रियेणोपदिष्टत्वाद् असाध्यता दुःखसाध्यता च निवृत्तैव। कदाचिदन्यार्थमुपकारवद्वदेत्, तद्व्यावृत्यर्थमाह **भवतीनां सुखावह** इति। दृष्टफलापेक्षा भवत्यः, सुखं चावहतीति तत एव सुखं, न तु भवतीनां पुनः साधनान्तरापेक्षापि। नन्वेतादृशत्वे किं प्रमाणं तत्राह **यमादायागत** इति। मया हि प्रथमतः सोर्थो ज्ञातः, ज्ञायते च भवतीनामधिकारः। एवमपि सति यत्पुनः तमेव सन्देशमादायाहमागतः। किञ्च। **भर्तृरहस्करः**। भर्ता हि स भवतीनां ममापि। स तमुपायं न वक्ष्यत्येव येन वयमभृताः भवामः। नापि प्रायिकोर्थः, यतोहमेकान्त एवाभिप्रेतं करोमि, एकान्तं वा करोमि, गूढकर्ता न प्रतार्यते, भर्ता च न प्रतारकः। अतः सन्देशो यथोक्तफलकः ॥२८॥

तमेवाह दशभिः **भवतीनामिति**।

श्रीभगवानुवाच—**भवतीनां वियोगो मे न हि सर्वात्मना क्वचित्।**
**आत्मत्वाद्भक्तवश्यत्वात्सत्यवाक्त्वात्स्वभावतः ॥ २९ ॥**

षड्भिः स्वरूपकथनं पुरुषार्थास्ततः परैः। जीवब्रह्मविभेदेन द्वेधा रूपं निरूप्यते ॥१॥
दोषाणां मूलभूतस्य विरहस्य निवारणे। बन्धमोक्षव्यवस्थायां जीवो द्वेधा निरूप्यते ॥२॥

---

श्रीविट्ठलेशात्मजश्रीवल्लभकृतलेखः।

**आत्मनः** अन्तःकरणस्येत्यर्थः। **उत्तरोत्तरवृद्धिमिति**। प्रापयितुमिति शेषः। वृद्धिं प्रापयितुमेताभिरारब्ध इत्यर्थः।

**श्रूयतामित्यत्र**। **अन्यथेति**। **उपदेश** आज्ञा। सा तु स्वागतमित्यादिवाक्यवदकृतापि भवेदित्यर्थः।

**भवतीनामित्यत्र**। **विरहस्य निवारणे** इति। निमित्तसप्तमीयं, निवारणार्थं

---

१ अत्रान्तारतोर्धश्लोकःश्च वल्लभाचार्यैः प्रकटीकृतः।

आश्रयत्वाच्च कर्तृत्वाद् द्वेधा ब्रह्मापि रूप्यते । दोषाभावप्रतिज्ञाये हेतुभिर्विनिरूप्यते ॥३॥
फलं जीवेपि येनैषा बुद्धिर्नश्यति सर्वथा । गुणा विभाजका यस्मात्त्रिभिस्त्रिभिरुदीर्यते ॥४॥
तत्र प्रथमं वियोगाभावाय मूलहेतुं वदन् प्रतिजानीते । **भवतीनामिति** । **वियोगः** स्वाभाविकः, औपाधिकः, अज्ञानतश्चेति त्रेधा भवति । आत्मनां जीवानामेकत्वात् परस्परं भेदाभावेपि औपाधिको भेदोस्ति, तत्रोपाधयः उद्गमो वा, माया वा, भगवदिच्छा वा, अज्ञानं वेति वादा-

---

श्रीपुरुषोत्तमकृतो भ्रमरगीतप्रकाशः ।

**भवतीनामित्यत्र** । षट्सु मध्यमानां चतुर्णामर्थमुक्त्वा आद्यन्तयोराहुः **दोषे-त्यादि** । फलं भगवत्प्राप्तिरूपम् । 'एतदन्त' इति श्लोके निरूप्यत
१०-४४-२९ इत्यर्थः । **एषेति** । त्यागावगाहिनी । नन्वस्त्वेवं तथापि त्रिभिस्त्रिभिर्ब्रह्मजीवयोः स्वरूपकथनस्य किं तात्पर्यमत आहुः **गुणा** इत्यादि । **विभाजकाः** । जीवब्रह्मभेदभ्रमजनकाः । **तस्मादिति** शेषः । वियोगः संयोगाख्यस्पर्शाभावो न तु विभागात्मा । स जीवानां भगवता सह न वास्तवो नाप्यागन्तुकः, किन्त्वज्ञानकृत इति विशेषतो वक्तुं तस्य सामान्यतो हेतुभेदात्त्रैविध्यमाहुः **स्वाभाविक** इत्यादि । तत्र सिद्धान्ते ब्रह्मवादाच्चित्त्वेन सजातीयत्वाच्चाद्यो जीवेष्वपि नास्तीत्याहुः **आत्मनामित्यादि** । मर्यादाप्रवाहपुष्टिभेदेनोपाधीन्वक्तुमाहुः **तत्रेत्यादि** । **उद्गमः** 'यथा प्रदीप्तात्पावकाद्विस्फुलिङ्गाः सहस्रशः प्रभवन्ते सरूपा' इति मुण्डकोक्तः । **माया** 'जीवेशावाभासेन करोति माया चाविद्या च स्वयमेव भवती'ति तापनीयोक्ता । श्रुत्यन्तरे जलचन्द्रदृष्टान्तेनांशानुप्रवेशान्नालीकत्वं, **भगवदिच्छा** 'बहुस्यां प्रजायेये'ति तैत्तिरीयोक्ता । **अज्ञानं**, अविद्या, उपाधिर्मायावादे, तदपि वाक्याभासेषु 'इन्द्रो मायाभि'रित्यादिषु सिद्धम् । एवं सृष्टिभेदेन जीवानामितरेतरभेदस्यानेकविधत्वे ब्रह्मणः सर्वत्रैकत्वादुपाधित्रयस्याभेदकत्वेन वियोगे तुरीय

---

श्रीविट्ठलेशात्मजश्रीवल्लभकृतलेखः ।

जीवब्रह्मस्वरूपं निरूप्यते इत्यर्थः । विरह एव नास्ति । उभयस्वरूपविचारेण भेदाभावादित्यर्थः । **बन्धेति** । क्रमोत्र न विवक्षितः । किन्तु प्रथमं ब्रह्मस्वरूपनिरूपणम् । पश्चाज्जीवस्वरूपनिरूपणम् । **फलमिति** । समाम्नायादीनां फलं मनोनिरोधनं जीवे । अपिशब्दात्तेन ब्रह्मण्यपि दोषारोपाभावलक्षणं फलं सिद्धम् । तद्विशदयन्ति । **येनैषेति** । येन मनोनिरोधेन एषा दोषारोपलक्षणा बुद्धिर्नश्यति तत्फलं ब्रह्मण्यपि सिद्धमित्यर्थः । **गुणा इति** । उभयस्वरूपनिरूपणेऽपि गुणा एव विभाजका अतो द्वयमपि त्रिभिस्त्रिभिरुदीर्यते । प्रतिज्ञामादाय ब्रह्मस्वरूपनिरूपणं त्रिधा । फलमादाय जीवस्वरूपनिरूपणं च त्रिधेत्यर्थः ।

न्तरम् । जीवब्रह्मणोस्तु भेदे अज्ञानमेव हेतुः, सुतरां वियोगे । ब्रह्मणस्तु तदुभयाभावान् न जीवैः सह कथञ्चिद् भेदः । भगवांस्त्यक्त्वा गत इति हीर्ष्यादौ हेतुः । स नापि त्यजति, नापि त्यागं मन्यते । जीवास्तु भगवन्तं त्यक्ष्याम इति वदन्तः भ्रान्ता एव । अतोऽयमर्थो निरूपणीयः । तत्र द्वेधापि प्रतिजानीते, भवतीनां वियोगो मम नास्ति, मम च वियोगो भवतीनां नास्ति । एकत्र कृतघ्नता, अपरत्र दुःखं च फलति । वस्तुस्वरूपेण वियोगाभावेऽपि एकदेशेन वृक्षकपिवियोगवत् कालभेदेन च स्त्रीपुरुषवच्च वियोगः संभवति, तदुभयं निषेधति **नहि सर्वात्मने**ति । **क्वचिदि**ति काले, सर्वात्मना केनाप्यंशेनेति देशे । एवं चतुर्धा भवति । अत्र प्रायेण साधनचतुष्टयप्रतिपादकं अर्धमन्तरितमिति प्रतिभाति । **आत्मत्वाद् भक्तवश्यत्वात् सत्यवाक्त्वात्स्वभावत** इत्येवं रूपम् । गोपिकावियोगो भगवतो नास्ति, भगवानात्मेति, भगवद्वियोगश्च न गोपिकानाम्, भक्तवश्यत्वात्, कालभेदेनापि न वियोगः न पारयेहमिति । न ह्येतावदुक्त्वा एतावत्यर्थे तासामिच्छां किं न पूरयेत् । भगवतश्चायं स्वभावः यत् स्त्रीषु कृपावान्, अतः केनाप्यंशेन ता न परित्यजति, विशेषहेतव एते चेद्भवन्ति ॥ २९ ॥

---

श्रीपुरुषोत्तमकृतो भ्रमरगीतप्रकाशः ।

एव हेतुरित्याहुः **जीवे**त्यादि । तेन सिद्धमाहुः **ब्रह्मण** इत्यादि । **तदुभयाभावा**दिति । भेदाज्ञानयोरभावात् । तावता भगवति त्यक्तत्वबुद्ध्यापादितो दोषोपि नास्तीत्याहुः **भगवानि**त्यादि । एतन्निरूपणप्रयोजनमाहुः **जीवा** इत्यादि । **अत** इति । वियोगविनिवारणायैव सन्देशस्य प्रेषितत्वात् । एतावत्कथनप्रयोजनमाहुः **तत्रे**त्यादि । **तत्रे**ति । स्वास्मिन् भक्तेषु च । उभयत्रापि दोषाभावबोधनस्यावश्यकत्वादिति भावः । **चतुर्धे**ति । भगवत्कृतभक्तकृतकालकृतदेशकृतभेदेन तथेत्यर्थः । **चेद्भवन्ती**ति । तदा पूर्वोक्तो वियोगश्चतुर्धा भवतीत्येवं पूर्वग्रन्थेनान्वयः ।

---

श्रीविट्ठलेशात्मजश्रीवल्लभकृतलेखः ।

**तदुभयाभावा**दिति । उपाधेरज्ञानस्य चाभावाद् ब्रह्मणो न भेदः । किन्तु जीवोऽज्ञानाद् भेदं मन्येत । तदज्ञानं निवारणीयम् । दुःखदत्वादित्यर्थः । स्वाभाविको भेदस्तु श्रुत्यैव निराकृत इति नात्र पृथङ् निराक्रियते इति भावः । **एकत्रे**ति । भगवति कृतघ्नता, स्वामिनीषु दुःखं चेत्यर्थः । **वस्तुस्वरूपेणे**ति । समुदायरूपेणेत्यर्थः । **स्त्रीपुरुषवच्चे**ति । 'अर्धो वा एष आत्मनो यत्पत्नी'ति श्रुतेः । स्त्रीपुंसयोरैक्येपि कालभेदेन जन्मान्तरे वियोगो जायते एव तथेत्यर्थः । **एवं चतुर्धे**ति । गोपिकानुयोगिको भगवत्प्रतियोगिकः । भगवदनुयोगिको गोपिकाप्रतियोगिकः । कालिकः । दैशिकश्च । एवं चतुर्धा वियोगो भवतीत्यर्थः । **विशेषहेतव** इति । इमान्धर्मांश्चेद्भगवान्प्रकटीकुर्यादित्यर्थः ।

सामान्यहेतूनाह **यथा भूतानीति** द्वाभ्याम् ।

**यथा भूतानि भूतेषु खं वाय्वग्निर्जलं मही ।**
**तथाहं च मनःप्राणबुद्धीन्द्रियगुणाश्रयः ॥ ३० ॥**

भगवानाश्रय इति ता विहाय क यास्यति, अन्यथा आधाराभावे तासां स्वरूपमेव न तिष्ठेत् । अथ देहभावेन आत्मा गौण इति देहेन सह वियोग आविर्भूतस्योच्येत । तदपि न घटते, समवायिकारणत्वेन तेषु वर्तत इति, अन्यथा देहा निःस्वभावाः स्युः । आविर्भूतेन वियोगस्तु हितकारी । अन्यथा स्वरूपनाश एव स्याद् यथाग्निकाष्ठयोः । पूर्वसम्बन्धेनैवैता अर्धदग्धाः, पुनः सम्बन्धेन सर्वदाह एव स्यात्, सुखानुभवस्तु स्वान्तःस्थिताग्न्यभिव्यक्तिवत्स्वान्तःस्थितभगवदभिव्यक्त्या, सर्वथाभिव्यक्तौ काष्ठांशो ज्वलिष्यतीति न सम्बध्यते, यतो भगवान् प्रलयकर्ता । स्थितिहेतुत्वान् नैकदेशेनापि वियोगः संभवति । तदाह दृष्टान्तेन । **यथा भूतानि** महाभूतानि अन्येषां भूतानामाधारभूतानि सन्ति तेभ्यो न वियुक्तानि भवन्ति । तथा भगवानपि देहांशेन न वियुक्त इति दृष्टान्तेनैव साधितम्, प्रकरणेनैव तल्लभ्य-

---

**श्रीपुरुषोत्तमकृतो भ्रमरगीतप्रकाशः ।**

**यथा भूतानी**त्यत्र । समवायित्वेन भगवत्स्थितौ गमकमाहुः **अन्यथे**त्यादि । **निःस्वभावाः स्यु**रिति । भगवत्स्वभावरहिताः स्युः । इदं भाति । 'रसो
१०-४४-३० वै सः' इतिश्रुत्या भगवान् रसात्मकः । तदुपादेयत्वेनैतद्देहानामपि तथात्वम् । तदेव भगवतोक्तं 'मदात्मिका' इति । मत्स्वरूपा इति व्याख्यातं च । तथा च समवायित्वेन भगवत्स्थित्यभावे एतद्देहानां रसस्वभावतैव न स्याद् इतरदेहवदिति । नन्वेवं सति वियोगस्य किं प्रयोजनमत आहुः **आविर्भूतेने**त्यादि । **अग्निकाष्ठयो**रिति । सम्बन्धबाहुल्य इति शेषः । तत्रापि गमकमाहुः **पूर्वसम्बन्धेने**त्यादि । **अर्धदग्धा** इति । देहांशेऽर्धस्फुरितभगवत्स्वरूपा इति पुनः सम्बन्धे स्वस्वरूपस्फूर्तिरहिता एव भवेयुरित्यर्थः । **काष्ठांश** इति,कार्यत्वेनाभिध्यातः स्वात्मांशः । **प्रकरणेनैव तल्लभ्यमि**ति । वियो-

---

**श्रीविट्ठलेशात्मजश्रीवल्लभकृतलेखः ।**

**यथा भूतानीत्यत्र । भगवानाश्रय** इति । अत आद्यो गोपिकानिरूपितो वियोगो न सम्भवति । आश्रयत्वात्ता विहाय न यास्यति । अतस्ताभिस्त्यक्तो न भवतीत्यर्थः । अग्रिमश्लोकार्थमाहुः । **अथे**त्यारभ्य **प्रलयकर्ते**त्यन्तेन । **प्रलयकर्ते**ति । प्रलयकर्तृत्वात्तत्सम्बन्धे सर्वदाहो भवेत् । अतो न सम्बध्यते इत्यर्थः । एतेन श्लोकेन द्वितीयवियोगाभाव उक्तः । कालिकवियोगाभावोपि । यथेति श्लोके दृष्टान्तद्वयं व्याख्यातम् । तत्राद्येन दैशिकवियोगाभाव उक्तः । द्वितीयेन दृष्टान्तेनोत्तरार्धेन चाद्यवियोगाभाव उक्तः ।

मिति अनन्यलभ्यो हि शब्दार्थः। साधारणदृष्टान्तेन च। चकारात् पुनरुक्तेन दृष्टान्तान्तरमाह। **तथाहमिति**। देहव्यतिरिक्तानि च **मनःप्राणबुद्धीन्द्रियगुणा**त्मकानि,तेषामप्यहम**माश्रयः**, समसङ्ख्यार्थं पञ्च गणिताः, सत्त्वादिगुणेषु प्रकृतेरन्तर्भावः अहङ्कारस्य च, त्रिगुणात्मकत्वाद् बुद्धौ चित्तस्य । प्राणाः दशेन्द्रियाणि च, सङ्कल्पादिसर्वधर्मसहितं च मनः । **क्रमे च** 'अन्नमयं हि सौम्य मनः, आपोमयः प्राणः, तेजोमयी वागि'ति, सा हि बुद्ध्यात्मिका ज्ञानप्रधाना, यथा रूपं क्रियाप्रधानम्। इन्द्रियाणि प्राणेन वायुना पुष्टानि, गुणाश्चाकाशे, अत एवाभ्रतमः प्रकाशा आकाशे भवन्ति न भवन्तीति च । **खं वाय्वग्निर्जलं मही**त्युत्पत्तिप्रकारेणाधारत्वेन वा गणना, अन्नं महीति पर्यायः । एतेषु जीवस्थितेषु कारणभूतान्येतानि सन्तीति वक्तव्येपि प्रसिद्ध्यभावान् नोक्तम् ॥ ३० ॥

अतः परं कारणभूतत्वात् कार्यस्य न कारणव्यतिरेक इति भगवद्विरहो गोपिकानां नास्तीति वक्तुमाह **आत्मन्येवेति** ।

---

श्रीपुरुषोत्तमकृतो भ्रमरगीतप्रकाशः ।

गाभावसाधकप्रसिद्धपूर्वार्धसम्बन्धेनैव तद् आश्रयत्वं लभ्यमित्यर्थः । उभयाकाङ्क्षाविशिष्टवाक्यस्यैव प्रकरणत्वादिति । **साधारणदृष्टान्तेन चेति** । समवायित्वबोधकेन । तथा च भवद्देहनिरूपितो वियोगो मम नास्ति । आश्रयत्वात्समवायित्वाच्च, भूताश्रयसमवायिमहाभूतवदिति फलति । **देहव्यतिरिक्तानीत्यादि** । एवं च भवन्मनःप्राणबुद्धीन्द्रियगुणनिरूपितवियोगाभाववानहम्, तत्तदाश्रयत्वात्, भूताश्रयमहाभूतवदित्यत्र फलति । देहस्थितानां शेषाणां वियुक्तत्ववारणायात्रैवान्तर्भावमुपपादयन्ति । **सत्त्वादीत्यादि** । नन्वाश्रयत्वेन दैशिको वियोगो मास्तु, वास्तवस्तु कथं वारणीय इत्याकाङ्क्षायां समवायित्वमत्रापि वक्तुमाहुः **क्रमे चेत्यादि** । **सेति** वाक् । **अभ्रतमः प्रकाशा** इति । तदुपलक्षितानि रजस्तमःसत्त्वानि । तथा च न तेन स इत्यर्थः । नन्वेवमेतत्स्फुटमेव कुतो नोक्तमित्यत आहुः **एतेष्वित्यादि** ।

---

श्रीविट्ठलेशात्मजश्रीवल्लभकृतलेखः ।

**पुनरुक्तेति** । पूर्वार्धे निराकाङ्क्षता जाता । इममेव पूर्वार्धं पुनः पठित्वा उत्तरार्धेन योज्यमिति भावः । अत्र व्याख्याने त्रयो गुणाः । दशेन्द्रियाणि मनःप्राणबुद्धयश्चेति षोडश । प्रकृत्यहङ्कारयोर्गुणेष्वन्तर्भावः । एवमष्टादश बुद्धौ चित्तस्य । एवमेकोनविंशतिः । पुनरुक्ते पूर्वार्द्धे खमादिपञ्चकम् । एवं चतुर्विंशतितत्त्वान्युक्तानि । अष्टाविंशतिपक्षो ब्रह्मवादसिद्धस्तस्यात्र विशेषतो नोपयोग इति भावः । पञ्चभूतानां मनआदिषु सन्निवेशोपि भवतीत्याहुः **क्रमे चेति** । मनःप्राणबुद्धीनामन्नजलतेजोरूपत्वं श्रुतिसिद्धम् । **इन्द्रियाणि** वायुपुष्टत्वाद्वायुरूपाणि । **गुणाश्चाकाशे भवन्ती**त्याकाशरूपाणीत्यर्थः ।

**आत्मन्येवात्मनात्मानं सृजे हन्म्यनुपालये ।**
**आत्ममायानुभावेन भूतेन्द्रियगुणात्मना ॥ ३१ ॥**

कर्ता भगवान् 'यतो वा इमानि भूतानि जायन्त' इति श्रुतेः । समवायश्च भगवान् 'तस्माद्वा एतस्मा'दिति श्रुतेः । 'स आत्मानं स्वयमकुरुते'ति श्रुतेश्च कार्यमपि स्वयमेव । जीवपरत्वेऽपि सुतरामत्र न सन्देहः । आधारे सन्देह इति समवाय्यतिरिक्ताधारं निरूपयन्नाह **आत्मन्येवेति** । यथा कुलालश्चक्रे घटं करोति, आत्मानात्मसङ्करप्रतिषेधाय एवकारः । करणस्य भिन्नत्वमाशङ्क्याह **आत्मनेति** । वैषम्यनैर्घृण्यादिदोषाभावाय कार्यस्याप्यन्यत्वं निवारयति **आत्मानमिति** । कदाचिदानीय कश्चिद् घटादिकमपि स्वस्मिन् स्थापयति स्वपादं च स्वजघने, स्फोटयति च स्वस्मिन् । तन्निषेधाय उत्पत्त्यादीनाह **सृजे हन्मि** । नाशयाम्य**नुपालये** । पालयामि । पालनस्य पश्चाद्वचनं देशवियोगाभावे हेतुत्वज्ञापकम् । ननु 'एतस्माज्जायत प्राण' इति श्रुतौ पुराणे च साक्षात् परम्परया वा तत्त्वेष्वेव भगवत्कारणता प्रतीयते न भौतिकेषु । अत एव 'भूतैर्यदा पञ्चभि'रित्यादिवाक्यानि तत्राह **आत्ममायानुभावेनेति** । अहमेव तत्रापि करोमि, परं मन्मायानुभावेन लोकोन्यथा मन्यते । मायया व्यवहितः मायां पुरस्कृत्य वा करणात् । ननु वाक्यानुभवाभ्यां पृथिव्यादेरेव कारणत्वं प्रतीयते तत्कथमत्र व्यामोह इति चेत्तत्राह **भूतानि इन्द्रियाणि गुणाश्च** आधिभौतिकादिभिन्नास्त्रिविधाः, तदात्मभूता माया तेषु प्रविष्टा, सा हि यत्र प्रविशति तत्रान्यदेव भासयति, अकरणेषु करणत्वम् ॥ ३१ ॥

एवं ब्रह्मधर्मनिरूपणेन वियोगाभावं निरूप्य जीवधर्मनिरूपणेनापि तदभावं निरूपयन्नाह **आत्मेति** ।

---

श्रीपुरुषोत्तमकृतो भ्रमरगीतप्रकाशः ।

**आत्मन्येवेत्यत्र** । एतावता भगवता स्वस्य त्यागापादितदोषाभावे साधितेपि न स्वामिनीक्लेशनिवृत्तिरिति तदर्थमाहेत्याहुः **एतेष्वित्यादि** । **समवाय**

१०-४४-३१

इति । तादात्म्यापरपर्यायः । उक्तश्रुतेरुपादानबोधकत्वादिति भावः । **कार्यमिति** । **आत्मानमिति** द्वितीयया तत्परामर्शादिति भावः । ननु श्रुतावात्मपदेन जीवस्य तथात्वमुच्यते न तु देहादेरित्याशङ्कायां कैमुतिकेनाहुः **जीवेत्यादि** । एवं च भवत्यः मन्निरूपितवियोगाभाववत्यः मदाश्रितत्वान्मत्समवेतत्वाच्चेति शब्देन बोधितम् ।

---

श्रीविट्ठलेशात्मजश्रीवल्लभकृतलेखः ।

**आत्मन्येवेत्यत्र** । **जीवपरत्वेपीति** । जीवभोगार्थं जगन्निर्माणपक्षेपीत्यर्थः । **सुतरामत्रेति** । लीलासृष्टावित्यर्थः । **तन्निषेधार्थमिति** । अन्यसृष्टान् घटादीन् स्वस्मिन् स्थापयति । न तथा भगवति । किन्तु भगवान्स्वयमेव स्रष्टेत्यर्थः ।

**आत्मा ज्ञानमयः शुद्धो व्यतिरिक्तोऽगुणाश्रयः ।**
**सुषुप्तिस्वप्नजाग्रद्भिर्मायावृत्तिभिरीयते ॥ ३२ ॥**

आत्मा जीवः, यं गोपिकाः अहमिति मन्यन्ते, स देह एवेति प्रतीतिसिद्धत्वात् तद्व्यतिरेकार्थमाह **ज्ञानमय** इति । मयट् प्राचुर्ये । सच्चिदानन्दरूपत्वाज् ज्ञानप्रचुरोयमात्मेत्यर्थः । तर्हि वैषयिकज्ञानमयो भविष्यतीत्याशङ्क्याह **शुद्ध** इति । ननु शुद्धमात्मानं न पश्यामः, अतः प्रमाणाभावात्प्रतीतस्य चाशुद्धत्वाद् बाधितार्थ इति चेत्तत्राह **व्यतिरिक्त** इति । अस्माद्देहादिसङ्घाताद्व्यतिरिक्तः, यथा तप्तवालुकातः सूर्यो व्यतिरिच्यते । **नन्वत्र** व्यतिरेके का उपपत्तिरिति चेत्तत्राह **अगुणाश्रय** इति । स हि गुणानाश्रित्य न तिष्ठति । गुणाश्रया अन्ये । स तद्व्यतिरिक्तः । सर्वत्र तत्रानुभवं प्रमाणयति **सुषुप्तीति** । मायायाः गुणमय्यः तिस्रो वृत्तयः जाग्रत्स्वप्नसुषुप्तिभेदाः, तिसृष्वप्यलौकिकसामर्थ्यान् मायाग्रहणम्, अन्यथा सुषुप्तौ परमानन्दस्फूर्तिः स्वप्ने नानाविधपदार्थानां जागरणदशायां च चतुर्विधपुरुषार्थसिद्धिर्न स्यात् । अत्र सर्वत्र आत्मनः अन्वयो दृश्यते एकस्यां वृत्तौ, द्वितीयवृत्तिव्यतिरेकश्च, तद्धर्माणां च, अतो ज्ञायते यदा मूलभूतगुणाद्व्यतिरिच्यते अयमात्मा तदा सङ्घातव्यतिरेकेपि किं वक्तव्यमिति । अतो वस्तुतः आत्मा सङ्घाताद् व्यतिरिक्त इति आत्मनैव अहं प्राप्तव्यः न तु देहसहितेन । नह्युत्तमः पदार्थः स्वोपभोग्योधमैः सह भोगमर्हति, अतोस्मात् सङ्घातादादौ निवृत्ता भवत पश्चान् मदुपभोगं कुरुतेति तात्पर्यम् ॥ ३२ ॥

---

श्रीपुरुषोत्तमकृतो भ्रमरगीतप्रकाशः ।

**आत्मा ज्ञानमय** इत्यत्र । **बाधितार्थ** इति । शुद्धशब्द इति शेषः । **अलौकिकसामर्थ्यान्मायाग्रहणमिति** । ल्यब्लोपे पञ्चमी । स्वस्यालौकिकसामर्थ्यमभिप्रेत्य मायापदग्रहणमात्रं भगवता कृतं न तु प्रकृतिमभिप्रेत्येत्यर्थः । गमकमाहुः **अन्यथेत्यादि** । **अत्रेति** । मत्सामर्थ्यकृतासु वृत्तिष्वित्यर्थः । **मूलभूतगुणादिति** । 'निर्गुणस्य गुणाश्रय' इति द्वितीयस्कन्धसिद्धाद्भगवद्गुणात् । गुणानां चाधमत्वं सच्चिदानन्दमूलरूपत्वात्, मायिकत्वेन व्यवहारश्च मायया गृहीतत्वादिति तत्रैवोक्तम् । **अस्मादिति** । मत्कार्यभूतात्सङ्घातात् । **पश्चादिति** । 'ब्राह्मेण जैमिनिरुपन्यासादिभ्यः,' 'द्वादशाहवदुभयविधं बादरायणोत' इति सूत्रद्वयोक्तरूपदेहावरणभूतैतद्देहनिवृत्त्यनन्तरम् । तथा च तस्य देहस्य केवलानन्दमयत्वेन कार्यांशराहित्यादितोप्यधिकमेकावस्थं स्वानन्दमनुभावयितुमयमुपायो मया कृत इति तात्पर्यहृदयं ज्ञेयम् ।

१०-४४-३२

---

श्रीविठ्ठलेशात्मजश्रीवल्लभकृतलेखः ।

**आत्मा ज्ञानमय** इत्यस्य व्याख्यानान्ते । **निवृत्ता भवतेति** । सङ्घातस्य सर्वस्य द्वितीयदलात्मकत्वे सिद्धे दुःखं न भविष्यतीति भावः ।

सायनाकाङ्क्षायां तदुपदिशति **येनेन्द्रियार्थान् ध्यायेतेति** ।

**येनेन्द्रियार्थान्ध्यायेत मृषा स्वप्नवदुत्थितः ।**
**तन्निरुन्ध्यादिन्द्रियाणि विनिद्रः प्रतिपद्यते ॥ ३३ ॥**

**येन** मनसा **इन्द्रियार्थान्** रूपादिविषयान् **मृषा** अविद्यमानान् असंभावितांश्च **ध्यायेत** पुरुषः, यस्मिन् विद्यमाने ध्यानमावश्यकमिति । नन्वयमपि पुरुषार्थ इति चेत्तत्राह **स्वप्नवदिति** । जन्मान्तरोत्पत्त्यर्थमेव तस्य ध्यानं । यथा स्वप्नः सूचकः तथा ध्यायमानं मनोपि जन्मान्तरं सूचयति, न तु स्वरूपतः किञ्चित्पुरुषार्थसाधकम्, अतोनर्थसूचकं तन्मनो **निरुन्ध्यात्** । तस्यापि निरोधे इन्द्रियनिरोधकरणमिति इन्द्रियाणि च निरुन्ध्यादित्याह **इन्द्रियाणीति** । उभयनिरोधे किं स्यादित्याशङ्क्याह **विनिद्रः प्रतिपद्यत** इति । अवस्थाद्वयं समीचीनम् । आनन्दोभिव्यज्यते । पुरुषार्थाश्चान्यत्रेति । अतः स्वप्न एव व्यर्थः इति सूचयितुं वैयर्थ्यापगमाय **विनिद्रः** सन् आत्मानमयमस्मीति प्रतिपद्यते सङ्घातव्यतिरिक्तम् ॥३३॥

**ननु** शास्त्रेषु वेदादिषु बहून्येवात्मज्ञानार्थं साधनान्युक्तानि तत्कथं मनोनिरोधमात्र-मुच्यत इत्याशङ्क्याह **एतदन्तः समाम्नाय** इति ।

**एतदन्तः समाम्नायो योगः साङ्ख्यं मनीषिणाम् ।**
**त्यागस्तपो दमः सत्यं समुद्रान्ता इवापगाः ॥ ३४ ॥**

वेदो हि साधनान्युपदिशति । तस्यापि मनोनिग्रह एव अन्तः पर्यवसितं साधनमेत-देवान्तो यस्य तादृशः **समाम्नायो** वेदः, 'सर्वे मनोनिग्रहलक्षणान्ता' इति शास्त्रात् । **योगस्य** त्वेतदेव प्रयोजनम् । **साङ्ख्यमप्यध्यासं** निवर्तयन् मूलकारणं मन एव व्यावर्तयति । ननु लोका नैवं व्याचक्षते तत्राह । **मनीषिणामिति** । विवेकिनामेतद्व्याख्यानं । मनस ईषिणो मनीषिणः, आत्मसम्बन्धः साक्षान्मनस्यैवेति हेतुरप्युक्तः । ननु स्वतन्त्राणि मोक्षफलानि साधनानि श्रूयन्ते यथा सन्न्यासः, यथा **तपो** वनस्थस्य, यथा वा **दम** इन्द्रियसंयमो गृहस्थस्य, **सत्यं** ब्रह्मचारिणो वेदाध्ययनरूपम्, एतेषामाश्रमधर्माणामपि मनोनिग्रहपर्यवसायित्वमेव । तत्र हेतुं वदन् दृष्टान्तमाह **समुद्रान्ता इवापगा** इति । वहन्त्य आपः भूमौ न पर्य-वसिताः, तथा सति स्थावरा इवात्रैव तिष्ठेयुः, अतो भूम्यन्ताय प्रसर्पन्ति, तत्रावधिः समुद्र एव, तथा सङ्घातेपि प्रविष्टाः लौकिकवत्तत्रास्थिराः तदपगमाकाङ्क्षिणः सन्मार्गे प्रवृत्ताः न्यासाधिकारिणः मध्ये स्थितिमलभमानाः साक्षान्मनसि सम्बद्धमात्मानं मोचयन्तः तन्निग्रह एव विश्रान्ता भवन्ति ॥ ३४ ॥

---

श्रीविट्ठलेशात्मजश्रीवल्लभकृतलेखः ।

**एतदन्त** इत्यत्र । **सङ्घातेपि प्रविष्टा इति** । प्रमाणोक्ता धर्मा इति शेषः ।

एवं वियोगाभावं वियोगस्योत्तमत्वं च परमार्थतो निरूप्य लौकिकप्रतीतौ तद्व्यधिकरणमिति मत्वा दूरे स्थितिलक्षणस्य वियोगस्य चतुर्विधपुरुषार्थसाधकत्वमाह **यत्त्वहमिति** चतुर्भिः ।

**यत्त्वहं भवतीनां वै दूरे वर्ते प्रियो दृशाम् ।**
**मनसः सन्निकर्षार्थं मदनुध्यानकाम्यया ॥ ३५ ॥**

गोपिकानां धर्मादयो भगवानेव, परं प्रकारविशेषमापन्नः । तत्र धर्ममाह । **तुशब्दः** तत्त्वनिरूपणं व्यावर्तयति । **अहं भवतीनां यद् दूरे वर्ते तन्मनसः सन्निकर्षार्थम्**, दृशो दूरे स्थितो मनसि सन्निकृष्टो भवति, तत्र हेतुमाह **प्रिय** इति । अयमर्थः । बहिर्भगवति गोपिका दृष्टिं प्रक्षिपन्ती स्वधर्मान् दृष्टिधर्मान्वा योजयति न तु स्वयं भगवद्धर्मान् गृह्णाति, मनसि तु भगवति समागते मनो भगवद्धर्मान् गृह्णाति, एतत्तु हिताचरणं प्रियस्य कार्यम् । अनेन योगाद्यपेक्षयापीयमवस्था समीचीनेति ज्ञापितम् । योगे हि चक्षुर्वन् मनोपि स्वधर्मानेव भगवत्यारोपयति, परं स्वयं निर्माणार्थं शास्त्रतः तद्धर्मान् गृह्णातीति विशेषः । विरहेण स्मरणे तु बलादागत इति भगवानेव स्वधर्मान् स्थापयति, मनोधर्माणां दुर्बलत्वाद्

श्रीपुरुषोत्तमकृतो भ्रमरगीतप्रकाशः ।

**यत्त्वित्यत्र । प्रकारविशेषमिति ।** वक्ष्यमाणरीतिकस्मरणादिरूपत्वम् । **स्वधर्मान दृष्टिधर्मान्वेति ।** देशकालपरिच्छेदरूपान् । नित्ये परिच्छिन्ने समागमस्यैवाविर्भावत्वेन भक्तानां ब्राह्मदेहस्य कालपरिच्छेदाभावात्पक्षान्तरमुक्तम् । ननूपदेशोक्तसिद्धान्ते ब्रह्मवादाद्विषयाणामपि तदात्मकत्वेनात्मगामितानावश्यकीत्यतआहुः

१०-४४-३५

श्रीविठ्ठलेशात्मजश्रीवल्लभकृतलेखः ।

**वियोगाभावमिति ।** भेदाभावमित्यर्थः । **वियोगस्येति** दूरे स्थितिलक्षणस्येति शेषः । **तद्व्यधिकरणमिति । तद्** उत्तमत्वं **व्यधिकरणं** लोकप्रतीतौ वियोगस्यानुत्तमत्वम्, अत्र चोत्तमत्वमुच्यते, अतो विरुद्धं विरोधयुक्तमधिकरणं यस्य तादृशमित्याशङ्क्य वियोगस्य चतुर्विधपुरुषार्थसाधकत्वादुत्तमत्वमेवेत्याहेत्यर्थः ।

**यत्त्वहमित्यत्र ।** चतुर्विधपुरुषार्थरूपत्वमेकस्य कथमित्यत आहुः । **प्रकारविशेषमिति ।** स्मृतिविषयत्वं, गुप्ततया संरक्ष्यत्वं, सर्वकामनाविषयत्वं, सायुज्यदातृत्वं चेति प्रकारचतुष्टयम् । तत्र तत्तत्प्रकारमापन्नस्तत्तत्पुरुषार्थरूप इत्यर्थः । **तत्त्वनिरूपणमिति ।** षड्भिः श्लोकैस्तत्त्वं स्वरूपं निरूपितम् । अधुना पुरुषार्था निरूप्यन्ते इति पूर्वव्यावृत्तिरित्यर्थः । **स्वधर्मानिति ।** कामादीनित्यर्थः । **दृष्टिधर्मान्**, कटाक्षादीनित्यर्थः । **स्वधर्मानेवेति ।** स्वयं भाव्यमानानित्यर्थः । **स्वयं निर्माणार्थमिति ।** मानस्या मूर्तेः कल्पनार्थं प्रादेशमात्रत्वादिधर्मान् गृह्णाति । तदपि **शास्त्रत** एव न तु साक्षादनुभव इति भावः ।

विपरीतत्वाच्च भगवतः, यतोहं प्रियः अतो दूरे वर्ते । मनसा ह्यात्मा सम्बद्ध इति च । तथा सत्यात्मगामि भवति, विषयेषु तु तेषामभावाज् जन्मान्तरसाधकत्वेनानर्थहेतुत्वमेव । किञ्च । न केवलं सन्निकर्षमात्रं फलं किन्त्वन्यदप्यस्तीत्याह **मदनुध्यानकाम्ययेति** । ममानुध्यानमेव ममाभिप्रेतम्, गोपिकाश्चेन्मदभिध्यानं कुर्वन्ति तदाहं तासु रतिं करोमि नत्वन्यथा, अक्लिष्टकर्मत्वात्, अतः स्वार्थमप्येवं करोमीत्यर्थः । कामेन हि सम्बन्ध उभयोः, स च मनसि प्रतिष्ठितः, मनसो दूरभावे मानादिना सम्बन्धाभावादहमपि निवृत्तो भवामि ॥ ३५ ॥

ननु किमेतदुच्यते, अस्माकं तु सर्वदैव त्वयि मन इति चेत्तत्राह **यथा दूरचर** इति ।

**यथा दूरचरे प्रेष्ठे मन आविश्य वर्तते ।**
**स्त्रीणां च न तथा चेतः सन्निकृष्टेक्षिगोचरे ॥ ३६ ॥**

अयमेव च गोपिकानां धर्मः यथा सर्वदा मां स्मरन्ति, ममाप्ययं धर्मः यथा ताभ्यः आनन्दं प्रयच्छामि, एतदुभयं तदैव घटते नान्यथेति धर्मो निरूपितः । अर्थोपि भगवानेव परं गुप्ततया संरक्ष्यः, तमेव हि गोपायति यत्र निरन्तरं मनस्तिष्ठति, अन्यथा क्षणमपि प्रमादे अर्थो गच्छेत् । अतः पाक्षिकः कादाचित्कोपि दोषः परिहरणीय इति सन्निकर्षा-

---

श्रीपुरुषोत्तमकृतो भ्रमरगीतप्रकाशः ।

**विषयेष्वित्यादि** । **तेषामिति** । भगवद्धर्माणाम् । तथा च तदात्मकत्वाविशेषेपि धर्माभावान्न तथा सामर्थ्यमतः सा आवश्यकीत्यर्थः । **किञ्चेत्यादि** । एतेन सन्दर्भेण । सर्वात्मभावेन सदास्यलास्यमस्यानिशामिति फलार्थं तथाकरणमित्युक्तम् ।

---

श्रीविठ्ठलेशात्मजश्रीवल्लभकृतलेखः ।

**दुर्बलत्वादिति** । विरहेण क्षामत्वादितिभावः । **विपरीतत्वादिति** । प्रबलत्वादित्यर्थः । **इति चेति** । दूरस्थित्या मनसः सन्निकर्ष इति आत्ममनसोः सम्बन्ध इति च हेतोस्**तथा सति** बलाद्भगवति मनस्यागते सति भगवत्स्वरूपं **आत्मगामि** भवतीत्यर्थः । **विषयेषु त्विति** । मनसि भगवांस्तद्धर्माश्च स्थिताः । विषयेषु तु भगवत्तद्धर्माणामभावात्तत्रात्मसम्बन्धेनर्थ एवेत्यर्थः । मूले मनःसन्निकर्षस्य फलत्वमुक्तं तत्स्वरूपतो न सम्भवति । आत्मनो भगवत्सम्बन्धस्याभीष्टत्वात् । अतस्तत्साधकत्वेन फलत्वं विवृतौ विवृतमिति भावः । **सन्निकर्षमात्रं फलमिति** । फलं मत्सम्बन्धसम्पादकत्वादिति शेषः । **अन्यदपीति** । मदनुध्यानमपि मद्रतिसम्पादकत्वात्फलमित्यर्थः । **अक्लिष्टकर्मत्वादिति** । अनुध्यानाभावे सङ्गातस्य रसात्मकत्वाभावेन तत्र रमणे क्लेशः स्यादित्यर्थः ।

**यथा दूरचरे इत्यत्र** । **एतदुभयमिति** । स्वामिनिकर्तृकं स्मरणं भगवत्कर्तृकं चानन्ददानं दूरस्थितावेव घटते इत्यर्थः ।

पेक्षया विप्रकर्षे मनसः स्थैर्यमाह **दूरचरे** दूरेऽप्यस्थिरे, अन्यथा स्वयं गच्छेन् निराशो वा भवेत्, अतो दूरचरे आवश्यके **प्रेष्ठे** यथा **मनो वर्तते** निश्चलं सर्वदा, तत्रापि **स्त्रीणाम्**, निकटे हि शीघ्रमेव मानादिदोषोत्पत्तिसम्भवात्, चकारादन्येष्वपि सम्बन्धेषु पुत्रादिषु यथा **पुत्रं** माता स्मरति पिता वा, एवमन्यत्रापि, **तथा सन्निकृष्टे चेतो** न स्मरति, अयं हि बहिः पूर्वस्त्वान्तरः । किञ्च । अय**मक्षिगोचरः** । नह्यन्यविषये अन्यदिन्द्रियं स्वतन्त्रतया प्रवर्तते । अत एवाक्षिगोचरे न चेतः प्रवर्तते, बलिष्ठं च चेतः, अन्यथा प्रत्यक्षे विषये अन्यचित्तता न स्यात् ॥ ३६ ॥

नन्वस्माभिः त्वत्प्राप्त्यर्थं चिन्ता क्रियते, तथा सति किं मनःस्थापनेन किं निरन्तरसम्बन्धेन वा । कामार्थं हि प्रयत्नः लोके च यादृशः व्यवहारसिद्धः, तत्र क्षणं मनश्चाञ्चल्यमावश्यकत्वान् न विगीतमित्याशङ्क्याह **मय्यावेश्येति** ।

**मय्यावेश्य मनः कृत्स्नं विमुक्ताशेषवृत्ति यत् ।**
**अनुस्मरन्त्यो मां नित्यमचिरान्मामवाप्स्यथ ॥ ३७ ॥**

अहं हि कृत्स्नः प्रसादेनापि प्राप्तः कृत्स्नेनैव साधनेन प्राप्तुं योग्यः, सा च कृत्स्नता अस्यामेवावस्थायां भवति नान्यथा, कृत्स्नतायां हेतुं वदन् अवस्थान्तरे तदभावमाह **विमुक्ताशेषवृत्तीति** । विमुक्ताः सर्वेभ्यो विषयेभ्योशेषा दशापि वृत्तयो यस्य, एकादश द्वादश वा । सहजाश्चेत्, गुणकृतास्तु दशैव, ताः भ्रमरवाक्येषु निरूपिताः । 'एकादशामी मनसो हि वृत्तय' इत्यत्र स्वाभाविका अपि निरूपिताः । **ननु** सर्ववृत्त्यभावे स्वरूपनाश एव स्यादित्याशङ्क्याह **यदिति** । प्रसिद्धं तन्मनः, इदानीं त्वह-

---

श्रीपुरुषोत्तमकृतो भ्रमरगीतप्रकाशः ।

**यथा दूरचरेत्यत्र** । **दोष** इति । विस्मरणात्मकप्रमादरूपः । **अयमिति**, पुत्रादिसम्बन्धः । **पूर्वो** भगवदीयः । नन्विन्द्रियत्वस्य तुल्यत्वात्किं मनोनि-
१०-४४-३६ वेशाग्रहणेत्यत आहुः **बलिष्ठमित्यादि** । तथा चातो निर्बन्ध इत्यर्थः । एवं चात्र निरन्तरमनोविषयत्वेन रूपेण भगवानेवार्थ इत्युक्तम् ।

**मयीत्यत्र** । **प्रसादेनेति** । श्रुतीनामग्निकुमाराणां च पूर्वं दत्तवरात्मकेन ।

---

श्रीविट्ठलेशात्मजश्रीवल्लभकृतलेखः ।

**मय्यावेश्येत्यत्र** । **प्रसादेनापीति** । अपिशब्दोऽग्रिमेण सम्बध्यते । अनुग्रहेण प्राप्तोपीत्यर्थः । **कृत्स्नतेति** । साधनानामिति शेषः । **अवस्थान्तर** इति विरहव्यतिरिक्तावस्थायामित्यर्थः । **तदभावमिति** । वृत्तिविमोकाभावमित्यर्थः । **स्वरूपनाश** इति । सूर्यस्य किरणात्मकत्वात्तन्नाशे तन्नाश इवेत्यर्थः । **प्रसिद्धमिति** । अन्नमयत्वादिनेति शेषः,

माविष्टः, अतः परं भवतीभिर्मय्यावेश्य बलान्मयि मनो निवेशनं कृत्वा पश्चाच्छीघ्रमेवाहं प्राप्यः । ननु वस्तुविचारे मनस्त्वन्यदेव, तस्मिन्निविष्टे कथं भगवत्प्राप्तिरिति चेत्तत्राह **अनुस्मरन्त्य** इति । मनोद्वारा आत्मापि स्मरति । यद्यपि स्मरणं चेतसो धर्मस्तथाप्यनुस्मरणमात्मन एव, अनेनोभयविधोपि सम्बन्धो निरूपितः । मनोद्वारा स्वयं भगवति प्रविष्टाः स्मरणद्वारा च भगवांस्तासु प्रविष्ट इति । एवं सत्याचिरादेव **मामवाप्स्यथ,** परम्परया नित्यसम्बन्धे सङ्घर्षादन्तरास्थितं गच्छति । तथा मनोविलये चित्तस्यापि विलयादचिरादेव प्राप्तिः, आत्मगाम्येव कामेन फलरूपोहं मुख्य इति तात्पर्यम् ॥ ३७ ॥

एतस्य निदर्शनं वदन् मोक्षप्रकारमाह **या मयेति** ।

**या मया क्रीडता रात्र्यां वनेस्मिन्व्रज आस्थिताः ।**
**अलब्धरासाः कल्याण्यो मापुर्मद्वीर्यचिन्तया ॥ ३८ ॥**

---

श्रीपुरुषोत्तमकृतो भ्रमरगीतप्रकाशः ।

१०-४४-३७ **तदिति** । 'शुद्धं कामविवर्जितमि'ति श्रुतावशेषवृत्तिरहितत्वेन वृत्त्यभावेपि स्वरूपतः सिद्धमित्यर्थः । अनाशे हेत्वन्तरमप्याहुः **इदानीमि**त्यादि । **आत्मन एवेति** 'प्राणानां विज्ञाने विज्ञानमादाये'तिश्रुतावात्मधर्मत्वेन कथनादित्यर्थः । अनूपसर्गेणेत्यर्थः । काममोक्षयोः स्वरूपमाहुः **आत्मगामी**त्यादि । **तथा** च कामेनात्मगामी भगवान् कामः । पूर्ववत्सर्वसम्बन्धो ब्राह्मदेहेन यदा तदा मोक्षरूप इत्यर्थः ।

---

श्रीविट्ठलेशात्मजश्रीवल्लभकृतलेखः ।

न तु वृत्त्यात्मकत्वेन प्रसिद्धमित्यर्थः । **उभयविधोपीति** । एतन्निरूपितो भगवन्निरूपितश्चेत्यर्थः । एवं स्वप्राप्तौ युक्तिमाहुः । **परम्परयेति** । जीवभगवतोरन्त**रास्थितं मन** उभयसङ्घर्षादेव गच्छति लीनं भवति । एवं **मनोविलये** सति । **तथा** तेनैव प्रकारेण **चित्तस्यापि** विलयो भवति । तदा क्रियाज्ञानशक्त्योरुभयोरप्यन्तरास्थितयोर्विलयान्मत्प्राप्तिर्भवति । मनः कर्मप्रधानम् । चित्तं ज्ञानप्रधानम् । **आत्मेति** । फलरूपोहं कामेनाप्यात्मगामी मुख्यः । इन्द्रियादिगामी तु गौण इत्यर्थः । **एतस्येति** । मुख्यगौणभावस्येत्यर्थः । सकामत्वेपि अन्तर्गृहगतासु सङ्गाताभावान् ममात्मगामित्वेन तदैव सङ्गातस्य पूर्वदलात्मकत्वापत्त्या तदधिकारानुसारेण पूर्णं फलं तदैव सिद्धम् । भवतीषु तु मुख्यफलदित्सया दलद्वयमनुभावयितुं तदा केवलमात्मगामित्वाभावेन मनोघर्षणान्तप्रकारैरुत्तरदलात्मकत्वं सेत्स्यति । तदा मुख्यफलमलौकिकसामर्थ्यं सर्वात्मना दत्तं भविष्यति । तासां तदैव तदधिकारानुसारेण पूर्वफलप्राप्तिर्भवतीनां विलम्ब इत्येतावद्धर्ममादाय तत्प्राप्यस्य मुख्यत्वमेतत्प्राप्यस्य गौणत्वं चोक्तम् । वस्तुतस्तु दलद्वयानुभवादेतत्प्राप्यस्यैव मुख्यत्वमिति भावः ।

भवत्यः समागताः, अन्तर्गृहगताः गृह एव स्थिताः, तास्तदैव सर्वप्रकारेण मां प्राप्तवत्यः, न तु भवत्यः, अनेनैव निदर्शनेन भवतीभिरप्यहं प्राप्तव्यः, तस्मान्मदर्थं जीवनस्थापनमिति पक्षो निरर्थकः । अन्यथा समागतानां भवतीनां पुनः क्लेशो न भवेत् । अनुभवसिद्धश्च क्लेशः । ननु ताः प्रतिबन्धेन तथाभूताः कथं स्तुत्या इत्याशङ्क्याह । **कल्याण्य** इति । तासां महद्भाग्यमस्तीति अवश्यप्रतिबन्धरूपं दुरितं दुष्ट एवोपक्षीणमिति कण्टकेन कण्टकोद्धारवद्देहनिराकरण एवोपक्षीणम्, भवतीनां तु तद् दुरितं पश्चादिमामवस्थां प्रापितवत्, अतो मदुक्तप्रकारेण दोषं परित्यज्य तामवस्थां प्राप्य मां प्राप्स्यथेति भावः । **राज्यां क्रीडता मया सहाललब्धरासाः**, क्रीडा स्वतः सिद्धेति निरूपणार्थं तथोक्तम् । प्रतिबन्धाभावाय राज्यामिति, **वन** इति साधनसम्पत्तिः, **मयैव** क्रीडा क्रियत इति न तासां प्रयासः, **अस्मिन्नेव वन** इति भगवानपि तत्रैव स्थित्वा वदतीति ज्ञापितम् । **अस्मि-**

---

श्रीपुरुषोत्तमकृतो भ्रमरगीतप्रकाशः ।

**या मयेत्यत्र** । **अन्यथेति** । सर्वप्रकारे समागमने । **तथोक्तमिति** । 'मया क्रीडते'तिसमभिव्याहारेणोक्तमित्यर्थः । **निर्बन्धेनेति** । एतेन क्रीडास्थापनस्यापि नित्यत्वं सूचितम् । एतस्य स्वतन्त्रलिखने टिप्पण्यां च निर्गुणदेहावरणभूतकार्यदेहस्यानङ्गीकार इति विशेषः । सिद्धान्तस्तूभयत्रापि सुबोधिनीस्थ एव । समवायित्वस्यैव समाधायकत्वादिति न विरोधलेशोपि शङ्कनीयः । एवं च देहांशेपि चतुर्व्यूहन्यायेन पूर्वं सगुणस्य ब्राह्मेन्तर्भाव इदानीं च तस्मिन्नस्येति सर्वं सुस्थमिति तदीयैर्विभावनीयम् ।

१०-४४-३८

---

श्रीविट्ठलेशात्मजश्रीवल्लभकृतलेखः ।

**या मयेत्यत्र** । **मां प्राप्तवत्य** इति । मां पूर्वदलात्मकमित्यर्थः । **न तु भवत्य** इति । पूर्णफलस्य दलद्वयानुभवस्य दित्सितत्वादिति भावः । **निदर्शनेनेति** । यथा तासां मम केवलमात्मगामित्वे पूर्वदलात्मकत्वं सिद्धम्, तथा भवतीनामपि मम केवलमात्मगामित्वे सञ्जाते स्वसत्ताऽस्फूर्त्या उत्तरदलात्मकत्वं सेत्स्यतीत्यर्थः । **तस्मादिति** । इन्द्रियादिगामित्वे सर्वात्मना मत्प्राप्त्यभावादित्यर्थः । **जीवनस्थापनम्**, सञ्जाते स्वसत्ताज्ञानम् । स्थापनस्य बुद्धिपूर्वकत्वादिति भावः । **निरर्थक** इति । मुख्यफलयुक्तो न भवतीत्यर्थः । साधनरूपसेवार्थमेव देहादिभावस्य स्थाप्यत्वं शास्त्रसिद्धमिति भावः । **अन्यथेति** । देहादिभावेपि मुख्यफलप्राप्तावित्यर्थः । **दुरितमिति** । फलप्रतिबन्धिका भगवदिच्छेत्यर्थः । **भवतीनां त्विति** । मुख्यफलस्य दित्सितत्वात्सायुज्ये प्रतिबन्धिका भगवदिच्छेमां मुख्यामवस्थामुत्तरदलानुभवक्षमां प्रापितवतीत्यर्थः । **अत** इति । एतावत्पर्यन्तावस्थायाः प्राप्तत्वादित्यर्थः । **तामवस्थामिति** । यस्यामवस्थायामहमात्मगामी भवामि तादृशामवस्थामित्यर्थः ।

न्निति व्रजसम्बन्ध्यपि, अस्मिन्नेव व्रजे ता आस्थिता इति भवतीनामपि निर्बन्धे- नैवात्र स्थापनम् । अलब्धरासा इति । तासां भाग्यमुपभोगे नोपक्षीणमिति ज्ञापितम्, अत एव पूर्णभाग्याः । ननु तासां किं साधनमित्याकाङ्क्षायामाह मद्वीर्यचि- न्तयेति । ता हि गमनार्थं प्रवृत्ताः भर्त्रादिभिः प्रतिबद्धाः तत्प्रतिबन्धाभावाय भगवत्परा- क्रमं स्मृतवत्यः । ततो भगवद्धर्मा अप्यक्लिष्टा इति स एव पराक्रमः तदीयं तेभ्यो दत्वा स्वबालकमिव दोषान्निवार्य भगवन्तं गमयामास । अतो मत्पराक्रमस्यैव चिन्तोचिता न तु दोषपुरःसरं ममेति भावः । (¹यद्वा । नन्व'चिरान्मामवाप्स्यथे'त्यनेन व्रजे समागतस्य भग- वतः पूर्ववन्मिलनलक्षणा प्राप्तिरुच्यत उतान्तर्गतगोपभार्याणामिव सोच्यते । आद्या चेदो- मिति ब्रूमः । अन्त्या चेदनिष्टत्वान्नेदं समाधानमित्यत आह या मयेति । या गोप्यो व्रज- स्थिता एव वने स्थितं मामापुः, आक्षेपलभ्यत्वादमङ्गलत्वाच्च तद्देहत्यागः स्पष्टतया नोक्तः, देहत्यागपूर्वकं तासां स्वप्राप्तौ हेतुभूतं विशेषणमाह । रात्र्यां क्रीडता मया सह पूर्व- मलब्धरासास्ता, यतो व्रजस्थिता एव सत्यो वने स्थितं मामापुरित्यर्थः । भवतीनां लब्धरासत्वान्न तथा भविष्यतीति भावः । अत एव कल्याण्य इति सम्बोधनम् । अत्रायं भावः । रासे हि पूर्णः स्वरूपानन्द एतासु स्थापितः, स च भगवत्स्वरूपात्मक इति तदनु- भावेन विरहेपि जीवनमेव सम्पद्यते न वैपरीत्यं भवितुं शक्नोति । यद्यप्ययं भावोतिकठि- नोत एव प्रियेणा'प्यतिकृच्छ्रेण प्रायः कथञ्चने'ति पदत्रयमुक्तम् । अग्रे च 'प्रत्यागमनसन्दे- शै'रिति प्राणधारणे हेतुरुक्तः । तथापि सन्देशानुसन्धानमप्युक्तधर्मकार्यमेवेति ज्ञेयम् । अन्य- थैतस्य सर्वतिरोधायकत्वेनातितीक्ष्णत्वेन क्षणमात्रेणैवान्यथा भवेत्, अतः सुष्ठूक्तं देहत्यागे तासामलब्धरासत्वं हेतुरिति । तथा च तासु विरहसामयिकजीवनहेतूक्तरूपधर्माभावात्तथा प्राप्तिरभूद्भवतीनां तु तद्वत्त्वाद्यथा पूर्वमेव मिलनं भविष्यतीति, अत एव जन्मोत्सवे'प्या- त्मानं भूषयाञ्चक्रु'रित्यत्र शरीरपदं त्यक्त्वात्मपदं तद्वाचकमुक्तमविकृतत्वज्ञापनाय । अन्यथा स्वक्रीडातदलब्धरासत्वोक्तिप्रयोजनं न पश्याम इति) ॥ ३८ ॥

श्रीविट्ठलेशात्मजश्रीवल्लभकृतलेखः ।

रात्र्यामित्यादि । एतादृश्यां क्रीडायां सत्यां कृपया द्वितीयदलमप्यनुभावयेत्, तादृशक्रीडा- भावात्सायुज्यमेव दत्तमिति भावः । व्रजसम्बन्ध्यपीति । एतासां भागरूपो भगवान् व्रजसम्बन्धी न तु मथुरादिसम्बन्धी । अतोप्यस्मिन्निन्नितिपदमुक्तमित्यर्थः । अत्रैव स्थापनमिति । अत्रैव स्थानस्य तादृशफलाधिकरणत्वादित्यर्थः । तासां भाग्यमिति । अविलम्बेन प्राप्तिहेतुर्भगवदिच्छेत्यर्थः । भवतीनां तूपभोगेन परमकृपयोत्तरदलमनुभावयितुं तादृशं भाग्यमुपक्षीणं तादृशफलदाने असमर्थं कृतवानिति भावः । कालकर्मभगवदिच्छानामन्यत- रदैवशब्दवाच्यमित्युक्तत्वाद्दैवपर्यायौ दुरितभाग्यशब्दाविच्छापरत्वेन व्याख्याताविति ज्ञेयम् ।

(१) चिह्नान्तर्गतं श्रीप्रभूणाम् ।

एवमुपदेशेन तासां दोषो निवृत्त इत्याह **एवमिति** पञ्चदशभिः ।

श्रीशुक उवाच—**एवं प्रियतमादिष्टमाकर्ण्य व्रजयोषितः ।**

**ता ऊचुरुद्धवं प्रीतास्तत्सन्देशागतस्मृतीः ॥ ३९ ॥**

विद्यारूपास्ता इति तासां चतुर्दशवाक्यान्युपक्रमश्चापरः । तथा सति सर्वा एव भगवत्कलास्तासु सिद्धा इति निरूपितं भवति । प्रतारणशङ्काभावायाह **प्रियतमेनादिष्टमिति** । आज्ञापूर्वकमुक्तम्, अमानने दण्डोपि सूचितः । **व्रजयोषित** इति शुद्धाः कापट्यरहिताः, ताश्च भगवतानुगृहीताः, उक्तार्थफलं स्वस्मिन् जातमिव ज्ञापयितुमिव उत्सवरूपम्, उत्सवे प्रियस्मरणं दृढं भवतीति, उपदेशेनैव **प्रीताः** पूर्वासूयादिक्लेशान् त्यक्तवत्यः । ननु कथं पूर्वमाक्रोशः, कथमिदानीं प्रीतिः, विरहस्य तुल्यत्वादित्याशङ्क्याह । **तत्सन्देशेन** तादृशसन्देशेन, पूर्वं ज्ञात एवार्थः मध्ये कालादिदोषाद्विस्मृतः भावान्तरमुत्पादितवान्, स पुनरिदानीं स्मृतोस्मरणकार्यं च दूरे चकार ॥ ३९ ॥

भगवद्वीर्यस्मरणमावश्यकमिति कृतमभिनन्द्य भाविवीर्यस्मरणार्थं कुशलं पृच्छन्ति **दिष्ट्येति** ।

गोप्य ऊचुः—**दिष्ट्याहितो हतः कंसो यदूनां सानुगोघकृत् ।**

**दिष्ट्याप्तैर्लब्धसर्वार्थैः कुशल्यास्तेच्युतोधुना ॥ ४० ॥**

दोषरहितास्त एव भावाः पुरुषार्थसाधका इति सिद्धानेव कीर्तयन्ति । **दिष्ट्या** अस्मदादिभाग्येन **कंसो हतः** । अदृष्टस्य कारणत्वं मातुलवधदोषाभावाय, पूर्वं हि ताः 'अक्रूर आगतः किं वे'ति वाक्ये तं दोषं गृहीतवत्यः, तस्य प्रतिप्रसवोत्र निरूप्यते । यतः **अहितः**, न स्वस्य नान्येषाम्, अतस्तस्यापि भाग्येन स हतः । किञ्च । सुतरां **यदूनां** भक्तानामहितः, **सानुगो** भ्रातृसहितः, अनेन प्रसङ्गाद्भ्रातृवधः कृत इति निराकृतम् । केवलं हितमेव न करोतीति न, किन्तु **अघकृत्** पापं सम्पादयति । हितं न करोति पापं च कारयति येन तेषां परलोकनाशः स्यात् । तस्मादेतादृशो हन्तव्य एव । किञ्च । **आप्तैर्बन्धुभिः** पुनर्भगवत्कृपया **लब्धोर्थः** सर्वोपि पुरुषार्थो यैः । यत्र कालातिक्रमोपि स्वतः सिद्धः, अनेन

---

श्रीपुरुषोत्तमकृतो भ्रमरगीतप्रकाशः ।

**एवं प्रियतमेत्यत्र** । श्लोकसङ्ख्यातात्पर्यमाहुः **तथासति सर्वा** इति । उपदेशे सति पञ्चदशेत्यर्थः । भगवतो मानसीनत्वान्मनसः षोडशकलत्वादेकस्या अति-

१०-४४-३९ शिष्टायाः पोषिकाः शेषाः सिद्धा इति भावः । दण्डोत्र वियोगबाहुल्यरूप इति प्रतिभाति । **पूर्वं ज्ञात** इति । 'मया परोक्षं भजते'त्यनेन वचनेन ज्ञात इत्यर्थः ।

**दिष्ट्येत्यत्र** । अस्मिन् श्लोके पूर्वसिद्धोत्र को वा भाव इत्यतस्तं विशदयन्ति **अक्रूर**

१०-४४-४० इत्यादि । **तमिति** । कंसहननात्मकं गुणम् ।

तेषामहितं दूरीकृत्य हितं च सम्पाद्य अग्रे तदनुवृत्त्यर्थमधुना कुशली किमास्ते, केवलमयमनुवादः, यतः सोच्युतः न तस्य काचिदन्या संभावनास्ति ॥ ४० ॥

एवं माहात्म्यज्ञानं सर्वोपकारकत्वं च भगवतो निरूपितम् । ततः पुरस्त्रीषु मात्सर्याभावज्ञापनार्थमाहुः **कच्चिद्गदाग्रज** इति ।

**कच्चिद्गदाग्रजः सौम्य करोति पुरयोषिताम् ।**
**प्रीतिं नः स्निग्धसव्रीडहासोदारेक्षणार्चितः ॥ ४१ ॥**

**गदाग्रज**त्वेन वंशजननसामर्थ्यमुक्तम् । अस्मिन् गते मथुरायां रोहिण्यां गदो जातः, अनेन भगवतः प्रद्युम्नरूपता निरूपिता । अत एव स्त्रीणां सर्वकामनापूरक इति **पुरयोषितां प्रीतिं कच्चित्करोतीति** प्रश्नः सङ्गच्छते । **सौम्ये**ति सम्बोधनं तथा सति दोषदृष्ट्यभावाय । ननु ता धाष्ट्र्येन कथं प्रपन्ना भविष्यन्तीत्याशङ्क्याहुः **नः स्निग्धसव्रीडहासोदारेक्षणार्चित** इति । लोकः पूजितपूजक इति प्रथमतोस्माभिः स्निग्धादिभावैरर्चितः, अनेनास्माभिः पूजित एव न तु भगवानुपभुक्त इति कामाभावः सूचितः । अनेन साभ्यासोपि निरूपितः । कुत्सितेपि रसे कदाचित्पुरुषः प्रवर्तत इति भगवतोप्यस्मासु प्रवृत्तिः, इतः उत्तमाः पुरस्त्रियः, तत्रापि न स्वतः प्रवृत्तेः किन्तु तदिच्छयेति ज्ञापयितुं तासां प्रीतिं करोतीति प्रश्नः । ब्रह्मानन्दरूपस्य स्त्र्यानन्दोत्यधम इति निवृत्तिरपि संभवत्याग्रहे सति प्रवृतिरपि संभवतीति, आदौ धाष्ट्र्यसिद्ध्यर्थं स्निग्धा भगवति दृष्टिः, तत उदारा भगवद्धर्मप्राप्तिसूचिका, भगवतोपि सौख्यदायिनी शब्दव्यवहितापि सर्वेषां सर्वपुरुषार्थदायिनी च । मध्ये हासः स्वपुरुषार्थसूचकः, तस्यापि प्रथमप्रवृत्तौ पश्चात् कृतार्थतेति ज्ञापयितुं व्रीडा-

---

श्रीपुरुषोत्तमकृतो भ्रमरगीतप्रकाशः ।

**अग्रिमे कामाभाव** इति । भगवतीति शेषः । **साभ्यास** इति, भगवानिति शेषः । कामाभावे हेतुमाहुः **कुत्सितेत्यादि** । इदं **न** इति पदस्य

१०-४४-४१ तात्पर्यम् । अस्मिन् श्लोके 'मधुप कितवे' त्यस्य प्रतिप्रसवः ।

---

श्रीविट्ठलेशात्मजश्रीवल्लभकृतलेखः ।

**कच्चिद्गदाग्रज** इति श्लोके । **स्निग्धसव्रीडे**त्यत्र । **भगवद्धर्मे**ति । औदार्यस्य भगवद्धर्मत्वादिति भावः । **मध्ये** इति । स्नेहौदार्ययोर्मध्ये इत्यर्थः । **स्वे**ति । स्वस्य पुरुषार्थस्तृतीयस्तत्सूचक इत्यर्थः । तदभावे विहितस्नेहः स्यादिति भावः । **तस्यापी**ति । हासस्यापि प्रथमप्रवृत्तौ व्रीडाप्युक्तेत्यन्वयः । तत्र हेतुः **पश्चा**दिति । पूर्णरसानुभवस्तु पश्चाद्भविष्यतीति ज्ञापयितुमित्यर्थः । तदा कृतार्थतायां सत्यां रसातिमादादुद्दामो हासो

प्युक्ता । एवंविधैरीक्षणैरार्चितः, प्रथमतः स्नेहेन परिग्रहः, ततः भगवति प्रसन्ने प्रथमप्रवृत्त्या व्रीडा, ततो निर्भरेणानन्देन हासः, ततः सर्वामेव कलां प्रयच्छतीति उदारा भवति ॥४१॥

**ननु** निर्लेपो भगवान् किमित्येवं करिष्यतीति आशङ्क्याभिप्रायमाहुः । **कथमिति ।**

**कथं रतिविशेषज्ञः प्रियश्च वरयोषिताम् ।**
**नानुबध्येत तद्वाक्यैर्विभ्रमैश्चानुभावितः ॥ ४२ ॥**

स हि सर्वरतिविशेषान् जानाति, नागरको बन्धो नागरीष्वेव भवति, अन्यथेदं ज्ञानं व्यर्थं स्यात् । कदाचिदेतदवश्यं प्रकटनीयम्, स्वकीयासु तु न भवत्येव । **किञ्च ।** उत्तमस्त्रीणां स **प्रियः** प्रीतिविषयः, अन्यथोत्तमत्वमेव न स्यात्, अतस्तासां जन्मसाफल्याय स्वस्य ज्ञानसाफल्याय च कथं तद्रसाभिनिविष्टो न भवेदित्याहुः **नानुबध्येतेति ।** अनुबन्धो नाम निरन्तरं वर्द्धमाना प्रीतिः, यथा रेतोमात्रेण न प्रीतिर्नाप्युप्तेनाप्यल्पवृद्धेनापि जातमात्र अङ्कुरे यथा सर्वगुणसंपन्ने पुत्रे भवति, अयमनुबन्धः, अतः कथं निरन्तरं वर्द्धमानया प्रीत्या **नानुबध्येत ।** ननु तथापि पोषकाभावान् मूर्खे पुत्र इव नानुबन्धः स्यात् । तत्राह **तद्वाक्यैरिति,** तासां वाक्यानि **विभ्रमाश्च,** मनोनुरञ्जनं चकारार्थः । एवं कायवाङ्मनसामुत्तमधर्मैरनु **भावितः** अनुभवपर्यन्तं नीतः, भावकद्रव्यैरेव वा भावितः, अनुभवयुक्तो वा कारितः, अभिनिविष्टो हि रसः स्वानुभावं जनयति । वाक्यादीनि चोद्दीपकानि । अतो भगवान् प्रकारद्वयेनापि विभक्तवीर्य आविर्भूतः सम्यग्भावित इति गोपिकानां दोषाभावपूर्विका सर्वगुणसिद्धिर्निरूपिता ॥ ४२ ॥

---

श्रीपुरुषोत्तमकृतो भ्रमरगीतप्रकाशः ।

**कथमित्यत्र । अन्यथेत्यादि ।** एतेन निर्लेपत्वे तत्करणप्रयोजनमुक्तम् । **प्रकार-**
१०-४४-४२ **द्वयेनेति ।** रतिविशेषज्ञत्वेन पुरयोषित्प्रियत्वेन चेत्यर्थः ।

---

श्रीविट्ठलेशात्मजश्रीवल्लभकृतलेखः ।

भविष्यति । प्रथमप्रवृत्तौ तु हासः सव्रीड एव भवति । अत एवैवं परिष्वङ्गेति श्लोके तादृश एव हास उक्त इतिभावः । **व्रीडापीत्यपिशब्दात्स्नेहः । प्रथमत इति । स्नेहेन** दृष्टिभिर्भगवन्तं परिगृह्णातीत्यर्थः ।

**कथं रतिविशेषज्ञ इत्यत्र ।** आभासोक्तं वाक्यार्थं विशदयन्ति । **जन्मेति ।** तासां जन्मसाफल्ये स्वस्य ज्ञानसाफल्ये च भगवदभिप्राय इत्यर्थः । **भावकद्रव्यैरिति ।** पुष्पादिभिरित्यर्थः । **वाक्यादीनि चेति ।** रसस्यानुभाव एव तादृशो यदनुबध्येतैव । **उद्दीपकानि** च सन्तीति चकारः । **अत इति ।** शक्तिषु विभक्तं वीर्यं सामर्थ्यं यस्य । अत एव विभज्यैव शक्तिं कृष्णो भगवानवतीर्ण इति पूर्वमुक्तम् । तत्तद्भागरूप इति यावत् । तादृशः **सन्नाविर्भूतो** भगवान् रसानुभावेनादृष्टप्रकारेण वाक्यैरुद्दीपकैर्दृष्टप्रकारेण, एवं प्रकारद्वयेनापि

भगवानिदानीमुपदेशेन गुरुर्जातः, अस्माभिस्तु पूर्ववासनया पूर्वावस्थोवश्यं स्मर्तव्यः, तथा सति भगवता चेत्स भावः त्यज्यते, तदा अस्माकमपराधो भवतीति भगवतः तस्या अवस्थायाः स्मरणं पृच्छन्ति **अपि स्मरती**ति ।

**अपि स्मरति नः साधो गोविन्दः प्रस्तुते क्वचित् ।**
**गोष्ठीमध्ये पुरस्त्रीणां ग्राम्याः स्वैरकथान्तरे ॥ ४३ ॥**

संभावनया प्रश्नः । ननु स्मरणाभावे कथं उपदेशार्थं प्रेषणमिति चेत्तत्राहुः **पुरस्त्रीणां गोष्ठीमध्य** इति । न तु शास्त्रार्थज्ञानभावनादशायाम् । नन्वेवमुपदेष्टा स्मरिष्यतीति का संभावना, तत्राह **गोविन्द** इति । स ह्यस्माकमिन्द्रः, इन्द्रत्वायैव चास्मदुपयोगं कृतवान् । **किञ्च** । अनुभूतत्वात्तादृशपदार्थानुभवे सदृशादयः संस्कारबोधका इति कदाचित्स्मरणं भवेत्तदाहुः **प्रस्तुते क्वचिदि**ति । तदा हि भगवान् स्वाभिलषितावस्थः सत्यसङ्कल्पश्च, ततस्तामप्यवस्थां सम्पादयेत् । **किञ्च** । व्यावर्तकत्वेनास्मत्स्मरणमावश्यकमित्याहुः **ग्राम्या** इति । कथमेवमन्यथाबन्धं करोषि गोपिकेवेति । **स्वैरकथायाः** स्वेच्छाकथायाः **अन्तरे** मध्ये । नन्वेतदहं कथं जाने तत्राहुः **साधो** इति । सर्वोपकारी च भगवान्, अतो गुह्यमपि वक्तव्यमिति भावः ॥ ४३ ॥

विशेषतो लीलामपि पूर्ववत् स्मरतीति पृच्छन्ति **ताः किं निशाः स्मरती**ति ।

**ताः किं निशाः स्मरति यासु तदा प्रियाभि-**
**र्वृन्दावने कुमुदकुन्दशशाङ्करम्ये ।**
**रेमे क्वणच्चरणनूपुररासगोष्ठ्या-**
**मस्माभिरीडितमनोज्ञकथः कदाचित् ॥ ४४ ॥**

तादृशधर्मविशिष्टाश्चेद् वयं स्मृताः तदा भगवत्परितोषणे गुरुदक्षिणायामपि न किञ्चिद्देयं स्यात्, **ताः** पूर्वा वरदत्ता 'मयेमा रंस्यथ क्षपा' इति, स्वदत्तान् हि स्मरति सर्वोपि ।

---

श्रीपुरुषोत्तमकृतो भ्रमरगीतप्रकाशः ।

१०-४४-४३ **अपि स्मरतीत्यत्र । इन्द्रत्वायैवे**ति । एतेन कामाभावः पुष्टीकृतः ।

---

श्रीविट्ठलेशात्मजश्रीवल्लभकृतलेखः ।

**सम्यग् भावित** इत्यर्थः । **निरूपिते**ति । श्लोकत्रयेणेति शेषः । आद्येन दोषाभावो द्वाभ्यां गुण इति विभागः ।

अग्रिमश्लोकाभासं प्रस्तावयन्ति । **भगवानिदानीमि**ति । **अपि स्मरतीत्यत्र । शास्त्रार्थे**ति । एतासां शास्त्रार्थज्ञानं केन प्रकारेण भवेदिति विचारदशायामित्यर्थः । **साधो इती**ति । साधुत्वेन विकाराराहित्यादन्तरङ्गस्त्वम् । अतो जानीयादित्यर्थः ।

किं कालस्मरणेनेत्याशङ्क्य तद्गतं विशेषमाहुः **यास्विति** । **यासु तदा रेमे** । न तु साम्प्रतम् । कालदेशयोर्विद्यमानत्वेपि रमणाभावात् पुनः पुनः स्मरणम् । तदा वा वयं प्रियाः अधुना तु शिष्याः । **वृन्दावन** इति । स्वच्छन्दलीलास्थानमुक्तम्, नैवं लीला नगरेषु संभवति । **कुमुदैः कुन्दैः शशाङ्केन च रम्ये,** कचिद्दोषोप्यन्यत्र गुणः, यद्यपि शशाङ्कस्तथापि कामे उद्बोधकः । कुमुदमपि रात्रिविकासि । चन्द्रः ससामग्रीकः तत्र रतिवर्द्धनोस्तीति ज्ञापयितुमेवं प्रक्रिया निरूपिता । **कुन्दाः** सर्वकालीनपुष्पाणि । रात्रिविशेषपुष्पाणि साधारणानि, तेषां विकासहेतुश्च यत्र रतिवर्द्धनः, तत्रापि रसोत्पत्त्यर्थं **क्वणचरणनूपुराणां स्त्रीणां यो रासः** तत्सभायाम**स्माभिः सर्वाभिरेवेडिता मनोज्ञा कथा** यस्य । **कदाचिदिति** तस्या अवस्थाया दुर्लभत्वम्, यदीदानीमपि भवेन् मनोज्ञकथया ईडितो भवेत् । ततो लौकिकमपि कुर्यात् । अस्माभिरिति प्रमाणमुक्तम् । क्वणन्ति चरणेषु नूपुराणीति भगवदालम्बनादिभावः सूचितः । यतोस्माननर्तयत् ततो नृत्यगीतादिना समाराधितो भगवान्, तच्चेत्स्मरिष्यति तदा साधनरहिता अपि कृतार्था भविष्यामः, दोषनिवृत्तावेव तात्पर्यमिति भगवतोपि मनोनिग्रहो नाभिप्रेतः ॥ ४४ ॥

उपदेशेन वयं तथा भविष्याम एव, तथापि पूर्ववत् पुनः किं कृपां करिष्यतीत्यभिप्रायेणाहु**रप्येष्यतीति** ।

**अप्येष्यतीह दाशार्हस्तप्ताः स्वकृतया शुचा ।**
**सञ्जीवयन् तु नो गात्रैर्यथेन्द्रो वनमम्बुदैः ॥ ४५ ॥**

अन्यथा 'नो चेद्वयं' इति वाक्यं श्रुत्वा किमिति भोगमङ्गीकृतवान् । तस्मादुत्कटं कामं दूरीकृत्य कोमले जाते पश्चादुपदेशफलं भविष्यतीति पुनः पूर्ववदाकाङ्क्षा । तत्र गमने तु सुखं न भविष्यतीति ज्ञातम्, स्वच्छन्दाभावात् । नन्वीश्वरः कथमायास्यतीति चेत्तत्राहुः **दाशार्ह** इति । दाशानामर्हः योग्यः, यो हि दयालुः सुतरां परदुःखाभिनिविष्टः । एवं

---

श्रीपुरुषोत्तमकृतो भ्रमरगीतप्रकाशः ।

**ताः किमित्यत्र** । तन्निरुद्ध्यादित्युपदेशविरुद्धत्वादिदं वाक्यं भगवदाज्ञाभङ्ग-
१०-४४-४४ मुपदेशस्यासमर्थत्वं च सम्पादयतीत्यतो भगवदाशयमाहुः **दोषेत्यादि** ।

---

श्रीविट्ठलेशात्मजश्रीवल्लभकृतलेखः ।

**ताः किमित्यत्र** । पूर्वश्लोकार्थमनुवदन्ति । **तादृशेति** । व्यावर्तकधर्मविशिष्टा इत्यर्थः । **न देयं स्यादिति** । किमेवमन्यथा करोषि गोपिकेत्युक्ते तस्याः परितोषो जातस्तेन भगवत्परितोषस्तथा चास्मद्धर्मकथनेन तथा जातमिति भगवत्परितोष एवास्माकं गुरुदक्षिणात्वेन सम्पन्न इत्यन्यत्किंचिन्न देयं स्यादित्यर्थः । **अग्रे लौकिकमपीति** । लोकसिद्धं बाह्यरमणमित्यर्थः ।

तापहारकभगवद्धर्मान् निरूप्य स्वतापमाहुः । **तस्रा** इति । आध्यात्मिकादितापव्यावृत्त्यर्थं ज्ञानोपदेश एव क्रियत इति चेत्तत्राहुः **स्वकृतया शुचा** इति । अयं शोको भगवतैव सम्पादितः स्वनिर्गमनात् । शुचा च द्रवमाणा जाता इति साम्प्रतं शूद्रा एव कथमुपदेशयोग्या इति भावः । तस्माच्छोके गत एवाधिकारः । **किञ्च** । जीवने हि जाते पश्चात्सर्वमेवैतत्, सकाममरणे तु न मुक्तिः, अत इदानीं जीवनं यथा भवति तथा गात्रैः मुखारविन्दादिभिः **नोस्मान् सञ्जीवयन्** किमायास्यति । तुशब्दो ज्ञानपक्षं वारयति । ननु विशेषतो भगवत एवंकरणे को हेतुरिति चेत्तत्राह । **यथेन्द्र** इति । साधारणमेव वनं खाण्डववनं वा, न हि पर्जन्यादन्यः दावानलं शामयति । गृहदाहादयस्तु जलान्तरेणापि शाम्यन्ति, तस्मात् क्लिष्टानां तापनाशश्चेदादौ भवेत् पश्चाद् ज्ञानं प्रवर्ततामिति समग्रो मनोरथः ॥ ४५ ॥

संभावनयैतदुक्त्वा युक्त्या निषेधमाहुः **कस्मादिति** ।

**कस्मात्कृष्ण इहायाति प्राप्तराज्यो हताहितः ।**
**नरेन्द्रकन्या उद्वाह्य प्रीतः सर्वसुहृद्वृतः ॥ ४६ ॥**

**कस्मात्कृष्ण इहायास्यतीत्यर्थः** । वर्तमानप्रयोगेणैतज् ज्ञापयन्ति । यद्यागच्छेत्, इदानीमेवागच्छेत्, द्वयमपि कृत्वा गच्छेत्, विलम्बे प्रयोजनाभावात् । ननु साम्प्रतं नागर्यः स्त्रियो भक्ता इति तासां समाधानानन्तरमायास्यतीति चेत् तत्राहुः **प्राप्तराज्य** इति । उत्तरोत्तरमागमने प्रतिबन्धा एव भविष्यन्तीति । आदौ राज्यमेव, ततो मारणीयाः शत्रवः, ततो दिग्विजये **नरेन्द्रकन्यानामुद्वाहः** । ततस्तासु प्रीतिः । ततः **सर्वसुहृद्वृतः** पुत्रपौत्रादिभिः परिवृतः, ततः सर्वानुरोधयुक्तः कथमायास्यतीति भावः ॥ ४६ ॥

ननु यथा ते अनुरोध्याः तथा यूयमपीति ततः समायास्यतीति चेत्तत्राहुः **किमस्माभिरिति** ।

**किमस्माभिर्वनौकोभिरन्याभिर्वा महात्मनः ।**
**श्रीपतेराप्तकामस्य क्रियेतार्थः कृतात्मनः ॥ ४७ ॥**

अस्मत्तापो वा आगमने हेतुः भगवदपेक्षा वा । आद्ये इदानीमेवागच्छेत् । नन्विदानीं महत्कार्यमस्तीति चेत्तत्राहुः **अन्याभिर्वेति** । स्वोपकारात्कार्यावश्यकत्वं नत्वन्योप-

---

श्रीविट्ठलेशात्मजश्रीवल्लभकृतलेखः ।

**अप्येष्यतीत्यत्र** । **अन्यथेति** । उपदेशमात्रे तात्पर्ये सतीत्यर्थः । **सकाममरणे त्विति** । कामनायाः प्रबलत्वात्तस्यां सत्यामुत्तरदलात्मकत्वं न भवेदित्यर्थः । **नुंशब्द इति** । नुशब्दस्य निश्चयवाचकत्वात्पक्षान्तरवारणमित्यर्थः ।

**कस्मादित्यत्र** । **द्वयमपीति** । कामशान्तिमुपदेशं चेत्यर्थः ।

---

१ नु इति लेख पाठः ।

**समासाद्याग्रे** मिलित्वा, **नानोपायनानि पाणौ** येषाम् । स्नेहेन **नन्दादयः अश्रुलोचनाः** सन्तः **प्रावोचन्** ॥ ६६ ॥

तदुपदिष्टोर्थस्तेषां हृदये समागत इति ज्ञापनार्थं तत्फलसिद्ध्यर्थं गुरुं प्रार्थयन्ति **मनसो वृत्तय** इति द्वाभ्याम् ।

**मनसो वृत्तयो नः स्युः कृष्णपादाम्बुजाश्रयाः ।**
**वाचोऽभिधायिनीर्नाम्नां कायस्तत्प्रह्वणादिषु ॥ ६७ ॥**
**कर्मभिर्भ्राम्यमाणानां यत्र क्वापीश्वरेच्छया ।**
**मङ्गलाचरितैर्दानै रतिर्नः कृष्ण ईश्वरे ॥ ६८ ॥**

अस्माकं कायवाङ्मनांसि कृष्णसंबन्धिकार्यपराण्येव भवन्तु । अयमेवोत्कर्षः प्रार्थनीयः न तु लोके प्रसिद्धः अन्यः कोप्युत्कर्षः प्रार्थनीय इति ज्ञापयितुं **कर्मभिर्भ्राम्यमाणानां यत्र** क्वचिद्योनौ सतां तदर्थं प्रार्थनायामुदासीनानां सर्वैरेव **मङ्गलाचरितैर्दानैश्च,** मङ्गलाचरितानि सर्वसाधारणानि, दानं विशेषधर्मः, वैश्येष्वेव देयानामुत्पत्तेः, **कृष्णे रतिरसाधारणा** इतोप्युत्तमास्माक**मस्तु** । द्वयं प्रार्थितं संघातस्य भगवति विनियोगः आत्मनश्च भगवति स्नेह इति । **मनसो** ह्येकादश**वृत्तयः** ताः सर्वाः **कृष्णपदाम्बुज**मेवाश्रित्य तिष्ठन्तु क्रियया ज्ञानेनाभिमतया च । अम्बुजे हि रूपरसगन्धस्पर्शाः स्पष्टाः । शब्दोन्यत्रापि स्वतन्त्रतया विनियोक्ष्यत इति न न्यूनता कापि । **आश्रय**पदेन प्रसङ्गात्करणं निवारितम् । **वाचो**पि **नाम्नामेवाभिधायिन्यो,** नाम तु तत्रैव पर्यवसितसर्वशक्तियुक्तं भवति । नत्वेवंविधानि गुणकर्माणि, पदार्थान्तरवाचकत्वात्, छान्दसप्रयोगाल्लौकिकपरा वाचो मा भवन्त्विति ज्ञापितम् । **कायः** शरीरं च तस्य भगवतः **प्रह्वणा**दिनमस्कारादिपूजासाधनादिषु भवतु । प्रकरणेन प्रार्थना ॥ ६७ ॥

**कर्मभि**रवश्यं भ्रमणम्, **ईश्वरस्या**पि तथैवेच्छेति न कर्मस्वातन्त्र्यम्, अत एव स उत्कर्षोप्रयोजक इति **यत्र क्वापी**त्युक्तम् । ननु कायवाङ्मनसां भगवति विनियोगे

---

श्रीपुरुषोत्तमकृतो भ्रमरगीतप्रकाशः ।

**मनसो वृत्तय इत्यत्र** । रूपादिचतुष्टयातिरिक्तवृत्तीनां कथं भगवच्चरणाश्रयत्वं
१०-४४-६७ भवतीत्यत आहुः **शब्द** इत्यादि । शब्दः गुणगानरूपः ।

---

श्रीविट्ठलेशात्मजश्रीवल्लभकृतलेखः ।

**वाचोभिधायिनीरित्यत्र । नत्वेवंविधानीति** । गुणकर्मणां केषांचित्कथंचिदन्यत्रापि सम्भवात्तद्वाचकत्वे पदार्थान्तरवाचकत्वं स्यात् । नाम्नस्तु तत्रैव शक्तिपर्यवसानात् तदभिधायित्वं प्रार्थितमित्यर्थः ।

मङ्गलाचरितानि कुत्रत्यानीति चेत् । सत्यम् । यावदेतद्भवति तावत्कर्माणि न त्यक्तव्यानीति तेषामन्यथाफलं मा भवत्विति तथा प्रार्थयन्ति । **किञ्च** । ईश्वरभाव एव **कृष्णे** सर्वदा भवत्वित्यपि प्रार्थनात्रयम् ॥ ६८ ॥

ततः संतुष्टस्तथेति **मनसैवा**भ्यनुज्ञाय मथुरामागत इत्याह **एवं संप्रार्थित** इति ।

**एवं सम्प्रार्थितो गोपैः कृष्णभक्त्या नराधिप ।**
**उद्धवः पुनरागच्छन्मथुरां कृष्णपालिताम् ॥ ६९ ॥**

तेषां प्रार्थनया स्वोत्कर्षो वा तेषामन्यभजनं वा ज्ञातमिति शङ्कां वारयितुं **कृष्ण-भक्त्ये**त्युक्तम् । **नराधिपे**ति संबोधनं सेवकानुवृत्तिः स्वाम्यर्थैति ज्ञापनार्था, तस्य प्रीतिरेव मुख्येति **परमप्रीत** इत्युक्तं, वचनं तु निर्बन्धादपि वदेदित्यप्रयोजकम्, **मथुरां पुनराग-च्छत्**, भगवांस्तावत्पर्यन्तं मथुरायामेव स्थितः । **कृष्णपालिता**मिति । विशेषतो भय-शङ्कया स्वयमेव पालयतीति भगवदनागमने विशेषहेतुरुक्तः । अनेन तादृशं स्थानंपरित्यज्य किमित्युद्धवः समागत इति शङ्का निवर्तिता ॥ ६९ ॥

एतत्सर्वं दासभावेनैव कृतमिति ज्ञापयितुं निवेदनमाह **कृष्णाये**ति ।

**कृष्णाय प्रणिपत्याह भक्त्युद्रेकं व्रजौकसाम् ।**
**वसुदेवाय रामाय राज्ञे चोपायनान्यदात् ॥ ७० ॥**

**उपायनान्यदा**दिति सम्बन्धः । भगवन्तं **प्रणिपत्य भक्त्युद्रेक**माह । एतावानर्थः पूर्वं भगवता नोक्त इति प्रायेण भगवान् न विचारितवान् इति । यादृशः प्रेमात्मको भक्तिपदार्थः शास्त्रे निरूपितस्तस्मादाधिक्यमेतद्भावस्योक्तवानिति वा । तेनानिर्वाच्यत्व-मितोन्यत्रादृष्टत्वं च ज्ञापितं भवति । ततो **वसुदेवायाप्युपायनान्यदा**न्मित्रसम्बन्धः तिष्ठतीति ज्ञापयितुम् । **रामाय** चाददात्पूर्वावस्था तथैव तिष्ठतीति । मर्यादामप्यङ्गीकुर्वन्तीति ज्ञापनार्थं **राज्ञे**, चकारादक्रूरादिभ्योपि दोषाभावज्ञापनार्थम् ॥ ७० ॥

**इति श्रीभागवतसुबोधिन्यां श्रीलक्ष्मणभट्टात्मजश्रीवल्लभदीक्षित-विरचितायां दशमस्कन्धपूर्वार्धे चतुश्चत्वारिंशा-ध्यायविवरणम् ॥ ४४ ॥**

---

श्रीकृष्णाय नमः ॥

# पञ्चचत्वारिंशोऽध्यायः ।

एवं पूर्वनिरोधस्य सान्त्वनोत्कर्षवर्णनम् ।
कृत्वा भविष्ययोश्चैव सान्त्वनं विनिरूप्यते ॥ १ ॥
मथुरावासिनः सर्वे राजसाः परिकीर्तिताः ।
सात्त्विकाः पाण्डवा भक्तास्तयोः सान्त्वनमुच्यते ॥ २ ॥
राजसत्वप्रसिद्ध्यर्थं स्त्रीपुंसोरत्र वर्णनम् ।
प्रक्रियान्तररूपा हि किञ्चिद्द्वारा तथा कृताः ॥ ३ ॥
अक्रूर उद्धवान्मुख्यः ततोऽग्रे प्रेषणं मतम् ।
दासभावे तूद्धवस्तु शास्त्रनस्त्वयमेव हि ॥ ४ ॥

---

श्रीपुरुषोत्तमकृतः प्रकाशः ।

पञ्चचत्वारिंशाध्यायतात्पर्यं निरूपयन्त उपोद्घातेनात्र निरूपयतीत्याहुः **एवमि-त्यादि**। एवं प्रसङ्गतः पूर्वकृतनिरोधस्य **सान्त्वनमुखेनोत्कर्षवर्णनं कृत्वे**त्यर्थः। भविष्य-निरोधविषयावाहुः **मथुरे**त्यादि। ननूभयनिरूपणेन कथं राजसत्वस्य प्रकर्षेण सिद्धिरत आहुः **प्रक्रिये**त्यादि । राजसी हि क्रियाविक्षेपयुक्ता। एवं सति इहत्यानां या प्रकृष्टा भगवद्विषयिणी क्रिया सा **आन्तररूपा** मानसीरूपा, **हि** अतो हेतोः, **किञ्चिद्द्वारा** कामाद्यान्तराभिलाष-पूर्तिद्वारा **तथा** तद्वत्त्वेन रूपेण प्रसिद्धाः **कृताः**। अत उभयोर्वर्णनेनोपलक्षणविधया सुखेन सर्वेषां तथात्वप्रसिद्धिरित्यर्थः । **अग्र** इति । स्वगमनात्पूर्वम्। नन्वेवं सत्युद्धवस्य जघन्यता भवतीत्यत आहुः **दासे**त्यादि । द्वितीयस्तुरेवार्थः । अत उभयोरपि विषयभेदान्मुख्यत्व-

---

श्रीविट्ठलेशात्मजश्रीवल्लभकृतलेखः ।

**पञ्चचत्वारिंशे** । **पूर्वनिरोधस्ये**ति । तामसनिरोधस्य । सान्त्वनेन ज्ञापितो य **उत्कर्षस्तद्वर्णनं कृत्वे**त्यर्थः । न ह्येवं सान्त्वनं भगवानन्यत्र निरोधे करोतीति भावः । **भविष्ययोरि**ति । राजससात्त्विकयोरत्राध्यायद्वये **सान्त्वनं निरूप्यते** न तूत्कर्ष इत्यर्थः । सात्त्विकानां पाण्डवानां राजसप्रकरणे सान्त्वने हेतुमाहुः । **प्रक्रियान्तरे**ति । प्रक्रियान्तरे सात्त्विके रूपं स्वरूपं येषां तादृशाः पाण्डवाः हि यत अक्रूरद्वारा तथा सान्त्वनविषयाः कृताः । अक्रूरश्च राजसः अतो राजसप्रकरणे निरूपणमिति भावः ।

स्त्रीसान्त्वनं तु पुरतः राजसत्वात्स्वरूपतः ।
वाचान्यस्य निरूप्यं हि स्तुत्या च प्रेषणेन च ॥ ५ ॥
पञ्चचत्वारिंशेध्याये कुब्जाक्रूरातिसान्त्वनम् ।
कायेन वचसा चक्रे भाव्यर्थमिति वर्ण्यते ॥ ६ ॥

प्रथममेकादशभिः कुब्जायाः कथामाह साधिकैः **अथ विज्ञायेति** ।

श्रीशुक उवाच—**अथ विज्ञाय भगवान् सर्वात्मा सर्वदर्शनः ।
सैरन्ध्र्याः कामतप्तायाः प्रियमिच्छन्गृहं ययौ ॥ १ ॥**

तस्या हि सर्वा मनोवृत्तयः पूरणीयाः ततोप्यधिकं च कर्तव्यमिति, आदौ भगवान् तस्या गृहे स्वयमेव गत इत्याह **अथेति** । अथ भिन्नप्रक्रमे भक्त्यभावात्, परं तस्या दुःखं तुल्यमिति तन्निवृत्त्यर्थं गत इत्यभिप्रायेणाह **विज्ञायेति** । प्रकरणात् कामसन्तापम् । ज्ञाने सामर्थ्यं **भगवानिति** । तथाकरणे दोषाभावे चावश्यको हेतुः **सर्वात्मेति** । दृष्ट्वावश्यं प्रतीकारः कर्तव्य इति **सर्वदर्शन** इति फलमुखो हेतुरुक्तः । पूर्वमयोग्यता देहे स्थितेति न तस्याः कामपीडा । इदानीं तु देहे योग्येपि स्त्रीचर्यां सर्वां जानातीति तस्याः कामपीडा महती जातेत्याह **सैरन्ध्र्या** इति । सैरन्ध्री ह्यन्तःपुरेऽधिकारिणी स्त्री स्त्रीचरित्रं जानातीति कामतापो युक्त एव । तस्या आगमनसामर्थ्याभावात् स्वयमेव **गृहं ययौ** । स्वगमनमात्रेणैव तस्यास्तापो निवर्तित एव तथापि **प्रियमिच्छन् ययौ** । मनसा तस्याः प्रियं भवत्विति विचारितवान् ॥ १ ॥

ननु किमित्येवं विचारेण कर्तव्यमिव हि प्रियं तद्गमनेनैव भविष्यतीत्याशङ्क्य तन्निराकरणार्थं भगवदिच्छया जातोत्कर्षं गृहं वर्णयति **महार्हेति** सार्धेन ।

**महार्होपस्करैराढ्यं कामोपायोपबृंहितम् ।
मुक्तादामपताकाभिर्वितानशयनासनैः ।
धूपैः सुरभिभिर्दीपैः स्रग्गन्धैरपि मण्डितम् ॥ २ ॥**

यथा प्राकृतमपि गृहं भगवदिच्छयैवं जातं, एवं सापि गोपिकातुल्या भविष्यतीति

श्रीपुरुषोत्तमकृतः प्रकाशः ।

वमविरुद्धमित्यर्थः **स्वरूपत** इति । प्रद्युम्नात्मकत्वात्तत इत्यर्थः । ननु स्वगृह आकारणेनापि सान्त्वनस्य सिद्धेस्तद्गृहगमनादिकं किमर्थमित्यत आहुः **पञ्चेत्यादि** । **भाव्यर्थमिति** । कामवरदानप्रेषणार्थमित्यर्थः । ननु तथापि पूर्वमेतयोरेव सान्त्वनकथनस्य किं प्रयोजनमत आहुः **अतिसान्त्वनमिति** । तथा चैतयोः क्लेशाधिक्यादेतौ पूर्वं निरूपितावित्यर्थः ।

श्रीविट्ठलेशात्मजश्रीवल्लभकृतलेखः ।

**महार्हेत्यत्र** । **गोपिकातुल्येति** । अन्तःस्थितलक्ष्म्यंशा भविष्यति । रेमे रमेश इत्यत्रैवेत्यर्थः ।

प्राकृतायास्तथात्वं कर्तव्यमिति प्रियेच्छा युक्तैव । **महार्हाण्यमूल्यानि** गृहादीनि पात्रादी**न्युपस्करा** यस्य तैर्वाऽऽढ्यं संपन्नं । **कामोपायाः** कामशास्त्रोक्तानि साधनान्युद्दीपकानि चित्राणि पुष्पादिसंपत्तिः इन्दुर्मन्दिरमित्यादीनि **तैरुपबृंहितं** लौकिकस्तच्छास्त्रीयश्चोत्कर्ष उक्तः । अलौकिकोत्कर्षमाह **मुक्तादामभिः पताकाभिश्च बहिर्मण्डितम्, वितानै**श्चन्द्रातपत्रैः **शयनासनैः** शयनार्थमुपवेशनार्थं च सुखस्पर्शास्तरणैः प्रत्यहं वैशेषिकैरपि मण्डितमित्याह **धूपैरि**ति । अगरुसम्भवा आमोदाः **दीपा** अग्निमयाः मणिमयाः **स्रग्भिर्गन्धैश्च** शैत्यार्थं सर्वत्र लेपनं मण्डनम् । एवं त्रिविधोप्युत्कर्षः भगवदिच्छया तस्मिन् गृहे जात उक्तः ॥ २ ॥

ततो गते भगवति यद्वक्तव्यं तदाह **गृहं तमायान्तमि**ति ।

**गृहं तमायान्तमवेक्ष्य सासनात् सद्यः समुत्थाय हि जातसंभ्रमा ।**
**यथोपसंगम्य सखीभिरच्युतं सभाजयामास सदासनादिभिः ॥ ३ ॥**

भगवदिच्छाविषयत्वाद्गृहस्यापि कर्मता, यतस्तं तादृशं भगवन्त**मायान्तमवेक्ष्य** तथैव**ासनादुत्थाय** प्रथमं **जातसंभ्रमा** जाता इतिकर्तव्यतामूढा जाता । युक्तश्चायमर्थः । ततः **यथावदुपसंगम्य सखीभिः** सहिता **सभाजयामास** । ननु कान्तोयं पूजया विलम्बितो निवृत्तकामो भवेत्तत्राह **अच्युतमि**ति । **सदासनादिभिरि**ति सुवर्णमयाद्यासनानि शय्यामयानि वा अनुपभुक्तानीति **सत्**पदेन ज्ञापितम् ॥ ३ ॥

**तथोद्धवः साधुतयाभिपूजितो न्यषीददुर्व्यामभिमृश्य चासनम् ।**
**कृष्णोपि तूर्णं शयनं महाधनं विवेश लोकाचरितान्यनुव्रतः ॥ ४ ॥**

**तथैव उद्धवोपि पूजितः** परं **साधुतया**, अनेन भगवान् भर्तृतया पूजित इति ज्ञायते । कामो हि दोषात्मक इत्यर्थाद् व्यावृत्तिः फलति । **उर्व्यामेवोपविष्टः आसनमुपस्पृ**श्येति राजधर्मपरिज्ञानं निरूपितम् । तस्याः कृत्ये जाते भगवानपि स्वकार्यं कृतवानित्याह **कृष्णोपी**ति । तदर्थार्थमारोपिते कामे क्षणं विलम्बश्चेज् जगत् काममयमेव स्यादिति **तूर्णमेव शयनं**

---

श्रीपुरुषोत्तमकृतः प्रकाशः ।

**गृहं तमि**त्यत्र । **कर्मते**ति । अवेक्षणक्रियाकर्मतेत्यर्थः । नन्वीक्षणक्रियया कर्तुः प्राप्तुमिष्टत्वाभावे कथं सेत्यत आहुः **यतस्तं तादृश**मिति । स्वेच्छा-
१०-४५-३ मात्रेण पूर्वोक्तरीतिकगृहोत्कर्षकर्तारम् । अतो युक्तैव कर्मतेत्यर्थः । **अग्रिमे तदर्थार्थ**मिति वाक्येन तथात्वावगमादित्यर्थः । ननु प्रकटत्वादनुव्रतपदस्यानुवादकत्वमेव

---

श्रीविट्ठलेशात्मजश्रीवल्लभकृतलेखः ।

**कृष्णोपी**त्यत्र । **तदर्थार्थ**मिति । तस्या अर्थसिद्ध्यर्थमित्यर्थः ।

**विवेश।** न त्वनिर्दिष्टमुपभुक्तमनुपभुक्तं वा भवेदिति भगवदर्थं वान्यार्थं वेत्यपि शङ्कां व्यावर्तयितुमाह **महाधन**मिति । महद् धनमुत्पादनार्थं यस्य तदप्युत्कृष्टं भगवदर्थमेवेति **विवेशे**ति पूर्वोपवेशस्थानाद् विविक्त इति ज्ञापयितुम् । ननु भगवानक्लिष्टकर्मा किमित्येवं प्रार्थनाव्यतिरेकेण स्वयमेव गत इति चेत्तत्राह **लोकाचरितानुव्रत** इति । सा हि लौकिकी लोकरीत्यैव ग्राह्येति तस्यास्तथैव मनोरथः सा गृहस्थवदीश्वरवद्भावं न जानाति गुप्तत्वात्, खड्गव्यवहारं तु जानाति प्रकटत्वात्, अतस्तथैव मनोरथ इति **लोकानां** साधारणानां **चरितानि** भगवानप्यनुव्रतो जातः । नत्वनुवादकमेतत्पदं निरोधविरोधापत्तेः ॥ ४ ॥

ततः सापि गतेति तस्याः संस्कारपूर्वकं गमनमाह ।

**सा मज्जनालेपदुकूलभूषण-**
**स्रग्गन्धताम्बूलसुधासवादिभिः ।**
**प्रसाधितात्मोपससार माधवं**
**सव्रीडलीलोत्स्मितविभ्रमेक्षितैः ॥ ५ ॥**

**आलेपं** सुगन्धादिभिः स्नानार्थमेव भगवदिच्छया पूर्वमेव तस्यास्तथात्वम्, **सुधासव** इति शक्त्यर्थं देहविस्मरणार्थं च कामशास्त्रोक्तद्रव्यपानमुक्तम् । आदिशब्देन तथोद्बोधकानां पदार्थानामपि चन्द्रावर्तादीनां स्थापनम् । एवमेतैः **प्रसाधित**शरीरा तद्भावापन्ना लक्ष्मीपतिरयमिति तथाकरणे शङ्कारहिता **माधवमुपससार** । तया भगवति सर्वे भावाः स्वान्तःस्थिताः क्रमेण सूचिता इत्याह **सव्रीडे**ति । स्त्रीभावात् प्रथमसम्बन्धे **व्रीडा,** ततो **हासः** प्रवृत्तायाः, ततो भगवच्चेष्टानां सादरं निरीक्षणं, ततोप्यभिलषितानां भाषणं सूनृतं, अयमग्रे क्रमो भगवता कर्तव्य इति प्रथमतस्तादृशीं चेष्टां कुर्वाणैव गतेत्यर्थः ॥ ५ ॥

ततः सा कान्ता जाता भगवद्धर्मावेशात्ततो यथाभिलषितं कृतवानित्याह **आहूये**ति ।

**आहूय कान्तां नवसंगमह्रिया विशङ्कितां कङ्कणभूषिते करे ।**
**प्रगृह्य शय्यामधिवेश्य रामया रेमेऽनुलेपार्पणपुण्यलेशया ॥ ६ ॥**

---

श्रीपुरुषोत्तमकृतः प्रकाशः ।

कुतो नोच्यते इत्याशंकायामाहुः **नन्वित्यादि** । अनुवादकत्व एतदुद्देशे तथ,भावादेतया लीलया सा निरुद्धा न स्यादतस्तथेत्यर्थः । अग्रिमे । मज्जनालेपनादीनां पूर्वसाधितत्वे हेतुमाहुः **भगवदिच्छये**ति ।

---

श्रीविठ्ठलेशात्मजश्रीवल्लभकृतलेखः ।

**सा मज्जनेत्यत्र** । ननु व्रीडादिक्रमस्तु सम्भोगे कर्तव्ये न तु गमनसमये इत्याशङ्क्याहुः ।अयमग्रे क्रम इति । **भगवते**ति सहार्थे तृतीया। **अयं क्रमोऽग्रे** तया **भगवता** सह **कर्त**व्य इति पूर्वमेव तथा चेष्टया तत्सूचयन्ती गतेत्यर्थः ।

स्वतः प्रवृत्त्यभावे हेतुमाह **नवसंगमह्रिया विशङ्कितामिति**। निकटे गतायाः शङ्कायामाह । **कङ्कणैर्भूषिते करे प्रगृह्येति**। कङ्कणानां परिधानं सुवासिन्या अस्यास्तु भगवद्व्यतिरिक्तः पतिर्नास्तीति भगवांश्चेत् न परिगृह्णीयात् तदा कङ्कणपरिधानं व्यर्थमेव भवेदिति सूचितम् । **शय्यामधिवेश्येति** प्रथमं प्रथमसुरतमेवोक्तम् । नन्वेषा का, स्त्रीसंबन्धा न सर्वत्र कर्तव्या इति तत्राह **रामयेति**। भोगार्थमेवैषा स्त्री । 'नाग्निं चित्वा रामामुपेया'दिति विशेषनिषेधादन्यदा तया संबन्धो न दोषाय । नन्ववश्यं सुखानुभवे धर्मो हेतुः । ततः परमानन्दं कथमनुभवतीत्याशङ्क्याह **अनुलेपार्पणपुण्यलेशयेति**। अनुलेपार्पणादन्यानि पुण्यानि लेशमात्राणि यस्याः । अनुलेपार्पणस्य वा पुण्यमात्रं लेशो यस्याः । अथवा सा त्वनुलेपार्पणपुण्यलेशयुक्तैवातस्तस्याः सहभाव एव कृतः । भगवान् स्वयमेव **रेमे** तावत्फलं स्वयमेवाधिकं दत्तवान्, न तु कर्मणा जातमिति तथोक्तम् । अथवा । भगवान् सर्वसमर्थः । तस्यास्तावन्मात्रमेव सुखं दत्तवानिति ज्ञापयितुं तथोक्तम् ॥६॥

ततः सापि लब्धधाष्टर्या स्वाभिलषितं कृतवतीत्याह **सेति**।

**सानङ्गतप्तकुचयोरुरसस्तथाक्ष्णोर्जिघ्रन्त्यनन्तचरणेन रुजो मृजन्ती ।**
**दोर्भ्यां स्तनान्तरगतं परिरभ्य कान्तमानन्दमूर्तिमजहादतिदीर्घतापम् ॥ ७ ॥**

**सा** सैरन्ध्री अनङ्गेन तप्तयोः **कुचयोः**, षष्ठ्येषा । **उरसः** वक्षःस्थलस्य **अनन्तचरणेन** एतेषां **रुजं मृजन्ती** जाता । स्वरूपतः केनचित्सम्बन्धेन वेश्याशङ्क्य तापस्योभयत्र व्याप्तत्वाद् बहिःस्पर्शेन तापापगमेपि अन्तस्तापनिवृत्त्यर्थमुपायमाह । **जिघ्रन्तीति**। अर्थादनन्तचरणमेव, अनन्तत्वादेव पर्यायेण तापनाशो निवारितः । तथा सति शीघ्रं तापाभावो न स्यात्, न केवलं दुःखाभाव एव तस्याः फलितः किन्तु परमानन्दोप्यनुभूत इत्याह **दोर्भ्यामिति**। पूर्वमेव **स्तनान्तरे** हृदये निविष्टं अन्तर्यामिणं बहिर्दोर्भ्यामालिङ्ग्य **तापं जहौ**। **स्तनान्तरागतं** वा, **कान्तत्वात्** तथाकरणे नापराधः । न केवलं पर्यवसानवृत्त्या सुखजनकत्वं किन्तु स्वरूपतोपि तथात्वमित्याह **आनन्दमूर्तिमिति**। अत एव **अतिदीर्घमपि** त्रिविधमपि **तापं** जहौ, कामताप एव वा जन्मकोटिष्वनुस्यूतो दीर्घो भवति ॥ ७ ॥

एवमनुलेपार्पणफलमुक्त्वा फलानुभवार्थं या भगवतः सेवा कृता रतिरुत्पादिता तस्याः फलं वक्तव्यमिति तन्निरूपयति **सैवमिति त्रिभिः**।

**सैवं कैवल्यनाथं तं प्राप्य दुष्प्रापमीश्वरम् ।**
**अङ्गरागार्पणेनाहो दुर्भगेदमयाचत ॥ ८ ॥**

इदं हि पूर्वस्माद् उत्कृष्टमिति वरत्वेन पर्यवसितम्, तथा सति न फले काचिन्

---

श्रीपुरुषोत्तमकृतः प्रकाशः ।

**सैवमित्यत्र** । ननु भगवत्सम्बन्धस्य महापुण्यजनकत्वात्कालपरिच्छिन्नेना-

मर्यादा इयदेवेति, तथापि भाग्यमेवाल्पमिति बुद्धिस्तादृश्येवेत्यल्पमेव याचितवतीति शुकस्तां निन्दति **दुर्भगेदमयाचतेति** । दातरि समर्थे प्रसन्नेऽप्यल्पयाचनं भाग्याभावादेव भवति । **सा** पूर्वोक्ता एवं जाता **तं** तथोपकारिणं स्वयमेवागत्य सर्वसुखदातारं **कैवल्यस्यापि नाथं** सर्वैरेवोपायैर्दुष्प्रापमीश्वरत्वात्, अन्यथा साधनाधीनः स्यात् । तादृशमपि **प्राप्य** मोक्षं गोपिकावदवस्थां वा न प्रार्थितवती किन्तु कालपरिच्छिन्नं भगवत्सम्बन्धमेव । यद्यपि स्वरूपतो महान्, तथापि कालेन परिच्छिन्नः फलत्वान्न साधनतामापद्यते, अतो **दुर्भगैव** ॥ ८ ॥

याचनमाह **आहोष्यतामिति** ।

**आहोष्यतामिह प्रेष्ठ दिनानि कतिचिन्मया ।**
**रमस्व नोत्सहे त्यक्तुं सङ्गं तेम्बुरुहेक्षण ॥ ९ ॥**

**इहैवोष्यता**मिति विवाहस्याकृतत्वात् क्वचिच्छयनं कर्तव्यं तदिहैव कर्तव्यमित्यर्थः । किमित्येवं प्रार्थ्यत इत्याशङ्कायामाह **प्रेष्ठेति** । परमप्रियस्तथोच्यत इति, तत्राप्यन्तर्यामिवत् स्थितिं वारयति **कतिचिद्दिनानि मया सह रमस्व** । ननु कोयं निर्बन्ध अयमेव वर इति, मोक्षादिर्वा कथं न प्रार्थ्यत इत्याशङ्क्याह **नोत्सहे त्यक्तुं सङ्गं त** इति । तत्र हेतुर**म्बुरुहेक्षणेति** । दृष्ट्वैव सर्वसुखदायककामोद्बोधकेति वा ॥ ९ ॥

भगवान् यद्यपि बह्वेव सुखं दास्यामीति विचारितवान् तथापि याचितं दत्तवानित्याह **तस्यै कामवरं दत्वेति** ।

**तस्यै कामवरं दत्वा मानयित्वा च मानदः ।**
**सहोद्धवेन सर्वेशः स्वधामागमदर्चितम् ॥ १० ॥**

सत्यसङ्कल्पत्वात् स्वविचारितमपि दत्तवानित्याह **मानयित्वेति** । तां मानितवान् । भगवान् हि मोक्षं भक्तिं च दातुमागतः येभ्यो दास्यति तन्मध्ये एतामप्यङ्गीकृतवानित्यर्थः । चकारादात्मानमपि । **मानद** इति भगवान् सर्वेभ्यो मानं ददातीति, स्वधर्माच्च **अस्यै** च मानं दत्तवान्, ततो बहिरागत्य **उद्धवेन सहितः** तदिच्छानुसारेण धर्मान्तरमपि परिगृह्य कार्ये संपन्ने पुनः सहजमेव धर्मं गृहीतवानित्याह । **सर्वेश** इति । अनेन तस्या

---

श्रीपुरुषोत्तमकृतः प्रकाशः ।

१०-४५-८ प्युत्पन्नं[1] पुण्यं पुनः सम्बन्धं कारयिष्यति ततः सोप्यन्यमित्येवं सर्वदैव सुखानुभवो भविष्यतीति कथं दुर्भगत्वमत आहुः **फलत्वादित्यादि** ।

**तस्या इत्यत्र** । **आत्मानमपीति** । दातुमागत इत्यादिना योज्यम् । **अनेनेति** ।

१०-४५-११ सर्वेशत्वेनेत्यर्थः । **अग्रिमे** । **भवेदिति** स्वस्मा इति शेषः ।

---

१. नोत्पन्नमिति क्वाचित्कः पाठः ।

यथा कियद्दिनरमणं भवति तथैव कृतवानित्यपि लक्ष्यते । यथा नारदस्य मायया क्षणमध्ये षष्टिसंवत्सरप्रतीतिः तथास्या अपीति । इतोगतस्य पुनरागमनाभावः सूचितः । नन्वाकाङ्क्षया पुनर्गच्छेदित्याशङ्क्याह । **ऋद्धिमत् स्वधामागमदिति** ॥ १० ॥

अत एव भगवन्तं प्राप्य स्वयं न किञ्चित् प्रार्थनीयम् । भगवानेव यत्करिष्यति तत्करोतु, अन्यथा स कुमनीष्येव भवतीत्याह । **दुराराध्यमिति** ।

**दुराराध्यं समाराध्य विष्णुं सर्वेश्वरेश्वरम् ।**
**यो वृणीते मनोग्राह्यमसत्त्वात्कुमनीष्यसौ** ॥ ११ ॥

प्रथमतः स आराधयितुमेवाशक्यः, अत एवास्मदादयो मुक्ता अपि तथैव स्थिताः । तादृशमप्याराध्य तत्रापि प्रसादपर्यन्तं **सम्यक्** । **विष्णुं** पालनार्थमेवागतमनाराधनेपि पालकम् । तत्रापि सर्वेश्वराणां कालादीनामपीश्वरं नियन्तारं सर्वेषां हि कालग्रासो निवारणीयः । एवं सति यो **मनोग्राह्यं वृणीते** स **कुमनीषी** महाराजस्थाने गत्वा स्वयं क्षुधितः सर्वोपद्रवयुक्तोपि स्वसंबन्धिने मर्कटाय यथोदनं प्रार्थयते तद्वत् स्वयमात्मा मर्कटरूपाय मनसे हितं प्रार्थयतीति । नन्वेवमस्तु तथाप्यल्पमेव प्रार्थितं भवेन् न तु मर्कटवदित्याशङ्क्याह । **असत्त्वादिति** । न हि मनोधर्माः स्वस्य भवन्ति, अध्यारोपितास्त्वसन्त एव, तर्हि कथं प्रार्थयत इत्याशङ्क्याह । **कुमनीषीति** । सा हि दुर्बुद्धिः, अतः प्रमादादन्यथा प्रार्थयत इत्यर्थः ॥ ११ ॥

प्रकरणान्तरमारभ्यते **अक्रूरभवनमिति** ।

**अक्रूरभवनं कृष्णः सहरामोद्धवः प्रभुः ।**
**किञ्चिच्चिकीर्षयन्प्रागादक्रूरप्रियकाम्यया** ॥ १२ ॥

तस्मिन्नेव दिवसे अक्रूरायापि वरो दत्त इति तस्यापि गृहे भगवान् गतः । ननु पूर्वं तस्मै वरो दत्त इति कथं व्युत्क्रमेण निरूप्यते तत्राह **कृष्ण** इति । स हि तासामर्थे समागत इति पूर्वमवोचाम । तत्र बलभद्रस्यापि कार्यमस्तीत्यत आह **सहराम** इति । **उद्धवो** हि उत्सवात्मकत्वाद् रसप्रधान एव, रमणं तु स्त्रीभिरेव, अतः कुब्जाया गृहे उद्धवेन सह गमनं, भगवांस्तत्र प्रधानमिति बलभद्रस्य क्रोधोपि स्याद् आवेशभूत इति रमणारमणाभ्यां रसाभासानौचित्ये स्याताम् । अत्र त्वक्रूराय संपूर्णो भावो नेय इति योनिभावार्थं रामं निमित्तभावार्थमुद्धवं च सह नीतवान् । नन्वनाकारितः किमिति गत इत्याशङ्क्याह **प्रभुरिति** । सर्वेषां हि स्वामी सेवकगृहेपि सेवकसंमाननार्थं गच्छति कस्तमाकारयितुं समर्थः । प्रयोजनमाह । **किञ्चित्** कचित् प्रेषणं **चिकीर्षयन्** चिकीर्षामुत्पादयन्नक्रूरे तदर्थं स्वतोप्य**क्रूरप्रियकाम्यया** च **प्रकर्षेण** प्रभुरीत्या**गात्** । अस्योपाख्यानं स्मार्ततत्त्वैः प्रतिपाद्यते अयं हि स्मार्त इति ज्ञापयितुम् ॥ १२ ॥

ततो गतानामक्रूरकृतं सत्कारमाह धर्मप्रतिपादनाय **स तानिति** ।

**स तान्नरवरश्रेष्ठानाराद्वीक्ष्य स्वबान्धवान् ।**
**प्रत्युत्थाय प्रमुदितः परिष्वज्याभिवन्द्य च ॥ १३ ॥**

तस्य सर्वे तुल्या अतो मर्यादया पूजयतीति न बलभद्रादेरपि वैमनस्यम्, नरवरेभ्योपि श्रेष्ठान् नरो नरवरो **नरवराच्छ्रेष्ठश्चे**ति वा उद्धवरामस्वामिनः क्रमेणोद्दिष्टाः, **आराद्दूरादेव** दृष्ट्वा **स्वबान्धवा**नित्यवश्याभ्युत्थाने लौकिकोपि हेतुः, **प्रत्युत्थाय** प्रथमतः **प्रमुदितो** जातः, भक्तत्वाभावात् न साष्टाङ्गप्रणामः, पूर्वाक्रूरस्तु मुक्त एव, प्रमोदानन्तरं **परिष्वङ्गः** ततो**भिवन्दनम्** ॥ १३ ॥

एवं कायिकं वाचनिकमुक्त्वा मानसिकं नमस्कारमाह **ननामे**ति ।

**ननाम कृष्णं रामं च स तैरप्यभिवादितः ।**
**पूजयामास विधिवत्कृतासनपरिग्रहान् ॥ १४ ॥**
**पादावनेजनीरापो धारयन् शिरसा नृप ।**
**अर्हणेनाम्बरैर्दिव्यैर्गन्धस्रग्भूषणोत्तमैः ॥ १५ ॥**

बहिर्नमस्कारस्तु व्यावहारिकः, अत एव भगवतापि ताभ्यां **सह** नमस्कृतमाह **स तैरप्यभिवादित** इति । पूर्वचकारात् फलाद्युपायनादानम्, द्वितीयादुद्धवं च, **स** त्रिभिरप्यभिवादितः । अपिशब्दस्तुल्यतामापादयति । ततो **गृहागता** इति **पूजयामास विधिवच्छा**स्त्रदृष्टेन प्रकारेण यथा महापुरुषानभ्यागतान् पूजयति लोकः । **कृतः आसनपरिग्रहो** यैः । अत्रोद्धवेनापि धर्मानुरोधात्तुल्यतया आसनं गृहीतम् । यथा श्राद्धे गुरुशिष्यौ ॥ १४ ॥

ततः **पादावनेजनीरापः शिरसा धारयन्** । इयं धर्मनिष्ठायामधिका भक्तिः । **नृपे**ति । धर्मपरिज्ञानार्थम् । ततः **दिव्यैर्गन्धैः स्रग्भूषणोत्तमैः** सहिते**नार्हणेन पूजया**मासेति पूर्वेणैव संबन्धः । पूजा साधनरूपा **पूजयामासे**त्याराधयामासेत्यर्थः ॥ १५ ॥

ततो यत्कृतवांस्तदाह **अर्चित्वे**ति ।

**अर्चित्वा शिरसानम्य पादावङ्कगतौ मृजन् ।**
**प्रश्रयावनतोक्रूरः कृष्णरामावभाषत ॥ १६ ॥**

ततः उच्चासने स्थितस्य भगवतः स्वा**ङ्कगतौ पादौ मृजन्** सेवनार्थं संवाहयन् । **प्रश्रयेण अवनतो** भूत्वा **अक्रूरः** पूर्वोक्तः । **कृष्णरामा**वुभौ पूर्वं दृष्टावित्य**भाषत** स्तोत्रं कृतवानित्यर्थः ॥ १६ ॥

---

श्रीविट्ठलेशात्मजश्रीवल्लभकृतलेखः ।

**स तानि**त्यस्याभासे । **स्मार्ततत्त्वै**रिति (१२ श्लोके) । पञ्चविंशतिश्लोकैरित्यर्थः । तृतीयस्कन्धे तत्त्वानां कालमादाय पञ्चविंशतिसङ्ख्यायाः साङ्ख्यप्रकरणे निरूपणादिति भावः।

तां स्तुतिमाह **दिष्टयेति** ।

**दिष्ट्या पापो हतः कंसः सानुगो वामिदं कुलम् ।**
**भवद्भ्यामुद्धृतं कृच्छ्राद्दुरन्ताच्च समेधितम् ॥ १७ ॥**

दशभिः स्तुतिरुक्ता हि प्रार्थनैकेन दोषनुत् । सर्वैर्भावैरिह स्तुत्यो निरोधे ह्यधिकारिभिः ॥
सर्वेष्वेव च भावेषु कृष्णोत्कर्षो निरूप्यते । अयुक्तं प्रार्थयेद्यस्तु तस्मै दद्यान्न सर्वथा ॥
न दत्तं पूर्वं गोपीभ्यः नोत्तरस्यापि दास्यति । निरोधो ह्यन्यथा न स्यात् फलार्थं कर्म तद्भवेत् ॥
ईश्वरः सर्वहितविदतो रोधो न दूषणम् । यथा बालेकरोधो हि पित्रापि विनिरूपितः ॥
निवर्तयति कामांस्तान् ज्ञानेन ग्रहिला मतिः । यदि स्यादुत्कटा दुष्टा निर्दुष्टा वा विचारतः ॥

श्रीपुरुषोत्तमकृतः प्रकाशः ।

**दिष्ट्येत्यत्र** । दशभिः स्तुतौ हेतुमाहुः **सर्वैरित्यादि** । नन्वेतत्प्रार्थितं भगवता कुतो न दत्तमित्यत्राहुः **अयुक्तमित्यादि** । **अयुक्तम्**, स्वायोग्यम् ।
१०-४५-१७ ननु भक्तयाचितदाने कथं निरोधासिद्धिस्तत्राहुः **फलार्थमित्यादि**। यदि याचितं दद्यात्तदा तत्कर्म सेवात्मकं कामितफलार्थं स्यान्न तु निरोधार्थमतस्तथेत्यर्थः । नन्वभिलषितादाने तद्विपरीतदाने चाभजनीयत्वं स्यादत आहुरीश्वर इत्यादि । नन्वेवं कामनापूर्त्यभावेन तथा कृतौ भक्तानां दुःखाद्भगवतः क्लिष्टकर्मत्वं स्यादिति शङ्कायां तदभावाय दृष्टान्तमुखेनाहुः **यथेत्यादि** । **गोलकरोध** इति । इन्द्रियगोलकरोधः । तथा च कामचारकामवादकामभक्षाणां बालकानां स्वत इन्द्रियनिरोधाशक्तत्वेपि पितृगुरुकृतस्तद्गोलकरोधो न क्लिष्टकर्मत्वापादकस्तथेदमपीति न दूषणमित्यर्थः । नन्वेवं सर्वत्रकरणे

श्रीविट्ठलेशात्मजश्रीवल्लभकृतलेखः ।

**दिष्ट्या पाप इत्यत्र** । दशसङ्ख्यायास्तात्पर्यमाहुः । **सर्वैर्भावैरिति** । सगुणैर्निर्गुणेन चेत्यर्थः । गोपिकावद्भावा भविष्यन्तीति भ्रमं वारयन्ति । **अधिकारिभिरिति**। यथाधिकारमित्यर्थः । **पूर्वगोपीभ्य** इति पूर्वाध्यायोक्ताभ्यो गोपीभ्यो बहिःसम्बन्धरूपं तत्प्रार्थितं फलं न दत्तमित्यर्थः **अन्यथेति** । हि यतः अयुक्तदाने निरोधमार्गो न भवेत् । किन्तु साधनानुरूपफलदानात्कर्ममार्ग एव भवेदित्यर्थः । एवं साधनान्यथाकरणे सामर्थ्यं हेतुं चाहुः । **ईश्वरः सर्वहितविदिति** पदद्वयेन । अतो हेतो**रोधोयं दूषणं न** । तत्र दृष्टान्तमाहुः । **यथेति** । यथा पित्रापिशब्दात्पितृव्यादिभिरन्यैरपि कृतो बालकस्य रोधो न रोधस्तान्कामान् तदभिलाषरूपान्निवर्तयति । तथा भगवत्कृतोपि रोधोऽयुक्ताभिलाषं निवर्तयति । तत्र प्रकारमाहुः । **ज्ञानेनेति** । **ग्रहिला** आग्रहवती **मतिर्दुष्टा** भगवति सर्वभावसम्भवाद्विचारतो **निर्दुष्टा वा यद्युत्कटा स्यात्तदा** ज्ञानेन, **निवर्तयतीति** शेषः ।

१. 'अविरोधो' प्राचीनादर्शपाठः । २. गोलक इति प्रकाशपाठः ।

प्रथमं भगवत्कृतकर्मणामभिनन्दनरूपां स्तुतिमाह स्वसमानत्वेन धर्मः प्रतीतस्तामसोयं भाव इति पूर्ववत्प्रथमः । **दिष्टचेति** । अस्मदादिभाग्येनैव **पापरूपोयं कंसो हतः** । पूर्ववद्व्याख्यानं । **सानुगो** भ्रातृसहितः । **वां** युवयोर्युवाभ्यामिदं **कुलं कृच्छ्राद्दुरन्तादुद्धृतम्** । अनेन कुलसंबन्धेन कुलस्यानिष्टं शङ्कितं निवारितं प्रत्युतेष्टमेव कृतमिति । **किञ्च** । तस्यैकस्य निवारणेन समुदायपर्यवसितं यदैश्वर्यं कुलस्य तत्प्रत्येकपर्यवसितमपि कृतमित्याह **समेधित**मिति । चकारात् मुक्तमपि कृतं पूर्वसंबन्धे पापादप्युद्धृतमिति, एवं तेन दृष्टं द्वयमेवेति तावदेवाभिनन्दितम् ॥ १७ ॥

स्वरूपमाह **युवां प्रधानपुरुषाविति** ।

**युवां प्रधानपुरुषौ जगद्धेतू जगन्मयौ ।**
**भवद्भ्यां न विना किञ्चित्परमस्ति न चापरम् ॥ १८ ॥**

योनिबीजवदत्रापि व्याख्येयम् । प्रधानपुरुषत्वमाधिदैविकं भविष्यतीति ब्रह्मत्वेनैव स्तुतिर्निर्धर्मिका पर्यवस्यतीत्याशङ्क्याह **जगद्धेतू** इति । कारणार्थमेव **प्रधानपुरुषौ**, निमित्तत्वमात्रं भविष्यतीत्याशङ्क्याह । **जगन्मयाविति** । विकारे वा तत्प्रकृतवचने वा मयटोर्थविधाने भगवन्मयत्वं जगतो नायाति यद्यपि तथापि भगवत्त्वेन कारणत्वेन जगद्वर्तत इति वक्तुं भगवत एव जगन्मयत्वमुक्तम् । अन्यथाऽसतः सत्ता स्याद् भगवतो वा परिणामः स्यात् । 'विष्टभ्याहमिदं कृत्स्न'मिति वाक्याल् लोके जगतो महत्त्वविधानात्, तेन भगवन्माहात्म्यं वक्तुं अन्नमयो यज्ञ इतिवज् जगन्मयावित्युक्तम् । ननु तथापि भगवतः साधारणं कारणत्वं स्यात् कालादिवत् समवायिकारणत्वमपि साधारणमेव

---

श्रीपुरुषोत्तमकृतः प्रकाशः ।

भगवतो महानेव प्रयास इति शङ्कायां तदभावाय तादृशकृतिविषयान् बोधयन्तः प्रकारमप्याहुः **निवर्तयतीत्यादि** । यदि **अहिला दुष्टा रागवती** विचारतः **निर्दुष्टा विरक्ता** वा निरोध्यानां **मतिः** तत्तत्कामिते उत्कटात्यभिलाषुका स्यात्तदा ज्ञानेन तथा करोति न त्वन्यत्रेति न कोपि प्रयास इत्यर्थः ।

---

श्रीविठ्ठलेशात्मजश्रीवल्लभकृतलेखः ।

वस्तुस्वरूपज्ञानमुत्पाद्य निवर्तयतीत्यर्थः । **अनेनेति** । कंसस्य कुलसम्बन्धेन हेतुना तन्मारणे भगवान्कुलस्यानिष्टं कृतवानिति शङ्कितं भवेत्, तदनेन निवारितमित्यर्थः ।

**युवामित्यत्र प्रधानपुरुषत्वमिति** । **आधिदैविकं** प्रधानपुरुषत्वम् । अक्षरत्वमित्यर्थः । **ब्रह्मत्वेनैवेति** । अक्षरब्रह्मत्वेनेत्यर्थः । **परिणाम** इति । विकारयुक्तः परिणामः स्यादित्यर्थः । सिद्धान्ते तु सुवर्णे कारणत्वेन विद्यमानो यः कटकः स एव कटकत्वेन निष्पद्यते, तावतैव परिणाम उच्यतेऽतो न सुवर्णविकार इति भावः । **साधारण**-

मृदादिवत् । तत्राह **भवद्भ्यामिति** । भवद्भ्यां कृष्णरामाभ्यां विभक्तशक्तिभ्यां **विना परमुत्कृष्टमपरम**पकृष्टं **च**कारात्तदवान्तरा भेदा वा **न** भवन्ति, त्वन्मूलकमेव सर्वम्, यत्र स्वसामर्थ्यं बहु प्रकटयसे तदुत्कृष्टं यत्राल्पं तदपकृष्टमिति ॥ १८ ॥

एवं कारणत्वेन च भगवन्तं निरूप्य भगवन्तमेवाधेयत्वेनापि निरूपयति भेदाभेद-पक्षपरिहाराय **आत्मसृष्टमिति** ।

**आत्मसृष्टमिदं विश्वमन्वाविश्य स्वशक्तिभिः ।**
**ईयते बहुधा ब्रह्मन् श्रुतिप्रत्यक्षगोचरम् ॥ १९ ॥**

यद्यप्यात्मसृष्टेनैवं भेदाभेदो दोषाय भवति तथापि भिन्नसृष्टावपि यथेदं दूषणं न भवेत् तदर्थमेतदुच्यते । स्वेनैव **सृष्टमिदं** सर्वमेव **विश्वं** सृष्ट्यनुसारेण सृष्ट्यनन्तरमेव वा **अनु**-पश्चा**दाविश्य स्वशक्तिभि**रिति सर्वसामर्थ्ययुक्तः **बहुधा ईयते** अनन्तप्रकारेण प्रतीयत इत्यर्थः । तथापि वैदिकोर्थोन्य एव भविष्यति विरोधः शब्द इति चेदित्यत्र तथा निरू-पणात्, भ्रमप्रतिपन्नं च भिन्नं स्यात्, अतो न सर्वकर्तृत्वं भगवतः संभवतीत्याशङ्क्याह । **श्रुतिप्रत्यक्षगोचरमिति** । श्रुतिप्रतिपादितो यो विषयः यो वा प्रत्यक्षविषयः सोपि सर्वं त्वमेव, साधारणप्रत्यक्षस्य न वस्तुनिरूपकत्वमित्यभिप्रायेण सामान्यग्रहणम्, गोचर-शब्दोपि विशेष्यनिघ्नो भवति । **अन्वाविश्ये**त्यस्य वा कर्म । **ब्रह्मन्निति** संबोधनं ब्रह्मवादे सर्वेषामुपपत्तिः सिद्धेति नायमर्थः पुनः साधनीय इति ज्ञापयितुम् ॥ १९ ॥

नन्वेकस्य नानात्वं वैचित्र्यं वा लोके नास्तीति लौकिकन्यायव्यतिरेकेण केवल-मलौकिकमङ्गीकुर्वाणान् प्रति लोकानुसारेणापि एकस्यानेकरूपत्वं दृष्टान्तेनाह **यथा हीति** ।

---

श्रीपुरुषोत्तमकृतः प्रकाशः ।

**आत्मसृष्टमित्यत्र । एवं भेदाभेद** इति । ऐच्छिकभेदघटितोऽभेद इत्यर्थः । **इदमिति** । भेदकृतवस्तुपरिच्छेदरूपम् । **प्रतीयत** इति । भवानेवेति
१०-४५-१९ शेषः । तथा च भिन्नवस्तुकृतोपि न भवतः परिच्छेद इति भावः । **साधारणप्रत्यक्षस्येति**, विकल्पानवगाहिन इत्यर्थः । **विशेष्यनिघ्न** इति । सम्बोधन-बोधितस्य ब्रह्मशब्दस्याधीन इति लिंगस्योपपत्तिरित्यर्थः ।

---

श्रीविट्ठलेशात्मजश्रीवल्लभकृतलेखः ।

**भ्यिति** । कालः सर्वान्प्रति साधारणो न तु गवाश्वाद्यवतारभेदहेतुर्मृदपि साधारणी न तु घटशरावाद्यवान्तरभेदहेतुरित्यर्थः । **भेदाभेदेति** । मृदि घटो न तु घटे मृत् । अतो घटो मृदात्मको मृत्तु न घटात्मिका । भगवांस्त्वनुप्रविष्ट इत्याधेयोपि भवत्यतो जगद्भगवदात्मकं भगवांश्च जगदात्मक इत्यर्थः ।

**यथा हि भूतेषु चराचरेषु मह्याद्यो योनिषु भान्ति नाना ।**
**एवं भवान्केवल आत्मयोनिष्वात्मात्मतन्त्रो बहुधा विभाति ॥२०॥**

स्थावरजङ्गमेषु **सर्वेष्वेव भूतेषु** वस्तुतः पार्थिवेषु कारणभूतानां पृथिव्यादीनां वैलक्षण्यस्य सिद्धत्वेऽपि जीवसामर्थ्येन तत्र कारणत्वेन प्रविष्टा **मह्याद्यो नाना भान्ति,** तत्रोपपत्तिमाह **योनिष्विति** । चराचराणि भूतानि योनिवशादेव तथोत्पद्यन्त इति कदाचिन्मह्यादीनामकारणता प्रतीयेत बीजस्यापि वापनानन्तरं स्वरूपतो नाशाद् योनित्वापत्तिरिति योनिष्वित्युक्तम् । तत्र मह्यादीनां चेद्बीजशक्तिवशात् तथात्वमुपपद्यते तदा बीजापन्नं ब्रह्म पूर्वमेव भगवति विद्यमानं जगद्रूपं स्वसामर्थ्येन शिष्टं स्वाभिलषितप्रकारेण योनिभावापन्ने स्वस्मिन् प्रवेशयेत् । अनन्तजगदाकारेण वृद्ध्यादिषु बह्वल्पपरिग्रहाविर्भावेन भगवानपि **केवल** एव **आत्मयोनिषु** आत्मरूपासु योनिषु जगद्रूपेषु **बहुधा विभाति,** शक्तिवशादविद्यमानस्थाने आकर्षणादनित्यता स्यादिति तद्व्यावृत्त्यर्थमाह **आत्मेति** । सर्वत्र व्याप्त एवाकृष्ट एवाभिव्यक्तो भवतीत्यर्थः । दृष्टान्ते पारतन्त्र्यं प्रतिभासत इति तद्व्यावृत्त्यर्थं **आत्मतन्त्र** इत्युक्तम्, तदपेक्षयाप्यत्रानेकप्रकारत्वं ख्यापयितुं दृष्टान्तेन नानात्वे समागतेपि प्रकारान्विधत्ते । **बहुधेति** । नन्वहमेवेत्यत्र किं प्रमाणं वादिप्रतिपन्नमतेष्विव भिन्नतयैव तथा जगद्भवत्विति चेत्तत्राह **विभातीति** । कारणापेक्षयाप्याधिक्येन कार्ये भानं दृश्यते यथा चित्रपटादिषु, अतो भगवानेवेत्यध्यवसीयत इत्यर्थः ॥ २० ॥

श्रीपुरुषोत्तमकृतः प्रकाशः ।

**यथा हीत्यत्र । स्वस्मिन् प्रवेशयेदिति** । बीजात्मकत्वातिरिक्तं सम्पादयेदित्यर्थः । एवं च भगवान् सर्वत्र जगति नानात्वेन वैचित्र्येण भासमानोप्येक
१०-४५-२०
एव, समवायिकारणत्वात् । चराचरपार्थिवादिनिविष्टपृथिव्यादिवदित्यनुमानं फलतीति ज्ञेयम् ।

श्रीविट्ठलेशात्मजश्रीवल्लभकृतलेखः ।

**यथा हि भूतेष्वित्यत्र । तत्र मह्यादीनामिति** । एतेषां **बीजशक्तिवशादेव** चेन्नानात्वमुपपद्यते, तदा भगवदभिलषितप्रकारेण **योनिभावापन्नमक्षरं** ब्रह्म कर्तृ पूर्वमेव भगवति विद्यमानं जगद्रूपं भगवत्सामर्थ्येनानुशिष्टं बीजापन्नमक्षरं ब्रह्म कर्म, **स्वस्मिन्** प्रवेशयत्सद् **अनन्तजगदाकारेण विभातीत्यग्रिमेणान्वयः** । अनन्तत्वे प्रकारमाहुः । वृद्ध्यादिष्विति । एवं दृष्टान्ते साङ्ख्यप्रकार उक्तः । दार्ष्टान्तिके सर्वं भगवद्रूपमेवेत्याहुः । **भगवानपीति** । **तथेति** शेषः । भगवानप्येवं विभाति । परं केवल एव तत्र सर्वमात्मरूपमेव न तु योनिबीजयोर्विभेद इत्यर्थः ।

एवं जगद्रूपतां निरूप्य कर्तृत्वे प्राप्तान् दोषान् वारयितुमाह सृजस्यदो लुम्पसीति ।

**सृजस्यदो लुम्पसि पासि विश्वं रजस्तमःसत्त्वगुणैः स्वशक्तिभिः ।**
**न बध्यसे तद्गुणकर्मभिर्वा ज्ञानात्मनस्ते क्व च बन्धहेतुः ॥ २१ ॥**

**अदः** प्रसिद्धम्, भगवन्तं दृष्टवतः प्रपञ्चास्फुरणाददः इति परोक्षनिर्देशः, अनेनास्फुरणे हेतुरप्युक्तः । **रजसा सृजसि तमसा लुम्पसि सत्त्वेन** च **पासि**, रजस्तमःसत्त्वानां स्वधर्मत्वप्रतिपादनाय गुणत्वम्, तथापि स्मृतिन्यायेन भगवतः कर्तृत्वं न भविष्यतीत्याशङ्क्याह **स्वशक्तिभिरि**ति । न तु प्रकृतिधर्मैः, धर्मत्वेपि सामर्थ्यमापन्नानीति शक्तित्वम्, यद्यपि शक्तिपदेनैवाभ्यासो नास्तीति कर्मबन्धो निवारित एव तथापि लोकन्यायेनापि दूषणं परिहर्तुं ज्ञानेन तदभावमाह **न बध्यसे तद्गुणकर्मभिर्वे**ति । तद्गुणैर्बन्धो मोहवशात्कर्मवशाद् बन्धोनिच्छयापि, वेत्यनादरे । कालेनापि न बन्ध इति सुतरामेव तुच्छैः लोकैः, तत्र हेतुमाह **ज्ञानात्मनस्त** इति । ज्ञानेनापि बन्धाभाव इति सर्वशास्त्राणि, भवांस्तु ज्ञानस्याप्यात्मा त्वत्सामर्थ्यादेव ज्ञानं तथा करोतीत्यात्मपदेन सूचितम् । अत एव बन्धहेतूनां निराकृतत्वात् ते सर्वसमर्थस्य को वा बन्धहेतुर्भवति इत्याह **क्व चे**ति । चकारादेशे कालेवस्थायां च ॥ २१ ॥

ननु तथाप्यवतारान्यथानुपपत्त्या सोपाधिरेव सत्त्वगुणाभिमानिनोवतार इति लोकप्रसिद्धेश्च सुतरामेवावतारे बन्धो भविष्यतीत्याशङ्क्याह देहाद्युपाधेरिति ।

**देहाद्युपाधेरनिरूपितत्वाद्भवो न साक्षान्न भिदात्मनः स्यात् ।**
**अतो न बन्धस्तव नैव मोक्षः स्यातां निकामस्त्वयि नोऽविवेकः ॥ २२ ॥**

देह इन्द्रियाण्यन्तःकरणं स्वभावः कर्म कालो वा यस्योपाधिभूता भवन्ति तस्यात्मनः प्रथमं **भवो** भवति । ननु ममापि वसुदेवाद्भवो दृश्यत इति चेत्तत्राह **साक्षादि**ति । नटवत् वेषार्थं जन्मप्रकाशनं न जन्म । किञ्च । **आत्मनो भिदापि न स्यात्** पूर्वसंघातपरि-

श्रीपुरुषोत्तमकृतः प्रकाशः ।

**सृजसीत्यत्र** । **अनेनेत्यादि** । **परोक्षनिर्देशः** भगवति कर्तृत्वसम्भावितदोषास्फुरणे-
१०-४५-२१ भगवद्दर्शनरूपो हेतुरपि बोधित इत्यर्थः । **स्मृतिन्यायेनेति** । साङ्ख्योक्तरीत्येत्यर्थः । **अभ्यास इति** । पुनः पुनः करणप्रयोजक आवेशः ।
**देहाद्युपाधेरित्यत्र** । **सोपाधिरेवेति** । मूलविष्णुरिति शेषः । **लोकप्रसिद्धै-**

श्रीविठ्ठलेशात्मजश्रीवल्लभकृतलेखः ।

**सृजस्यद इत्यत्र** । **अनेनेति** । भगवद्दर्शनात्प्रपञ्चास्फूर्तिकथनेन । आधुनिकानां जगतो ब्रह्मत्वेनास्फुरणे भगवदर्शनं हेतुरुक्त इत्यर्थः ।

त्यागेन संघातान्तरग्रहणं भेदोत्र विवक्षितः। यतः अयमात्मा न हि सर्वत्र व्याप्तस्तथा भवितुमर्हति आत्मत्वान्न भेदः। भेदाभावाच्च न जन्म, यतो मूलभूते विष्णौ भगवति वा, अत एव हेतोस्तवापि न **बन्धः** नैव च **मोक्षः** येन सत्कर्मकरणार्थं धर्मस्थापनादिकं कुर्यात्, अत एव बन्धमोक्षौ न स्याताम्। ननु यावदधिकारं त्वाधिकारिकमितिन्यायेन विष्णोरप्यधिकारान्ते स्मार्तसंमता मुक्तिः। ब्रह्मवादिनोप्येकदेशिनः यद्ब्रह्मविद्यया सर्वं भवन्तो मनुष्या मन्यन्ते तद्ब्रह्म किं भवेदित्याशङ्क्य 'ब्रह्म वा इदमग्र आस' 'आत्मानमेवावैदहं ब्रह्मास्मीति' 'तस्मात्सर्वमभव'दिति वाक्यानुरोधात् प्रपञ्चभवनवत् 'ब्रह्मविदाप्नोति पर'-मित्यत्रापि ब्रह्मज्ञानेनैव ब्रह्मणोपि परत्वप्राप्तिरित्यध्यवसीयते। कर्मकाण्डेऽपि 'परमेष्ठिनो वा एष यज्ञोग्र आसी'दित्युपक्रम्य सर्वेषामुत्कर्षो दर्शपूर्णमासाभ्यां निरूपितः। एवं परब्रह्मणोपि दर्शपूर्णमासाभ्यामेवोत्कर्षः प्रतीयते। परमेष्ठिशब्दश्च ब्रह्मपर्यायः 'इन्द्रे प्रजापतौ ब्रह्मन्नि'त्यत्र क्रमेण तत्प्रकरणस्थानामेवोपलम्भात्, अतः सर्वेषामेव बन्धमोक्षौ स्त इति मन्यन्ते। किञ्च। 'इमां विद्यां कृष्णाय देवकीनन्दनाय प्रोवाचे'त्युपाख्याने ब्रह्मविद्या-ग्रहणमपि श्रूयते, अतः संभावितत्वात् बन्धमोक्षौ प्राप्ताविति तन्निराकरणं युक्तमेव। एते तु निरूपिताः पूर्वपक्षाः अविवेकेनैव प्राप्ता इत्याह **निकामस्त्वयि नोऽविवेक** इति। नोऽस्माकं सर्वेषामेव भ्रान्तानां निकामः स्वेच्छया त्वयि अविवेकोऽधिकारस्तु न स्वामिपरः लोके महाराजेऽधिकारपदप्रयोगाभावात्, परमेष्ठिब्रह्मशब्दौ चतुर्मुखवाचकौ, अन्यथा 'यज्ञो

---

श्रीपुरुषोत्तमकृतः प्रकाशः।

१०-४५-२२ रिति, मातुलहननादिभिरित्यर्थः। नन्ववतारान्तराणि मम प्रसिद्धानीति जन्मनिषेधोद्भावनं वृथैवेत्यत आहुः **किञ्चेत्यादि**। आत्मनः भिदा अप्रसिद्धेति **भिदापदस्यार्थमाहुः पूर्वेत्यादि**। स्मार्तमतस्य श्रुतिविरोधेनानादरणीयत्वात्त-न्मुक्तेः श्रुतिसम्मतत्वायाहुः **ब्रह्मवादिनोप्येकदेशिन** इत्यादि। तदेकदेशिनोपि मते इति शेषः। **अध्यवसीयत** इति वित् ज्ञानवत् ब्रह्म परं आप्नोतीत्यन्वयादध्यवसीयत इत्यर्थः। परमेष्ठिशब्दस्य कथं ब्रह्मपर्यायत्वमत आहुः **इन्द्र** इत्यादि। **मन्यन्त** इति। लोका इति शेषः। बन्धादिनिराकरणस्य युक्तत्वे उक्तानां पक्षाणां का गतिरित्यत्राहुः **एते त्वित्यादि**। पक्षान्परिहरन्ति **अधिकार** इत्यादि।

---

श्रीविट्ठलेशात्मजश्रीवल्लभकृतलेखः।

**देहाद्युपाधेरित्यत्र**। **इन्द्रे प्रजापताविति**। तेन प्रजापतिं निरवासाप-यत्। तेनेन्द्रं निरवासापयदितीन्द्रप्रजापतिशब्दौ। ब्रह्मविदाप्नोति परमित्यादिषु ब्रह्मन् शब्दः। एवं शब्दत्रयवाच्येऽन्यकृतोत्कर्षोपलम्भात्परमेष्ठिशब्दवाच्येपि तथा मन्तव्यमित्यर्थः।

वै विष्णु'रिति श्रुत्या दर्शपूर्णमासयोर्यज्ञत्वविधिर्व्यर्थः स्यात्, ब्रह्मविद्याद्यधिकारोपि संदीपिनेरिव लीलया संभवति, अतोस्माकमेवाविवेकः न तु परब्रह्मणि बन्धमोक्षौ कथञ्चित् सम्भवत इत्यर्थः ॥ २२ ॥

तर्हि कथमवतार इति चेत्तत्राह **त्वयोदित** इति ।

**त्वयोदितोऽयं जगतो हिताय यदा यदा वेदपथः पुराणः ।**
**बाध्येत पाषण्डपथैरसद्भिस्तदा भवान्सत्त्वगुणं बिभर्ति ॥ २३ ॥**

**यदैव त्वयोदितो** वेदमार्गः **पाषण्डपथै**र्विरुद्धमार्गप्रतिपादकैः पुरुषैः **बाध्येत** तदा तेषां च बलिष्ठत्वात् कालवशात् सर्वेषामेव बुद्धिनाशाद् भगवानेव शक्त इति तदा भगवान् **सत्त्वगुणं बिभर्ति** भगवद्गृहीतं सत्त्वं बलवत् सद् रजस्तमसोरभिभावकं भवतीति। अनेन वैषम्यदोषः परिहृतः। नैर्घृण्यदोषस्त्ववतीर्णे नास्तीति न तन्निषेधकं वचनम् ॥ २३ ॥

नन्विदानीं वेदानां पीडाभावाद् व्यासावतारस्य जातत्वाद् बुद्धावतारस्याद्याप्यजातत्वात् किमनेनावतारेणेत्याशङ्क्याह **स त्वं प्रभो**द्येति ।

**स त्वं प्रभोऽद्य वसुदेवगृहेवतीर्णः**
**स्वांशेन भारमपनेतुमिहासि भूमेः ।**
**अक्षौहिणीशतवधेन सुरेतरांश-**
**राज्ञाममुष्य च कुलस्य यशो वितन्वन् ॥ २४ ॥**

**स** एव **त्वं** सर्वरक्षको न केवलं वेदमात्ररक्षकः । तदाह **प्रभो** इति । क्रियाशक्तेरपि पूर्णाया विद्यमानत्वाद् **वसुदेवस्य** सत्त्वरूपस्य **गृहे**भिमानस्थानेभिमानप्रकारेण पालयिष्यामीत्यवतीर्णः। स्वांशेन बलभद्रेण सह इहैवागत्य **भारमपनेतुं** न तु वैकुण्ठे स्थित्वा मनसा, **अवतीर्णो**सीति संमतिमिव पृच्छन्नाह भावस्य महत्वख्यापनायाह **सुरेतराणां** दैत्याना**मक्षौहिणीनां शतस्य वधेने**ति । ननु न दैत्याः साम्प्रतं प्रतीयन्त इत्याह **राज्ञामि**ति । प्रयोजनान्तरमप्याह **अमुष्य** वसुदेवकुलस्य **यशो वितन्वन्नि**ति रूपद्वयेनावतरणप्रयोजनद्वयमुक्तम् ॥ २४ ॥

एवं भगवदवतारं प्रसङ्गात् कर्माणि च स्तुत्वा भगवदागमनं स्तौति **अद्येश न** इति ।

**अद्येश नो वसतयः खलु भूरिभागा**
**यः सर्वदेवपितृदेवनृदेवमूर्तिः ।**

---

श्रीविट्ठलेशात्मजश्रीवल्लभकृतलेखः ।

**यज्ञत्वविधिरिति** । परब्रह्मणोप्युत्कर्षापादकत्वे दर्शपूर्णमासयोरुत्कर्षोऽनेनैव सिद्ध इत्युत्कर्षसाधनार्थं यज्ञत्वविधानं व्यर्थं स्यादित्यर्थः ।

**यत्पादशौचसलिलं त्रिजगत्पुनाति**
**स त्वं जगद्गुरुरधोक्षज याः प्रविष्टः ॥ २५ ॥**

**नो वसतयो** गृहा **अद्य भूरिभागा** अस्मत्कुलेऽवतीर्ण इति वयं पूर्वमेव भूरिभागाः । वसतयस्त्वद्य । **न** इति बहुवचनं भ्रात्राद्यभिप्रायम् । ननु निरोधाधिकारिणो भवन्तः तदर्थमागमनं न तु धर्मार्थमिति कथं वसतीनां कृतार्थतेति चेत्तत्राह **ईश** इति । उभयमपि कर्तुं समर्थः । ननु भवत्संबन्धादेव तेषां भाग्यमस्तु, पृथक् किमिति निरूप्यत इत्याशङ्क्याह **भूरिभागा** इति । मद्भाग्यं चेद् यदैव ममेच्छा तदैवागच्छेदतो गृहस्यैव भाग्यम् । ननु गृहं हि त्रिगुणात्मकं गुणातीतो हि भगवदनुगुणो भवतीति कथमेवमुच्यत इति चेत्तत्राह **यः सर्वदेवपितृदेवनृदेवमूर्ति**रिति । गृहाणामपि स्वोत्कर्षो येन सिध्यति तदपि रूपं भगवति वर्तते, गृहं हि देवतायोग्यं भवति पितृणां नराणां च । त्रयो हि लोके गृहे सुखिता भवन्ति, तेषां स्वदेवत्वमुत्कर्षः । देवमात्रे संतुष्टे गृहं युक्तं भवत्यन्यथा व्यर्थम्, एवमितरयोस्तत्र देवोत्तमो भगवानिति तत्प्राप्तौ भवत्येव सर्वोत्कर्षो योग्यता च । एवमितरयोः । **किञ्च** । शुद्धिरप्यपेक्षिता सापि जातेत्याह **यत्पादशौचसलिल**मिति । पादशौचसलिलं गङ्गा सा परम्परासंबद्धापि देशकालव्यवहितापि जलान्तरेण मिश्रितापि लोकत्रयमपि पुनाति, अत्र तु साक्षादेव पततीति किं गृहभाग्यं वक्तव्यमित्यर्थः । ननु रूपभेदाद् वैलक्षण्यं भविष्यतीत्याशङ्क्याह **स त्वमिति** । अत्रापि त्वमेव प्रमाणमित्याह **जगद्गुरु**रिति । तर्हि कथं लोका न जानन्तीत्याशङ्क्याह **अधोक्षजे**ति । बहिर्मुखत्वादज्ञानम् । **या** वसतीः । पुनर्ग्रहणं तासामभिनन्दनार्थं च ॥२५॥

एवं भगवदागमनं स्तुत्वा भगवति प्रपत्तिं स्तौति स्वचिकीर्षितां **कः पण्डित** इति ।

**कः पण्डितस्त्वदपरं शरणं समीया-**
**द्भक्तप्रियादृतगिरः सुहृदः कृतज्ञात् ।**
**सर्वान्ददाति सुहृदो भजतोऽभिकामा-**
**नात्मानमप्युपचयापचयौ न यस्य ॥ २६ ॥**

स्तुत्यनन्तरं हि फलं प्रार्थनीयं तत्प्रपत्त्यतिरिक्तं नास्तीति ज्ञापयितुं प्रपत्तिमेव स्तौति । प्राणिभिः कर्तव्या प्रपत्तिरेव । कर्तव्याकर्तव्यविवेकवान् हि **पण्डितः**, इममेवार्थमधिकृत्य 'पण्डितो बन्धमोक्षवि'दित्युक्तम् । तत्रानायासेन फलसिद्धिः । विद्यमाने स्वोत्कृष्टे

---

श्रीपुरुषोत्तमकृतः प्रकाशः ।

**अद्येत्यत्र इतरयो**रिति । उत्कृष्टयोरिति शेषः । **इतरयो**रिति, उत्तम
१०-४५-२५ इति शेषः ।

**कः पण्डित इत्यत्र** । किमिति **प्रपत्तिरेव** कर्तव्या भक्त्यादीनामपि विद्यमान-

समाश्रयणमेव युक्तम् । आश्रयो हि स्वाधीनं सर्वमेव यच्छति । मनस्तु क्षणिकमिति सर्वपदार्थाभिलाषि भवतीति कदा वा किं प्रार्थयेदिति तत्तत्साधनेष्वशक्तो हि प्रपत्तिमार्गमवलम्बते । तदपि कृत्वा चेत्फलं न प्राप्नुयादसमर्थभजनात् तदा प्रपत्तिर्व्यर्थेति को वा विवेकी त्वत्तोपरं शरणं सम्यगीयात्, साधनत्वेन गुरुत्वेन वानुवृत्तिं कुर्यात् न तु शरणं गच्छेत् । नन्वाहत्य कथं त्वं प्राप्तव्यः । अतोन्यानुवृत्तिः प्रथममावश्यकीति कथमन्यनिरोधः क्रियत इति चेत्तत्राह **त्वदपर** इति । त्वमपरो यस्य नियामकत्वेन न बुद्ध्या गृहीतः । गुर्वादिस्तु नैवंविधो भवतीति न दोषः । भगवतः शरणागतौ हेतूनाह **भक्तप्रियादृतगिरः सुहृदः कृतज्ञादिति** । षट्हेतवो हि भगवति । तत्र फले हेतुद्वयं साधने चतुष्टयमिति । साधनेपि स्वधर्मपुरस्कारेण आश्रितधर्मपुरस्कारेण हेतुर्वक्तव्यः । अन्यथा फलं काकतालीयं स्यात्, यो हि सेवकानपेक्षते स सेवकेभ्यः प्रयच्छति स ईश्वर एव भवति, तत्रापि सेवकधर्मं चेदुररीकुर्यात्तदैव सेव्यो भवति तदाह **भक्तप्रियादिति** । लोका हि फलार्थं सेवमानाः सेवायामशक्ताश्चेन्न फलं प्राप्नुवन्ति, भजनानुरूपं च प्राप्नुवन्ति न हि प्रभुस्तस्य क्लेशं मन्यतेऽन्यथा दुःखदे साधारणे देशे काले च तान् सर्वान् न प्रवर्तयेत् यथा पुत्रम् । भगवांस्तु न तथा भक्तम्, अतो भगवानेव सेव्यः । किञ्च । स्वधर्ममप्यवेक्ष्य भक्तहितं करोतीत्याह **ऋतगिर** इति । सत्यवाक् सत्यसङ्कल्पः 'संग्रामे च प्रपन्नानां तवास्मीति च यो वदेत्' । 'कौन्तेय प्रतिजानीही'त्यादिवाक्यात् । यो हि सेवकक्लेशं सहते स न मनसि शुद्धः, यो वाचि न दृढः स वाचि तथा । यस्तु समागतेवसरे मित्रमिव कार्यं न करोति शरीरतः स काये तथा । एतत्रयं लौकिकं स्वतः कर्तव्यम्, तस्य कृतं जानातीति तद्धर्मकरणे हेतुरुक्तः । दोषाभावा एते, आत्मवत् पुत्रवच्च भक्ताः कायवाङ्मनोभिः विषयीकर्तव्याः इति गुणः, प्रह्लादे सर्वापत्सु मनसा हितं कृतवान् वाचा गोपिकादिषु कायेनास्मास्विति । एवं भावे भगवद्गुणे न कोपि सन्देहः, कृतज्ञत्वाभावे प्रवाहवत्

---

श्रीपुरुषोत्तमकृतः प्रकाशः ।

१०-४५-२६ त्वादित्यत आहुः **तत्रेत्यादि** । ननु प्रपत्तिरीदृशी चेद्यत्र क्वाप्यस्तु भगवत्येव कर्तव्येत्यत्र को विशेष इत्यत आहुः **तत्तदित्यादि** । **कुर्यादिति** । पण्डितोन्यस्येति शेषः । **न बुद्ध्या गृहीत** इति । तथा च न तादृशोनुवृत्त्या फलमिति सा नावश्यकीत्यर्थः । तर्हि कथं गुर्वाद्युपसत्तिः क्रियते तत्राहुः **गुर्वादिरित्यादि** । आश्रितधर्मपुरस्कारेण शरणागतिहेतुं विवरीतुमाहुः **यो हीत्यादि** । **प्रभुरिति** लौकिकः । **मन्यत इति** । जानाति । **भक्तमिति** प्रवर्तयतीति शेषः । **इत्याहेति** । **ऋतगिरः** इत्यादि-

---

श्रीविट्ठलेशात्मजश्रीवल्लभकृतलेखः ।

**कः पण्डित इत्यत्र** । **वाचा गोपिकादिष्विति** । उद्धवद्वारा सन्देशप्रेषणेनेत्यर्थः

कारणान्नोत्कर्षः स्यात्, फलदातृत्वमाह **सर्वान् ददातीति** । परेषामनिष्टं स्वानिष्टं वा कर्तुं वाञ्छन्ति तदा न ददातीति ज्ञापयितुं **सुहृद** इति । शुद्धान्तःकरणस्य स्वद्रोहं परद्रोहं वाऽविचारयतः सर्वानेव कामान् ददाति, दाने हेतुर्भजनमित्याह **भजत** इति । एकस्मिन्नपि प्रार्थिते अभितः सर्वतः प्रयच्छति । नन्वन्येऽप्येतादृशा भवन्तीत्याह **आत्मानपीति** । अत्र दाने भजनमेव हेतुस्तेन तारतम्येन सर्वं संगच्छते । यः स्वात्मानं भगवते प्रयच्छति भगवानपि तथा तस्मै प्रयच्छतीति । नन्वेतादृशमपि लोके क्वचित्सिद्धमिति चेत्तत्राह **यस्योपचयापचयौ न** स्त इति । यत्संबन्धिनः सर्वस्यैवोपचयापचयाभावः । उभयनिरूपणमुपचितं चेद्दत्तं तस्य नापचयं करोति । अपचितं चेद्दुःखाधिकं तत्कदाचिदपि नोपचितं करोति । अथवा । एकरूपमेव सर्वेभ्यो भक्तेभ्यः प्रयच्छति । न तु विषमम्, वस्त्वेव तथेति नेच्छापि तत्र प्रयोजिकेति धर्मिणि तौ धर्मौ निरूपितौ ॥ २६ ॥

एवं सर्वप्रकारेण स्तुत्वा किञ्चित् प्रार्थयते **दिष्ट्या जनार्दनेति** ।

**दिष्ट्या जनार्दन भवानिह नः प्रतीतो**
**योगेश्वरैरपि दुरापगतिः सुरेशैः ।**
**छिन्ध्याशु नः सुतकलत्रधनाप्तगेह-**
**देहादिमोहरशनां भवदीयमायाम् ॥ २७ ॥**

पूर्वमपि वयं भक्ताः परमापाततस्त्वत्स्वरूपाज्ञानात् अद्य तु नोस्माभिरिह **भवान् प्रतीतः** । अतो ज्ञाते कल्पतरौ अभिलषिते विलम्बो न युक्त इति प्रार्थनीय इति भावः । कथमेतावता कालेन न ज्ञातवान् कथमद्यैव ज्ञातवानित्याशङ्क्य हेतुद्वयमाह **दिष्ट्या जनार्दनेति** । भाग्यमद्यैवोन्मुखम् । जनयतीति जना ताम् अर्दयतीति । इदानीमेवाज्ञानं नाशितवान्, प्रसन्नो हि स्वधर्मानाविष्करोति सेवकधर्मांश्चातो भाग्यं मोहनाशं च प्रकाशितवानित्यर्थः । आगमनेन प्रसादो निरूपितः, साधनान्तरं व्यावर्तयति । **योगेश्वरैरपि दुरापगतिरिति** । योगवशीकरणादिकं स्वसामर्थ्यम् । न हि नियताः स्वधर्मा अन्येन बोधयितुं शक्यन्ते, दुःखेन **प्राप्या गतिर्यस्येति** भगवदभिप्रायापरिज्ञानमुक्तम् । स्वाधीने हि मथित्वा वह्निवत्साधनीयम् । तदेकः संघातो भगवता दत्त इति तावन्मात्रे वश्यता भवति नान्यत्रेति सुष्ठूक्तम् । अलौकिकेनापि सामर्थ्येन न भवतीत्याह **सुरेशैरिति** प्रार्थनामाह **छिन्ध्याश्विति** । सुतादिषु **मोहरशनां** छिन्धि, यतस्त्वयैव सम्पादितेत्याह **भवदीयमायामिति** । अन्ते छेदनं वारयति **आश्विति** । अत्यन्तं दृढमूले छिद्यमाने पुनरुद्गमश्छेदके वैमनस्यं च भविष्यतीति ॥ २७ ॥

---

श्रीपुरुषोत्तमकृतः प्रकाशः ।

विशेषणत्रयेणाहेत्यर्थः । नन्वपचयाभावकथनेनैव कार्यसिद्धिः उपचयस्तु गुण एवेति तदभावकथनं न युक्तमित्यत आहुः **उभयेत्यादि** ।

भगवतोह्ययं भावः शास्त्ररहस्यसिद्धः । यो हि यादृशः स तादृश एव कर्तव्यः भक्तिवशादन्यथाकरणेऽयुक्तता भवतीति, भक्तिर्मध्यमाज्ञानम् । यथा शृङ्गारलीला गोप्यैव तथावतारलीलापि गोप्यैव, तां यः प्रकटीकुर्यात् स नाभिप्रेत इति विपरीतं वदेत्, यथा गोपिकागीतेन गोपिकास्त्यक्ताः तथायमपि लीलार्थमुत्पादितः स्वरूपापरिज्ञानाद् बहिर्मुखतया ज्ञानिनमात्मानं मन्यमानः तत्प्रार्थयते । अतोस्य सर्वाण्येव वचनान्यसंबद्धानि अतस्तन्निवारणार्थं भगवान्मोहयितुं प्रवृत्त इत्याह **इत्यर्चित** इति ।

श्रीशुकउवाच—**इत्यर्चितः संस्तुतश्च भक्तेन भगवान्हरिः ।**

**अक्रूरं सस्मितं प्राह गीर्भिः संमोहयन्निव** ॥ २८ ॥

पूर्वोक्तेन प्रकारेणा**र्चितः** स सम्यक् **स्तुतश्च** भक्तश्चायं तथापि **भगवानी**श्वरः सर्वदुःखहर्ता च भक्तश्चायम् । अत उभयं अभिप्रेत्य **सस्मितं प्राह** । स्मितो हि मन्दहासः अल्पमेव मोहितवान् । **गीर्भिर**पि सम्यक् **मोहयन्निव** जातः । सम्यक्त्वं लीलौपयिकत्वेनान्यथा प्राकृतत्वे लीलामपि त्यजेत् ॥ २८ ॥

---

श्रीपुरुषोत्तमकृतः प्रकाशः ।

**इत्यर्चित** इत्यस्याभासे । ननु भगवानक्रूरप्रार्थितं कुतो न दत्तवानित्यत आहुः **अत्यन्तमि**त्यादि । **अयमि**ति वक्ष्यमाणः । तमाहुः **यो ही**त्यादिना ।

१०-४५-२८ ननु ‘ अहं भक्तपराधीन ’ इत्यादिवाक्यविरुद्धमेतदित्याशङ्कायां प्रकृते या विवक्षिता तां भक्तिमाहुः **भक्तिरि**त्यादि । इयं मध्यमा ज्ञानात्मिका, न तु परमातो न तद्विरोध इत्यर्थः । तथा चायुक्तत्वान्न दत्तवानिति भावः । नन्वस्त्वेवं, तथापि ‘ त्वन्नो गुरु’रित्यादिविपरीतवाक्यानां किं प्रयोजनमत आहुः **यथा शृङ्गारे**त्यादि । **स** इति । प्रकटीभावः । तत्र निदर्शनमाहुः **यथे**त्यादि । एतेन सन्देशस्थितज्ञानोपदेशस्यापि तात्पर्यं ज्ञापितम् । यदि तथा न कुर्युस्तदा नैवं वदेदिति । प्रकृते तदतिदिशन्ति **तथायमि**त्यादि ।

---

श्रीविट्ठलेशात्मजश्रीवल्लभकृतलेखः ।

**इत्यर्चित** इत्यस्याभासं प्रस्तावयन्ति । **भगवतो ह्ययं भाव** इति । तं भावमाहु**र्यो हीति** । ननु तथापि भक्तवश्यत्वादेतदनुरोधं कुतो न कृतवानित्यत आहुः । **मध्यमाज्ञानमि**ति । न सांसारिकज्ञानम्, नापि मुख्यसिद्धान्तज्ञानम् । अतो मध्यममज्ञानमक्रूरस्य भक्तिरतो न तद्वश्य इति भावः । **यथा गोपिके**ति । द्वात्रिंशाध्यायोक्तेन गोपिकागीतेनान्तरङ्गलीलाप्राकट्यं दृष्ट्वा बाह्यभावान्निवर्तयितुमुत्तरदलमनुभावयितुं तदनन्तरं त्यक्ताः बहिःसम्बन्धरहिताः कृताः । अत एव त्रयस्त्रिंशाध्याये ‘नातः परं सम्बन्ध’ इत्युक्तम् । **तथायमपी**ति । त्यक्तव्य इति शेषः । त्यागमात्रांशे दृष्टान्तः । तासामान्तररमणं सम्पादितवान् । अयं तु त्यक्त एव । तत्र हेतुर्बहिर्मुखत्वमित्याशयेनाहुः । बहिर्मुखतयेति ।

भगवान् लौकिकवैदिकद्विविधशास्त्रप्रकारेण तं मोहयन्नाह **त्वं नो गुरुरिति** त्रिभिः ।

श्रीभगवानुवाच—**त्वं नो गुरुः पितृव्यश्च श्लाघ्यो बन्धुश्च नित्यदा ।**
**वयं तु रक्ष्याः पोष्याश्च अनुकम्प्याः प्रजा हि वः ॥ २९ ॥**

हितोपदेष्टा **गुरुः** प्रायेण धनुषोऽभ्यासं च कारितवानिति लक्ष्यते । अवश्यं केनचिल्लोकन्यायेन धनुः शिक्षणीयम् । अन्यश्चात्रार्थे गुरुर्नोक्तः । भगवांश्च सत्यमेव वदतीत्यर्थादयं **गुरुः** । **न** इति बलभद्रादीनामभिप्रायेण । बालाभ्यासं कारयति **पितृव्यः** स्पष्टः, **च**काराद्धितकारी । न ह्यन्योन्यत्र क्वापि सतः स्वगृहे समानयति । **किञ्च** । कुले **श्लाघ्यः** महत्त्वेन प्रसिद्धः, पितृव्यादीनां सापत्न्यभाववद् भ्रातृव्यत्वादन्यथात्वमाशङ्क्याह । **बन्धुश्च नित्यदे**ति । सर्वदा बन्धुकृत्यमेव करोति । एवं चकारेण सह पञ्चधर्मास्तस्मिन्निरूपिताः । ततोन्यथा पञ्चधर्मान् स्वस्मिन्निरूपयति **वयं त्विति** । **तु**शब्दः पूर्वसंबन्धेन तुल्यतां वारयति । गुरुस्तु रक्षकः । भगवता साधनेषु दत्तेष्वपि बुद्ध्यभावे रक्षाऽसंभवाद्वयं **रक्ष्याः** पितरः पोषकाः पुत्राः **पोष्याः**, चकारान्न वयं भवद्धितकारिणः किन्तु भवन्त एव, अर्थाद्दयापात्रमिवोक्तं भवति । **अनुकम्प्याः** श्लाघ्या हि नानुकम्प्याः सर्वदा हिताचरणं पतिभिः कर्तव्यम् । **वो** युष्माकमिति वसुदेवादींस्तानेकीकृत्य निरूपयति । अन्यथा स्तुतित्वं ज्ञायेत ॥२९॥

एवं लौकिकोत्कर्षमुक्त्वा प्रवृत्तिप्रकारेण वैदिकोत्कर्षमाह **भवद्विधा** इति ।

**भवद्विधा महाभागा निषेव्या अर्हसत्तमाः ।**
**श्रेयस्कामैर्नृभिर्नित्यं देवाः स्वार्था न साधवः ॥ ३० ॥**

ये हि सर्वप्रकारेणोत्कृष्टास्ते सर्वैरुपास्याः, **भवद्विधा** इति तेषामुत्कर्षो निरूपितो यादृशास्तादृशास्तत्रापि **महाभागाः** परमभाग्ययुक्ता इति तेषां संपत्तिर्निरूपिता । तत्राप्यर्ह**सत्तमा** ये उपकारकर्तारः समृद्धाः सर्वे संप्रतिपन्नास्ते सर्वैरुपास्या इत्यर्थः । तत्रापि **श्रेयस्कामैः** । अनेन स्वार्थमेवोपासनमुक्तं दृष्टार्थत्वं च निरूपितम् । **नृभिरिति** । मनुष्याधिकारो निरूपितः । तेनास्माकमिदमावश्यकमित्यर्थः । ननु शास्त्रे देवा एव सेव्या न त्वन्य इति चेत्तत्राह **देवा**स्तु **स्वार्थाः** स्वार्थं ज्ञात्वैव हितं कुर्वन्ति । **साधव**स्तु नैवम् । अतो देवभजनापेक्षयापि साधुभजनमेवोत्तमम् ॥ ३० ॥

किञ्च । निवृत्तिमार्गे तीर्थानि सेव्यानि, तदपेक्षयाप्येत एव सेव्या इत्याह **न ह्यम्मयानि तीर्थानीति** ।

**न ह्यम्मयानि तीर्थानि न देवा मृच्छिलामयाः ।**
**ते पुनन्त्युरुकालेन दर्शनादेव साधवः ॥ ३१ ॥**

तीर्थेषु स्नात्वा तदधिष्ठातृदेवतापूजनं कर्तव्यं, तदा तीर्थं कृतं भवति । तदुभय-

मप्यप्रयोजकमित्याह **न ह्यम्मयानीति** । तीर्थशब्देन जलाभिमानिनी देवतोच्यते । सा चिन्मयी, देवता च चिदानन्दमयीत्येव शास्त्रमर्यादा । **अम्मयानि** तु तीर्थानि न भवन्ति, **देवा** अपि **मृच्छिलामया** न भवन्ति । स्थानस्य देवतात्वपक्षे मृण्मयत्वं प्रतिमाया देवतात्वपक्षे तु शिलामयत्वमुभयमपि लोकप्रसिद्धं निवार्यते । शास्त्रप्रामाण्यात् । अन्यथा शास्त्रमनुवादकं सदप्रमाणमेव भवेत् । **किञ्च** । अत एव पावित्र्यमपि तत्कृतमुत्तमं न भवति । यतस्ते **उरुकालेन पुनन्ति** महता कालेन विध्युक्तानुसारेण तीर्थसेवायां चित्तशुद्धेरुक्तत्वात् । **साधवस्तु** ज्ञानोपदेष्टारः भक्तिप्रवर्तका वा, **दर्शनमात्रेणैव** ज्ञानभक्त्योः साधितत्वात् फलतोप्युत्कर्षः ॥ ३१ ॥

एवं स्तुत्वा संमोहमुत्पाद्य स्वाभिलषितं करिष्यतीति अभिज्ञाय किञ्चिदाज्ञापयति **स भवानिति** त्रिभिः ।

**स भवान्सुहृदां वै नः श्रेयान् श्रेयश्चिकीर्षया ।**
**जिज्ञासार्थं पाण्डवानां गच्छस्व त्वं गजाह्वयम् ॥ ३२ ॥**

तेषु त्रिविधं हि कार्यं कर्तव्यं, मोक्षः संपादनीयः, भक्तिर्वा, पाण्डवेषु राज्यं च देयम्, शत्रवश्च मारणीया इति । **स** सर्वथोपकारकर्ता **भवान्** । तत्रापि **सुहृदां** भगिनीभागिनेयानाम् । **वै** निश्चयेनेति तेऽवश्यं पालनीया इति । पुरुषस्य हि पितृवर्गो वा मातृवर्गो वा रक्षको भवति । तत्र पितृवर्गः न तेषां रक्षकः पितुर्निवृत्तत्वादन्येषां प्रतिकूलत्वादिति वक्ष्यति । अत एव वयमेव सुहृदः अस्माकं मध्ये त्वं च **श्रेयान्** । अतः **श्रेयश्चिकीर्षया** हिताचरणार्थं पाण्डवानामादौ जिज्ञासार्थं गजेन समानाह्वयं हस्तिना राज्ञा निर्मितं हस्तिनापुरं गच्छ । अनेन प्रसिद्ध्या तत्र गमनं न निन्दितं भवति । गुप्तस्थानेषु न तिष्ठन्तीत्यर्थः ॥ ३२ ॥

का जिज्ञासेत्याकाङ्क्षायामाह **पितर्युपरत** इति ।

**पितर्युपरते बालाः सह मात्रातिदुःखिताः ।**
**आनीताः स्वपुरं राज्ञा वसन्त इति शुश्रुम ॥ ३३ ॥**
**तेषु राजाम्बिकापुत्रो भ्रातृपुत्रेषु दीनधीः ।**
**समो न वर्तते नूनं दुष्पुत्रवशगोऽन्धदृक् ॥ ३४ ॥**

---

श्रीपुरुषोत्तमकृतः प्रकाशः ।

**नह्यम्मयानीत्यत्र** । नन्वेवं प्रसिद्धयोस्तीर्थदेवतयोर्निषेधे तत्सेवाबोधकशास्त्रविरोध इत्यत आहुः **उभयमपीत्यादि** । किमेतावतेत्यत आहुः **अन्यथेत्यादि** ।

पाण्डौ संस्थिते **बाला** एव, ते च बहवश्च **मात्रा सह** स्थिता इति स्तनन्धयप्राया इत्यवस्थाया दयापात्रत्वमुक्तम् । **अतिदुःखिता** इति दयायाः साधारणो हेतुः, तदीयानां पालकत्वमस्ति न वेति वचनार्थं परिग्रहो निरूप्यते **आनीताः स्वपुरमिति** । ते चेच्छत्रवः सुतरामेवानर्थपर्यवसायित्वं स्वस्थाने स्थापिता इति । तत्रापि **राज्ञा** । अनेन तेषां राजत्वाभावो निरूपितः ॥ ३३ ॥

**किञ्च** । न केवलं ते वसन्ते किन्तु उपद्रुता इत्यपि शङ्का । यतोयम**म्बिकापुत्रः** तेषु प्रसिद्धेष्वपि निर्दुष्टेष्वपि **भ्रातृपुत्रेषु** विनीतेषु **समो न वर्तते,** इति तत्र हेतुः **दीना धीर्यस्येति** । बुद्धिस्तु दरिद्रा, दरिद्रो हि दुर्गतः सर्वमेव कर्तुं शक्तः निषिद्धम् । विहिते त्वशक्तः इति तस्य सहजो दोष उक्तः । आगन्तुकं दोषमाह । **दुष्पुत्रवशग** इति । दुष्टः सहजः कलित्वात् । दुर्योधनो हि कलेरवतार इति । अत एव कालस्य प्राबल्यात् तद्वशगः,पुत्रत्वान् मोहेनापि तद्वशगो जातः । स्वतो विचारसामर्थ्याभावायाह । **अन्धदृगिति** । स हि जात्यन्धः शब्देनैव व्यवहरति । प्रियमेव शब्दं सर्वो मन्यते, पुत्रशब्दश्च प्रियः ॥३४॥

तर्हि किं कर्तव्यमित्याकाङ्क्षायामाह **गच्छ जानीहीति** ।

**गच्छ जानीहि तद्वृत्तमधुना साध्वसाधु वा ।**
**विज्ञाय तद्विधास्यामो यथा शं सुहृदां भवेत् ॥ ३५ ॥**

एकवचनेन सेनाद्यभावः सूचितः । युद्धार्थं न गन्तव्यं किन्त्वधुना तेषां **साधु** मङ्गलमस्ति **असाध्व**मङ्गलं वा अनिष्टमस्ति । **वे**त्यनादरे नोभयं वा । ज्ञानस्य कुत्रोपयोग इत्याकाङ्क्षायामाह **विज्ञायेति** । **तदनुरूपं विधास्यामः** । प्रकारजिज्ञासायामाह **यथा शमिति** । **सुहृदां** बन्धूनां येनैव प्रकारेण **शं भवेत्** स एव प्रकारः कर्तव्य इत्येतत्सर्वं जिज्ञासानन्तरं कर्तव्यमन्यथा कृतं न सुखपर्यवसायि भवतीति । अतो जिज्ञासार्थमेव **गच्छ** न त्वन्यत्किञ्चित्कर्तव्यमिति भावः । मोहितस्यायं गुणः यदधिकमपि करिष्यतीति । अत एव धृतराष्ट्रोपि तेन निर्भर्त्सितः ॥ ३५ ॥

एतावतैव कार्यं भविष्यतीत्यभिज्ञाय भगवान् स्वगृहं गत इत्याह **इत्यक्रूरं समादिश्येति** ।

**इत्यक्रूरं समादिश्य भगवान् हरिरीश्वरः ।**
**संकर्षणोद्धवाभ्यां वै ततः स्वभवनं ययौ ॥ ३६ ॥**

आज्ञासिद्धौ भगवत्त्वं हेतुः । आज्ञापने हरित्वम्, स्वतः अगमने ईश्वरत्वम्,

---

श्रीविट्ठलेशात्मजश्रीवल्लभकृतलेखः ।

तेषु राजेत्यत्र । दुर्गत इति । दरिद्रा दुर्गताविति धातुपाठादिति भावः ।

स्तुत्वा स्वापेक्षयाप्याधिक्यमुपपाद्येदानीं नीचसेवककार्यं दूतत्वं च कारितवानितीश्वरचर्या । संकर्षणोद्धवयोरन्यतरस्य वा गमनं भविष्यतीत्याशङ्क्याह **संकर्षणोद्धवाभ्यामिति** । निर्गमन एव सहभावः, स्वभवनगमने तु नायं निर्बन्ध इति विज्ञापयितुं **तत** इत्युक्तम् । तस्मात् स्थानात् तदनन्तरं च कार्यान्तरव्यावृत्त्यर्थं स्वस्य **भवनं ययौ** । प्रापणकथनेन मध्येपि कार्यान्तरं व्यावर्तितम् ॥ ३६ ॥

**इति श्रीभागवतसुबोधिन्यां श्रीलक्ष्मणभट्टात्मजश्रीवल्लभदीक्षितविरचितायां दशमस्कन्धपूर्वार्धे पञ्चचत्वारिंशाध्यायविवरणम् ॥ ४५ ॥**



श्रीकृष्णाय नमः ।

# षट्चत्वारिंशोऽध्यायः ।



षट्चत्वारिंशकेऽध्याये सात्त्विकानां निरूप्यते ।
सान्त्वनं चान्यमुखतो निरोधो ह्यधिकारतः ॥ १ ॥
भगवत्प्रेषितोऽक्रूरः कृत्वा सान्त्वनमग्रतः ।
ज्ञानेन तत्प्रतीकारं मत्वा तच्चोक्तवान् स्वयम् ॥ २ ॥
पाण्डवैर्ज्ञापिताशेषो विचारे कुशलो यतः ।
अतः स्थित्वा गतिं बुध्वा स्वशक्तिं ज्ञातवांस्ततः ॥ ३ ॥
अन्यथा भगवत्कार्यं निरोधो न भविष्यति ।

प्रथमं भगवदुक्तं कृतवानित्याह **स गत्वेति** षड्भिः

श्रीशुक उवाच—**स गत्वा हास्तिनपुरं पौरवेन्द्रश्रियाङ्कितम् ।
दद‍र्श तत्राम्बिकेयं सभीष्मं विदुरं पृथाम् ॥ १ ॥**

**सोऽक्रूरः** स्वतो भगवदाज्ञया च विशिष्टो **हास्तिनपुरं** हस्तिन्शब्दादपि रूढत्वाभावाय तेन निर्वृतमिति ज्ञापनार्थमुक्तम् । यद्यप्यधर्मबहुले न गन्तव्यं तथापि स्वभावत उत्तममित्याह **पौरवेन्द्रश्रियाङ्कितमिति** । पौरवेन्द्राणां श्रियाऽङ्कितमिति, मुख्यत्वात्

श्रीपुरुषोत्तमकृतः प्रकाशः ।

**षट्चत्वारिंशाध्यायतात्पर्यं** निरूपयन्तः सङ्गतेः पूर्वमुक्तत्वात् तदर्थमेवाहुः **षडित्यादि** । अन्यमुखेन सान्त्वने हेतुमाहुः **निरोध** इत्यादि । **हि** यस्माद्धेतोः अधिकारमनतिक्रम्य निरोधोतस्तथेत्यर्थः । चकारोऽक्रूरोक्तप्रतिक्रियादिसमुच्चायकः । तदेव विशदयन्ति **भगवदित्यादिना** । ननु स्वशक्तिज्ञानस्य किं प्रयोजनमत आहुः **अन्यथेत्यादि** । उक्तिमात्रेण कार्यसिद्धौ तथेत्यर्थः ।

श्रीविट्ठलेशात्मजश्रीवल्लभकृतलेखः ।

**षट्चत्वारिंशे** । **कारिकासु** । **अन्यमुखत** इति । अक्रूरमुखत इत्यर्थः । **पाण्डवैरिति** । पाण्डवैर्हेतुभूतैः सर्वं ज्ञापितम् । पृथाविदुराभ्यामिति शेषः । तथापि तावतैव स्वाशक्तिं न ज्ञातवान् । किन्तु यतो हेतोर्विचारे कुशलः अतो हेतोः स्थित्वा तद्गतिं बुध्वा ततस्तदनन्तरं तथा ज्ञातवान् निश्चितवानित्यर्थः । **अन्यथेति** । अक्रूरस्यैव शक्तौ भगवतः प्रयोजनं न भवेदित्यर्थः ।

प्रथमतो राजदर्शनम् । अम्बिकायाः पुत्रो धृतराष्ट्रः, धृतं राष्ट्रं येनेतिव्युत्पत्तिः संभविष्यतीति तन्निषेधार्थं मातृनाम्ना व्यपदिष्टः । राजस्थान एव **भीष्मं** च दृष्टवान्, **विदुरं पृथा**मिति ज्ञापको ज्ञाप्यश्च निरूपितः ॥ १ ॥

**सहपुत्रं च बाल्हीकं भारद्वाजं सगौतमम् ।**
**कर्णं सुयोधनं द्रौणिं पाण्डवान्सुहृदोपरान् ॥ २ ॥**

**सहपुत्र**मिति । **बाल्हीकः** शन्तनोर्भ्राता । तत्पुत्रा भूरिश्रवादयः । **भारद्वाजो** द्रोणः । **गौतमः** कृपः । कर्णदुर्योधनाश्वत्थामानः एते महारथाः गणिताः षट् । सहपुत्रत्वेन सहाया अपि गणिताः । ततोग्रे तेषां निवारणसमर्था इति ज्ञापयितुं पाण्डवा गणिताः । लोकन्यायेन सर्वबन्धुप्रियकृदिति ज्ञापयितुं **सुहृदोऽपरांश्च** दृष्टवानित्युक्तम् ॥ २ ॥

**यथावदुपसंगम्य बन्धुभिर्गान्दिनीसुतः ॥**
**संपृष्टस्तैः सुहृद्वार्तां स्वयं चापृच्छदव्ययम् ॥ ३ ॥**

**यथावदि**ति । ततो यथायोग्यं नमस्कारादिप्रकारेणोपगमनम् । अस्यापि माहात्म्यं मातृपुरस्सरमाह तैः मथुरास्थ**वार्तां सम्यक् पृष्टः** सन् **स्वयं** च तेषाम**व्ययमपृच्छत्** । **च**कारेण वार्ता समागतैव । **अव्यय**मिति । व्ययोत्र कस्यचित्परित्यागः । अव्ययं यथा भवति तथा सर्वानेव पृष्टवान् ॥ ३ ॥

आपाततो वृत्तान्तज्ञानं न भवतीति स्वतो ज्ञानार्थं स्थितवान् । वर्तमानस्यैव ज्ञानं भवतीति जातं श्रुतवान् । भविष्यज्ज्ञानार्थं प्रबोधितवानिति संग्रहस्तत्र प्रथमं स्थितिमाह **उवास** कतीति ।

**उवास कतिचिन्मासान्राज्ञो वृत्तविवित्सया ।**
**दुष्प्रजस्याल्पसारस्य खलच्छन्दानुवर्तिनः ॥ ४ ॥**

**कतिचिन्मासा**निति निरन्तरं यावद्वृत्तपरिज्ञानं भवति, मासत्रयं स्थितवानिति लक्ष्यते । मासे हि नूतना दिवसाऽऽवर्तन्ते । त्रयो हि पदार्था ज्ञातव्याः धृतराष्ट्रस्थाः स्वतो

---

श्रीपुरुषोत्तमकृतः प्रकाशः ।

१०-४६-३ **स्वयं चापृच्छदित्यत्र । परित्याग इति ।** बुद्धेः सकाशाद्विस्मरणमित्यर्थः । **उवासेत्यत्र । दिनानि** दिवसा इति । अर्थवीप्सया उत्सवपर्वादिरूपास्ते बोध्यन्ते ।

---

श्रीविट्ठलेशात्मजश्रीवल्लभकृतलेखः ।

**सहपुत्रमित्यत्र । ततोग्रे** इति । **तेषां** पाण्डवानां **निवारणसमर्था** एते महारथा इति पाण्डवानां निवार्यत्वं ज्ञापयितुं ततोग्रे ते **गणिता** इत्यर्थः ।

---

१ प्राचीनादर्शे 'दिनानि' इति नास्ति ।

दोषाः, पुत्रादिमोहकृता दोषाः, संसर्गदोषाश्चेति । एते नैमित्तिका अपि भवन्तीति मासपर्यन्तं निरन्तरपरिज्ञानार्थं स्थितिः, निरन्तरं परिज्ञाने त्रयाणां संश्लेषेण गुणदोषव्यवस्थापकानां प्रत्येकं व्यभिचारात् परिज्ञानं न भवतीति, एकैकस्य परिज्ञानार्थं तदीयगुणदोषनिर्धारार्थं मासपर्यन्तं स्थितिः । एवं दोषत्रये मासत्रयमिति, शीघ्रापरिज्ञाने राजत्वं हेतुः । राजमन्त्रणं गूढं भवतीति, दोषानाह दुष्टाः प्रजाः पुत्रा यस्य । अल्पः सारो विवेकधैर्यादिकं यस्य । खलाः शकुनिप्रभृतयः । तेषां छन्दो वृत्तं तदनुवर्तनशीलश्च, तत्कृतं समीचीनं मन्यत इत्यर्थः ॥ ४ ॥

भूतार्थपरिज्ञानमाह **तेज** इति द्वाभ्याम् ।

**तेज ओजो बलं वीर्यं प्रश्रयादींश्च सद्गुणान् ।**
**प्रजानुरागं पार्थेषु न सहद्भिश्चिकीर्षितम् ॥ ५ ॥**
**कृतं च धार्तराष्ट्रैर्यद्गरदानाद्यपेशलम् ।**
**आचख्यौ सर्वमेवास्मै पृथा विदुर एव च ॥ ६ ॥**

**तेजः** कान्तिः, **ओज** इन्द्रियशक्तिः, **बलं** देहस्य, **वीर्य** पराक्रमः, वीररसाभिनिवेशकृत एते क्षत्रियोत्कृष्टत्वप्रतिपादकधर्माः । **सद्गुणानाह । प्रश्रयादीनि**ति । विनयादयो हि सात्त्विकधर्मास्तेन स्वभावतस्ते जीवा उद्धर्तव्या इत्युक्तम् । द्वेषे हेत्वन्तर**मप्याह पार्थेषु** युधिष्ठिरादिषु **प्रजानुरागं** च, त्रेधा हि मात्सर्यमुत्पन्नं त्रिदोषात्मकं सदचिकित्स्यमिति तत्कृतं फलमाह । **न सहद्भिश्चिकीर्षितमि**ति । सर्वथा मारणम् ॥ ५ ॥

कृतं तु **गरदानं**, भीमाय विषमोदकाः प्रदत्ता इति, स च पाताले **गत्वा** समागत इति च । आदिशब्देन बहुधा भीममारणार्थमुद्यमोपि प्रदर्शितः । **अपेशलम**सुन्दरं कदाचिदपमानादिकमपि **कृत**मिति वृत्तान्तसहितमेतत्सर्वं **पृथा विदुर**श्च स्वकीयसाधारणश्च सर्वमेवा**चख्यौ** । एकेन स्वरूपज्ञानमपरेण भावज्ञानमिति । **चकारा**ल्लोकमुखतोपि ॥ ६ ॥

एवं भूतार्थपरिज्ञानमुक्त्वा भाव्यर्थपरिज्ञाने भगवदीयत्वं हेतुरिति पृथाया भगवदीयत्वनिरूपणार्थं भगवति तस्या नवधा भावमाह **पृथा त्वि**ति ।

---

श्रीपुरुषोत्तमकृतः प्रकाशः ।

१०-४६-४ तेषु वैषम्यस्य सम्यक् ज्ञातुं शक्यत्वादिति । **संश्लेषेणे**ति । एकाधिकरणवृत्तित्वेन ।

---

श्रीविट्ठलेशात्मजश्रीवल्लभकृतलेखः ।

**उवासेत्यत्र । मासत्रयमिति** । कपिंजलन्यायेन मासानां बहुत्वं त्रित्वे पर्यवसितमिति भावः ।

**पृथा तु भ्रातरं प्राप्तमक्रूरमुपसृत्य तम् ।**
**उद्दिश्यं जन्मनिलयं स्मरन्त्यश्रुकुलेक्षणा ॥ ७ ॥**

यद्यप्येषा कुन्तिभोजाय दत्ता तथाप्युत्पन्ना शूरादेवेति पितृगृहं वसुदेवादय एव भवन्ति, वसुदेवो भ्रातेत्ययमपि भ्राता । **तुशब्द**स्तज्जिज्ञासाभिन्नप्रक्रमार्थः । **प्राप्तमिति** तस्या अलभ्यलाभो दर्शितः । **उद्दिश्यमिति** । 'आचख्यौ सर्वमेवास्मै पृथे'त्युक्तम् । वस्तुतस्तु । पूर्वमेव समागमनादनन्तरमेव भगवति भावः । अत एव तुशब्दप्राप्तशब्दौ । **उपसृत्य** समीपे समागत्य **तं** पर्यनुयुञ्जाना **जन्मनिलयं** जन्मगृहं पितृकुलमिति यावत् । तत् **स्मरन्तीति** लोकवद**श्रुकुलेक्षणा** जाता ॥ ७ ॥

एतत्कायिकं मानसिकं च निरूपितम् । वाचनिकं निरूपयति **अपि स्मरतीति** ।

**अपि स्मरति नः सौम्य पितरौ भ्रातरश्च मे ।**
**भगिन्यो भ्रातृपुत्राश्च जामयः सख्य एव च ॥ ८ ॥**

**सौम्येति** सम्यक्कथनार्थं संबोधनम् । **नो**स्मान् पाण्डवान् । **अपीति** सम्भावनायाम् । यतः **पितरौ** यतो **भ्रातरः** पित्रोर्वृद्धत्वेनाप्रयोजकता शङ्क्येतेति भ्रातृग्रहणम् । **मे** इति स्वस्य प्रियत्वं सूचितम् । यद्यपि **भगिन्यो**न्यत्र सन्ति तथापि पितृगृहे समायान्तीति तेषां स्मरणज्ञानसम्भावना, अन्यस्मै दत्तेति शङ्कया कदाचिदस्मरणं, तथा सति न निस्तार इति भावः । स्मरणे त्वभिजनसम्पत्तिः सिद्धेति न तथा दुःखं भवति । **भ्रातृपुत्राः** वसुदेवादिपुत्राः **चका**राद्भगिनीपुत्राश्च । **जामयः** कुलस्त्रियः पितृवंशविवाहिता देवकीप्रभृतयः **सख्यः** स्वस्य तासां स्मरणमावश्यकमिति सर्वाश्च ताः सख्य एव, **चका**राद् बालिकाश्च, संपूर्णवंशस्य समत्वेन दुःखमिति भावः ॥ ८ ॥

**किञ्च** । स्मरन्त्वन्ये मा वा भ्रात्रेयः कृष्णः स्मरति न वेति पृच्छति **भ्रात्रेय इति** ।

**भ्रात्रेयो भगवान्कृष्णः शरण्यो भक्तवत्सलः ।**
**पैतृष्वस्रेयान्स्मरति रामश्चाम्बुरुहेक्षणः ॥ ९ ॥**

प्रायेणेयं नन्दगृहे समागत्य गतेति लक्ष्यते । तदुपपादितं प्रथमस्कन्धे । 'सा मां विमोहयती'त्यत्रातो भगवतोनुभवात्स्मरणं पृच्छति । स्मरणे संबन्धमाह **पैतृष्वस्रेया-**

---

श्रीपुरुषोत्तमकृतः प्रकाशः ।

**पृथा त्वित्यत्र । समागमनादनन्तरमेवेति** । गोकुल इति शेषः । **प्राप्तशब्द-**
१०-४६-७ श्चात्र भगवत्प्रेषितत्वेन परमाप्तत्वबोधको ज्ञेयः ।

---

श्रीविट्ठलेशात्मजश्रीवल्लभकृतलेखः ।

**पृथा त्वित्यत्र । पूर्वमेव समागमनादि**ति । गोकुले गमनादनन्तरमेवेत्यर्थः । अत एव 'गोप्याददे' इति पृथयोक्तम् ।

**निति** । पितृष्वसुः पुत्रान् पाण्डवान् । रामेऽपि स एव संबन्धः इति **रामश्चेत्युक्तम्** । चकाराद्भगवद्भक्ता उद्धवादयोपि । **अम्बुरुहेक्षण** इति **स्मरति** चेत्तापं ज्ञात्वा समायास्यतीति लक्ष्यते । दृष्ट्यैव तापदूरीकरणार्थम् ॥ ९ ॥

तदर्थं तापं निरूपयति **सपत्नमध्ये शोचन्तीमिति** ।

**सपत्नमध्ये शोचन्तीं वृकाणां हरिणीमिव ।**
**सान्त्वयिष्यति मां वाक्यैः पितृहीनांश्च बालकान्** ॥ १० ॥

व्यवहारे नाममात्रेण सम्बन्धिनः । वस्तुतः शत्रवः । नापकारमात्रं तेषां किन्तु सर्वनाशकत्वमिति दृष्टान्तमाह **वृकाणां मध्ये हरिणीमिवेति** । प्रसङ्गादागमनं निवारयति **सान्त्वयिष्यतीति** । प्रसङ्गादागतवाक्यानि न सर्वथा सान्त्वनसमर्थानि भवन्ति । **मामिति** । पाण्डवास्तु भ्रातरो भवन्ति, अहं पितृभगिनीति उभयोर्विशेषाकारेण सान्त्वनं करिष्यति किं **वाक्यैर्**र्थवद्भिः सुखेन सर्वान् स्थापयिष्यामीति । इह लोके परलोके च **पितृहीनांश्च**कारान् मातृहीनानपि । कृष्णस्य विशेषणं भगवानित्युक्तत्वादन्येषामवस्थादोषो भवतीति **बालकानित्युक्तम्** । स्वतोसमर्थान् ॥ १० ॥

एवं मनोरथमुक्त्वा तदानीमेव समागतं भगवन्तं मन्यमाना संमुखतया प्रार्थयते **कृष्ण कृष्णेति** ।

**कृष्ण कृष्ण महायोगिन्विश्वात्मन्विश्वभावन ।**
**प्रपन्नां पाहि गोविन्द शिशुभिश्चावसीदतीम्** ॥ ११ ॥

आदरे वीप्सा अकस्मादागते वा । नन्वहमन्यत्र, अत्र तव दृष्टिभ्रमो भविष्यतीत्याशङ्क्याह **महायोगिन्निति** । तथापि किमेवमेतावद्दूरं सर्वपरित्यागेनागमनेनेति चेत्त्राह **विश्वात्मन्निति** । सर्वस्य भगवानात्मा । आत्मना हि देहादेः प्रियं कर्तव्यं प्रयत्नस्य तदधीनत्वात्, अतः सर्वथा आगमनम्, तथाप्यक्रूरवदेवागन्तव्यं किमिति विशेषाकारेणागतमिति चेत्त्राह **विश्वभावनेति** । विश्वमेवानुभावयतीति । नह्यलौकिकाकरणे विश्वमनुभावितं भवति । अलौकिकबुद्धावेवालौकिकानुभावो भवति । एवं भगवन्तं संबोध्य समागमनं तत्प्रकारं चोक्त्वा प्रार्थयते **प्रपन्नां पाहीति** । साधारणा अपि प्रपन्ना रक्षणीयाः भगवतः सम्बन्धो नापेक्षितः । अतः प्रपत्तिरेव हेतुत्वेन निरूपिता । **अवसीदतीम**वसादं

---

श्रीपुरुषोत्तमकृतः प्रकाशः ।

१०-४६-१० **सपत्नेत्यत्र** । ननु तत्कृतस्वसान्त्वनेन किं भवेदित्याकाङ्क्षायामाहुः **कृष्णस्येत्यादि** ।

**कृष्ण कृष्णेत्यत्र** । शिशुभिः सहोक्तेस्तात्पर्यमाहुः लाक्षेत्यादि । **पश्यन्तीति** ।
१०-४६-११ भाविनं दाहं भावनाबलात्पश्यन्तीक्षणं प्रार्थयत इत्यर्थः ।

प्राप्नुवतीमिति । अप्रपन्नामपि परिपालने हेतुः, तत्रापि **शिशुभिः** सह, लाक्षागृहदाहं वा भगवन्तमिव पश्यन्ती ॥ ११ ॥

ननु पुत्रा अपि तव समर्थाः पितरो भ्रातरश्च । अतः किमिति विषादः क्रियत इत्याशङ्कयाह **नान्यत्तव पदाम्भोजा**दिति ।

**नान्यत्तव पदाम्भोजात्पश्यामि शरणं नृणाम् ।**
**बिभ्यतां मृत्युसंसारादीश्वरस्यापवर्गिकात् ॥ १२ ॥**

**मृत्युसंसाराद्बिभ्यतामन्यच्छरणमेव** नास्ति, मृत्योः संसाराच्च प्रतिजन्म मृत्योर्भयं संसारभयमेकमेव । मृत्यवश्च बहव इति मृत्युभयमेकमन्यस्मादपि निवर्तते सर्वमृत्युभयं तु संसारमेव भगवत एव निवर्तते । उभयं स्वतन्त्रभक्त्यैव निवर्तत इति पदाम्भोजपदम् । ननु भगवन्तं परित्यज्य चरणात् कथं निवृत्तिरुच्यत इति चेत्तत्राह **ईश्वरस्ये**ति । स हि चरणद्वारापि सर्वं कर्तुं समर्थः । **किञ्च** । ईश्वरत्वाद् दुराराध्यत्वान् निर्विचिकित्सं फलार्थिनः प्रवृत्तिरपि कुण्ठिता भवेत् । चरणौ तु नियतौ । अत एव नियतो भक्तिमार्गः फले फलावश्यंभावे च, ईश्वरभावस्त्वनियतः । ईश्वरत्वान्मृत्युनिराकरण**मापवर्गिका**दपवर्गाधिपतेः संसारनिवृत्तिरयं संसारस्त्वपवर्गपर्यन्तं भवतीत्यापवर्गिकः मृत्युरपि तथा ॥ १२ ॥

एतावत्प्रार्थनानन्तरमङ्गीकारेणैव तत्परितोषं कृत्वा तिरोधाने कृते तादृशाय पुनर्नमस्करोति ।

**नमः कृष्णाय शुद्धाय ब्रह्मणे परमात्मने ।**
**योगेश्वराय योगाय त्वामहं शरणं गता ॥ १३ ॥**

नमस्कारे सम्बन्धस्य विरुद्धत्वाद् यदैव चिकीर्षितस्तदैव तिरोहितः । **कृष्णाये**ति सदानन्दाय, अवतारपरत्वेपि धर्मा न बाधका इत्याह **शुद्धाये**ति । अवतारसंबन्धिधर्मैरस्पर्शात् । अनेन कालान्ताः सर्व एव धर्मा निवारिताः । नन्वागतस्य सर्वथेतरसम्बन्ध इति चेत्तत्राह **ब्रह्मण** इति । जीवानामेवागतानां बन्धो न ब्रह्मणः । ननु जीवोपि वस्तुतो ब्रह्म भवतीति को विशेष इति चेत्तत्राह **परमात्मन** इति । परमश्चासावात्मा चेति । उत्कृष्ट आत्मा आत्मनामप्यात्मा वा । ननु तर्हि कथं मूलसमागमनं हेत्वसंभवादंशत्वे परिच्छेदे हि समागमनं संभवति । तत्राह **योगेश्वराये**ति । योगो ह्यलौकिकं कर्तुं शक्तो यत्र बुद्धिर्न प्रसरति तस्यापीश्वरः कथं स्वागमनमपि न संपादयेत् । **किञ्च** । योगस्यापि सामर्थ्यं भगवत एवेत्याह **योगाये**ति । भगवानेव योगः । अतः सामर्थ्यस्य दृष्टत्वान्नानुपपन्नं किञ्चित् । अतो यथा आगतोपि तद् धर्मैर्न लिप्यते, सर्वत्र पूर्णोप्यागच्छति, एवमस्मानपि पालयिष्यतीति निश्चित्याह **त्वामहं शरणं गते**ति । शरणागमने परिपालनमावश्यकमिति ॥ १३ ॥

ततः किं जातमित्याकाङ्क्षायामाह **इत्यनुस्मृत्ये**ति ।

श्रीशुक उवाच—**इत्यनुस्मृत्य स्वजनं कृष्णं च जगदीश्वरम् ।**
**प्रारुदद्दुःखिता राजन्भवतां प्रपितामही ॥ १४ ॥**

**स्वजनं** पित्रादीन् **कृष्णं च** चकाराद्बलभद्रं भगवद्गुणांश्च, **जगदीश्वर**मिति सर्व एव पाल्या इति बहिर्मुखाः, तिरोधानात्पाक्षिकरक्षामाशङ्क्य प्रकर्षे**णारुदत्** । वंशं दूरीकरिष्यति । एकं परीक्षितं कथञ्चित्स्थापयिष्यति । इत्येवं भवद्वंशे स्त्रियोपि भक्ता इति ज्ञापयितुमाह । **भवतां प्रपितामही**ति । पितामही सुभद्रा । कुन्ती तु प्रपितामही ॥ १४ ॥

भगवतः सान्त्वनं तु पाक्षिकं मन्यत इति भगवदीयैः सान्त्वनं क्रियत इत्याह **समदुःखसुख** इति ।

**समदुःखसुखोक्रूरो विदुरश्च महायशाः ।**
**सान्त्वयामासतुः कुन्तीं तत्पुत्रोत्पत्तिहेतुभिः ॥ १५ ॥**

तत्रार्थे अक्रूरस्य सान्त्वनमनुचितं मत्वाह समे सुखदुःखे यस्येति । यद्यपि जाते अनिष्टे इष्टे वा सुखं दुःखं समानं तथाप्ययमक्रूरः प्रसिद्धः पुरुष इति सान्त्वनमुचितमेव । **विदुरो**पि तथा । यद्यपि तुल्यस्तथापि धर्मपक्ष इत्याह **महायशा** इति । तत एव हि धर्मो भवति, नान्यथा । **सान्त्वयामासतुः** न तु तद्दुःखं दृष्ट्वा स्वयं युद्धार्थं प्रवृत्ताः । यतः **कुन्ती** कुन्तिभोजाय दत्ता, तत्रापि स्वरक्षार्थं धर्मादयः प्रार्थिता इत्यक्रूरविदुराभ्यां युद्धे कृते तत्प्रयत्नो व्यर्थो भवतीति **तत्पुत्रोत्पत्तिहेतुभि**र्धर्मादिभिः कृत्वा सान्त्वनमेव कृतवन्तौ न तु युद्धार्थं प्रवृत्ता इति युक्तम् ॥ १५ ॥

तथाप्यक्रूरोऽसहमानो वाक्येन धिक्कारे कृते यद्ययं विमनो भविष्यति तदा मारयिष्यामीति निश्चित्य तद्गृहे स्थितस्तदधीनो भवतीति ततो निर्गच्छन् राजसंबोधनार्थं प्रवृत्त इत्याह **यास्यन्नि**ति ।

**यास्यन्राजानमभ्येत्य विषमं पुत्रलालसम् ।**
**अवदत्सुहृदां मध्ये बन्धुभिः सौहृदोदितम् ॥ १६ ॥**

**राजानं** धृतराष्ट्रं राजत्वादवश्यं वक्तव्यः, अन्यथा मर्यादातिक्रमो भवेत् । **अभित एत्ये**ति निःशङ्कम् । ननु राजा न वक्तव्यः सर्वप्राणिभिः यथा भगवान् , तत्कथमुक्तवानित्याशङ्क्याह **विषम**मिति । तत्र हेतुः **पुत्रलालस**मिति । पुत्रो हि स्वयं जीवन् पाण्डवान्न मन्यते । अधुना किं पाण्डवा हन्तव्याः पुत्रो वेति विचारे दुष्टो हन्तव्य इति धर्मशास्त्रात् पुत्रस्यैव मारणं प्राप्तं तन्न करोतीति विषमः, सहजो धर्मो विहितं धर्मं बाधते । एतच्च राजाधिकारे निविष्टस्य वैषम्यमनुचितमिति बोधनमुचितमिति भावः । तदपि नैकान्ते, तथा सति लज्जा न भवेदतः **सुहृदां मध्ये** । तस्मिन्विषमेप्यन्येषामाविषमत्वान् न वचनेपि किञ्चिदनिष्टम् । तत्रापि **बन्धुभिरुदितं** वसुदेवादिभिः । तत्रापि **सौहृदादेवोदितं** न तु विषमबुद्ध्या ॥ १६ ॥

---

श्रीपुरुषोत्तमकृतः प्रकाशः ।

१०-४६-१५ **समदुःखे**त्यत्र । **तत** इति । धर्मपक्षपातादित्यर्थः ।

वचनान्याह नवभिः **भो भो** इति ।

अक्रूर उवाच—**भो भो वैचित्रवीर्य त्वं कुरूणां कीर्तिवर्धन ।**
**भ्रातर्युपरते पाण्डावधुनासनमास्थितः ॥ १७ ॥**

सर्वैर्भावैः सर्वविधान्युक्तानि वचनानीति । आदौ रजःसत्त्वतमोभावेन लौकिकेन प्रबोधनं त्रिभिः । अन्धत्वान्न पश्यतीति वारद्वयं संबोधनम् । राष्ट्रं न बिभर्तीति न धृतराष्ट्रता । प्रज्ञाचक्षुरिति चेदुच्यते तर्हि मर्मभेदो भवेत् । तथा व्यासात्मज इत्यपि, स्त्रीपुत्रत्वादिसंबन्धो हीनत्वप्रतिपादकः । राजत्वं तु नास्तीति मन्यमानः कृत्रिमपितृनाम्ना संबोधयति **वैचित्र्यवीर्ये**ति । विचित्रवीर्यस्य क्षेत्रजः पुत्र इत्यर्थः । **त्व**मित्येकवचनेन स्वजन्मानुसन्धीयतामिति द्योतितम् । किञ्च कुरूणां वंशे त्वमुत्पन्नः तत्**कीर्तिवर्धन**मुचितम् । वर्धनशब्देन छेदनमप्युच्यते इति कीर्तिछेदकः **त्व**मित्यर्थादुक्तं भवति । राजाधिकारार्थं पुत्र उत्पादनीय इति विचार्य प्रथममुत्पादितः । ततश्चान्ध इति त्वं परित्यक्तः, ततः पाण्डुरुत्पादितः तस्मिन्नुपरते आगत्याधुना **आसनमास्थितः** सिंहासने उपविष्टः । अनेनायुक्तमेव करोषीति द्योतितम् ॥ १७ ॥

अङ्गीकृत्यापि सात्त्विकेन बोधनमाह **धर्मेणे**ति ।

**धर्मेण पालयन्नुर्वीं प्रजाः शीलेन रञ्जयन् ।**
**वर्तमानः समः स्वेषु श्रेयः कीर्तिमवाप्स्यसि ॥ १८ ॥**

धर्मेण पृथिवीपालनं कर्तव्यम् । तदा दृष्टादृष्टोपायेन पालिता भवति । भगवता हि नामरूपप्रपञ्चौ निर्मितौ अन्योन्यपरिपालनाय, तदेकेन रहितं व्यङ्गं भवति । अतो **धर्मेणैव** सह पालनं कर्तव्यम् । केवलकरणत्वे योगिनामिवास्यापि पालनं भवेत् । अनेन

श्रीपुरुषोत्तमकृतः प्रकाशः ।

**धर्मेणेत्यत्र** । ननु धर्मस्य पालने करणत्वमेवास्तु सहार्थे तृतीया किमिति व्याख्यायते तत्राहुः **केवलेत्यादि** । तच्चास्मिन् योगजधर्माभावादसम्भावितमिति सहार्थव्याख्यानमेवोचितमिति भावः ।

१०-४६-१८

श्रीविट्ठलेशात्मजश्रीवल्लभकृतलेखः ।

**धर्मेण पालयन्नुर्वीमित्यत्र । धर्मेणैव सहेति** । स्वधर्मः पालितो भवति प्रजाश्च पालिता भवन्तीति सहभावः । सहार्थकत्वेन व्याख्याने हेतुमाहुः **केवलेति** । सहभावं विना केवलं धर्मस्य करणत्वे, **अस्य** राज्ञः **पालनं योगिनामिव भवेत्** । यथा योगेन नानाविधभोगैर्योगिनः स्वशरीरं पालयन्ति । परन्तु तैर्भोगैर्योगः क्षीयते तथास्यापि धर्मः क्षीयेत । सहभावोप्युक्त इत्यर्थः । **अनेने**ति । धर्मपालनकथनेनेत्यर्थः ।

परलोके सुखमिहलोके तु राज्याद्वैषयिकं सुखं कीर्तिजन्यं तु ततोप्यधिकमिति तत्साधनं बोधयति **प्रजाः शीलेन रञ्जयन्निति** । शीलं सुस्वभावस्तेनैव प्रजा अनुरक्ता भवन्ति । अन्यथा तु युक्तं देयं प्रयच्छन्ति, बहिःकीर्तिसाधनमेतत् । अन्तःकीर्तिसाधनमाह **वर्तमानः समः स्वेष्विति** । सर्वेष्वेव बन्धुषु समो भवेत् । ततोन्तर्नापकीर्तिस्तज्ज्ञैश्च, तदा राजा **श्रेयः कीर्तिं** च प्राप्स्यसि ॥ १८ ॥

अनङ्गीकारे तामसं वचनमाह **अन्यथेति** ।

**अन्यथा त्वाचरँल्लोके गर्हितो यास्यसे तमः ।**
**तस्मात्समत्वे वर्तस्व पाण्डवेष्वात्मजेषु च ॥ १९ ॥**

उक्तप्रकारादन्यथा प्रकारेण भूपालनं प्रजाननुरागं विषमत्वं च कुर्वन् कीर्तिप्रतिनिधिं श्रेयःप्रतिनिधिं च प्राप्स्यसीत्याह । **गर्हितो** निन्दितः **तमो**न्धं**तमः** महद्दुःखं प्राप्स्यसीति, अतो बाधवशादपि समो भवेदित्याह **तस्मादिति** । **समत्वे** समत्वार्थं **वर्तस्व** यथैव त्वं समो भवसि तथोपायं कुर्वित्यर्थः । वैषम्यस्थानमुद्घाटयति । **पाण्डवेष्वात्मजेष्विति** । चकारात्तत्संबन्धिषु च ।

एवं लोकन्यायेन बोधयित्वा शास्त्रन्यायेनाह समाभ्यां त्रिभिस्त्रिभिस्तत्त्वं बोधयति **नेह चेति** ।

**नेह चात्यन्तसंवासः कर्हिचित्केनचित्सह ।**
**राजन्स्वेनापि देहेन किमु जायात्मजादिभिः ॥ २० ॥**

स्वार्थं हि सर्वेण कर्तव्यम् । तद्यथा स्वार्थः सिद्ध्यति । तत्र कालो बाधक इति हितमहितं बहिरङ्गस्थापनार्थं यत्नो न कर्तव्य इत्याह **इहा**स्मिंल्लोके अत्यन्तं सर्वदा केनापि **सह संवासः** कस्यचिदपि **न** । अलौकिकबोधने उग्रवचने बोधो न भवतीति कोमलवचनेन संबोधनं स्नेहज्ञापनार्थम्, ममतास्पदेन नास्त्येव संवास इहापि व्यभिचारदर्शनात्स्वदेहेन तु न व्यभिचारं पश्यतीति तत्राप्युपदिशति **स्वेनापि देहेनेति** । पुत्रादीनामपि देहः स्वस्यैवेत्यपिशब्दे निरूप्य तान्निर्दिशति । **किमु जायात्मजादिभिरिति** । आदिशब्देन भ्रातृपित्रादयः[1] ॥ २० ॥

---

श्रीपुरुषोत्तमकृतः प्रकाशः ।

**नेह चे**त्यस्या**भासे** । **समाभ्यां त्रिभि**रिति । त्रिभिः रजःसत्त्वतमोभावैः १०-४६-२० पूर्वेण समाभ्यां समुदायाभ्यामित्यर्थः ।

---

श्रीविट्ठलेशात्मजश्रीवल्लभकृतलेखः ।

**नेह चेत्यत्र** । **हितमहितमि**ति । देहादीनां हितं वस्तुतोऽहितमेवेत्यर्थः ।

---

१ पुत्रादय इति पाठः ।

तत्र देहादात्मनो भेदज्ञाने सत्येतद्भवतीति देहादात्मानं भिन्नतया निरूपयति **एकः प्रसूयत** इति ।

**एकः प्रसूयते जन्तुरेक एव प्रलीयते ।**
**एकोऽनुभुङ्क्ते सुकृतमेक एव च दुष्कृतम् ॥ २१ ॥**

'आत्मनः पितृपुत्राभ्यामनुमेयौ भवाप्यया'विति न्यायेनानुभवपर्यन्तं निरूपयति । **प्रसूयते** मात्रा । **प्रलीयते** भूमौ कालेन । एवमाद्यन्तयोरेकत्वमुक्त्वा उपलक्षणन्यायेन सर्वस्यैव क्रियामयस्यैककर्तृत्वं निरूप्य ज्ञानमात्मपर्यवसायीति कर्मणा भोगोप्येकस्यैवेत्याह **एकोनुभुङ्क्ते सुकृत**मिति । सुकृतं पुण्यं कर्म, तस्य फलं स्वर्गादि । कार्यकारणयोरभेदात्तथोच्यते । करणानन्तरमेव भोग इत्यनुशब्दार्थः । सुखभोगे बहूनामपि समवायोस्तीति हास्यक्रीडादौ तथा दर्शनात् । दुष्कृते एक एवेत्याह । चकारान्मिथः सङ्गेन कृतपापे मिथ एव भोग इति पक्षमङ्गीकरोति । **दुष्कृतं** पापं सुकृतवद्व्याख्येयम् ॥ २१ ॥

सुखार्थं सुखसाधनार्थं वा पापं न कर्तव्यमित्याह **अधर्मोपचित**मिति ।

**अधर्मोपचितं वित्तं हरन्त्यन्येऽल्पमेधसः ।**
**संभोजनीयापदेशैर्जलानीव जलौकसः ॥ २२ ॥**

**अधर्मेण उपचितं** पुष्टम्, अर्थस्योत्पत्तिर्धर्मेणैव उपचयस्त्वधर्मेणापि भवति । तथा सति प्रवृद्धो रोषः, **अन्य** एव अधर्मिष्ठा अधर्मप्रेरिता वा दैत्या हरन्ति, प्रतिरोधे सामर्थ्याभावमाह । **संभोजनीयापदेशै**रिति । संभोजनीयाः संबन्धिनः, अतिलुब्धोपि सम्बन्धरक्षार्थं तान् भोजयति । अनपेक्षितं बहुत्वान्नयन्तीत्याशङ्क्य तस्मिन् हृते जीवनमेव यातीत्यत्र दृष्टान्तमाह **जलानीव जलौकस** इति । जलौकसो मत्स्यादेः प्राणभूतमपि जलं कुल्याभिर्हरन्ति । ज्ञानं चेद् भवेत् तद्द्वारान्यत्र गच्छेदज्ञानमात्रे जीवनरूपोयमर्थ इति ज्ञापयितुं दृष्टान्तः ॥ २२ ॥

पश्चादुपकरिष्यन्तीत्याशङ्क्याह **पुष्णाती**ति ।

**पुष्णाति यानधर्मेण स्वबुद्ध्या तमपण्डितम् ।**
**तेऽकृतार्थं प्रहिण्वन्ति प्राणा रायः सुतादयः ॥ २३ ॥**

अन्यमप्युपक्रम्य पर्यवसानेन पुत्रपरं निरूपयति **स्वबुद्ध्या** स्वीया इति बुद्धिमात्रं वस्तुतः शत्रव एव । अन्यथा उपकारमेव कुर्युः । ते न बलात्कारेण तथा कुर्वन्तीति ज्ञापयितुम**पण्डित**मित्युक्तम् । ननु लौकिकं वैदिकं नित्यं कर्म कर्तव्यमिति तदर्थं ते भोजिता इति चेत्तत्राह **अकृतार्थ**मिति । 'संभोजनी नाम पिशाचभिक्षे'ति वाक्यान्न तेषां दानं परलोकाय, इह लोके भवत्युपकारः यदि ते उपकारं मन्येरन् , तदपि नास्तीत्यकृतार्थतैव । **किञ्च** । अवसरे प्राप्ते प्रकर्षेण **हिन्वन्ति** सङ्कटस्थाने स चार्थस्तं त्यजन्तीत्यर्थः । तान्

बाह्याभ्यन्तरांस्तुल्यतया निर्दिशति **प्राणा रायः सुतादय** इति। आन्तराः बाह्याः मध्ये उभयोपयोगिनश्च, आदिशब्देन सर्व एव बाह्या गृहीताः, प्राणा इन्द्रियाणि आसन्यव्यतिरिक्ताः प्राणाः, आसन्यो हि सर्वान्पोषयति न तु तं कश्चन। ननु 'अनुप्राणन्ति यं प्राणाः' 'अण्डेषु पेशिष्वि'त्यादिवाक्यैः प्राणानामिन्द्रियाणां चामुक्तेर्वियोगो न श्रूयते। मुक्तौ तु कृतार्थतैवेत्यकृतार्थवचनं बाधितमिति चेत्, सत्यम्। चर्षणीनां जीवानां सहगमनं, न स्थिरजीवानां, अन्यथा पुरञ्जनोपाख्याने प्राणादिसहिते देहे जीवप्रवेशवचनं बाधितं स्यात्। यथा प्रवेशस्तथा निर्गम इति, प्रथमप्रवेशोयमिति चेत्, नैवम्। 'वीरसूरपि नेष्यती'ति वाक्यात्, अस्तु वा, तथा सति प्राणभूता राय इति व्याख्येयम्। 'अर्था बहिश्चराः प्राणा' इति, अनेन सिद्धान्तद्वयं निरूपितम्। उत्क्रमणे सहैव गमनमत्रैव परित्याग इति च, यतः श्रुतौ द्वयमप्युक्तम्। 'तमुत्क्रामन्तं प्राणोनूत्क्रामति' प्राणा उत्क्रामन्त्युताहो नेति प्रश्ने नेत्याह याज्ञवल्क्यः। 'इहैव समवनीयन्ते प्राणा' इति 'यतो मृतो ध्मातः शेत' इति, 'ब्रह्मैव सन् ब्रह्माप्येति' तु प्रक्रियान्तरम्। अतः क्रममुक्तौ ऊर्ध्वगमने च संघः सर्वोपि गच्छति। जायस्व म्रियस्वेति पक्षे सद्योमुक्तौ च न गच्छतीति सिद्धान्त इति सर्वमविरुद्धम् ॥ २३ ॥

---

श्रीपुरुषोत्तमकृतः प्रकाशः।

**पुष्णातीत्यत्र**। **सहगमनमिति**। प्राणैः सहेत्यर्थः। **पुरञ्जनोपाख्यान** इत्यादि। तत्र 'पञ्चशीर्षाहिना गुप्तां' 'भृत्यैर्दशभिरायान्ती' मित्यादिभिः।
१०-४६-२३
प्राणसत्ताया जीवप्रवेशात्पूर्वमेव कथनात्तथेत्यर्थः। ननु तत्रैकाकिनः प्रवेशकथनान्नेदं तथा निर्गमे प्रमाणमित्याशङ्क्यातिदिशन्ति **यथेति**। तथा न्यायस्यासाम्याददोष इत्यर्थः। नन्वयमतिदेशो न युज्यते। प्रथमप्रवेशे एकाकित्वस्य सर्वसम्मतत्वेपि निर्गम एकाकित्वाभावादित्याशयेनाशङ्कते। **प्रथमेत्यादि**। समादधते। **नैवमित्यादि**। 'लोकान्तरं गतवति मय्यनाथा कुटुम्बिनी'ति जीवोत्क्रमणोत्तरं बुद्धेः स्थितिस्तत्रोपक्रान्ता तेन तत्रापि सर्वेषां सहगमनस्य वक्तुमशक्यत्वादिति भावः। ननूक्तवाक्येपि सम्भावनैवोक्तेति नेदं युक्तमिति शङ्कायां पक्षान्तरमाहुः **अस्तु वेत्यादि**। एवमतः सन्देहानिवृत्तौ श्रुतिभ्यां निष्कृष्टमाहुः **प्राणा** इत्यादि। ननु प्राणपरित्यागो मोक्ष एवोक्तो नत्वकृतार्थस्येत्यत आहुः **ब्रह्मैवेत्यादि**। आर्तभागब्राह्मणे मुक्तेरनुक्रमाच्छारीरकब्राह्मणे मुक्तेरुक्तत्वाच्च। प्रकरण-

---

श्रीविट्ठलेशात्मजश्रीवल्लभकृतलेखः।

**पुष्णातीत्यत्र**। **चर्षणीनामिति**। भ्रमणशीलानां लोकान्तरगन्तॄणां क्रममुक्तियोग्यानां चेत्यर्थः। **स्थिरेति**। जायस्व म्रियस्वेति पक्षेणात्रैव लोके स्थिराणां सद्योमुक्तियोग्यानां चेत्यर्थः।

अयुक्तत्वाद् गच्छतीति युक्त एवास्य परित्यागः । यथा यो वधार्थं नीयते स केवलो नीयते यो विवाहार्थं नीयते ससामग्रीक इति तदाह **स्वयं किल्बिषमादायेति** ।

**स्वयं किल्बिषमादाय तैस्त्यक्तो नार्थकोविदः ।**
**असिद्धार्थो विशत्यन्धं स्वधर्मविमुखस्तमः ॥ २४ ॥**

तदुपार्जनपोषणाभ्यामुपार्जितं पापं गृहीत्वा तैः प्राणादिभिस्त्यक्तः अन्धंतमो विशति । ऊर्ध्वगतौ तु न त्यजन्तीति ज्ञापयितुं **नार्थकोविद** इत्युक्तम् । अन्यथा योगशास्त्रं व्यर्थं स्यात् । 'पूर्वाभ्यासेन तेनैव ह्रियते ह्यवशोपि स' इत्यादिवाक्यात् । अतस्तादृशेन्द्रियाणां हिताचरणं युक्तम् । यदप्युक्तम् 'नो चेत्प्रमत्तमसदिन्द्रियवाजिसूता' इति तद्विषयैः संसारमात्रे प्रवेशनमुक्तम् । न तु हीनगतिः । अत इन्द्रियाणां स्वभावभेदस्य दृष्टत्वात् 'निकृष्टैः कर्मभिर्नित्यं जन्तुः स्थावरतां याती'त्यादिवाक्यादपुनरावृत्त्यधोगमनमार्गे परित्याग एव, मुक्तिव्यावृत्त्यर्थं**मसिद्धार्थ** इति, भगवदिच्छया सद्योमुक्तौ निरुद्धगोपिकावत्सहगमनं नास्तीत्यर्थकोविदत्वाभावेऽपि परित्यागो वर्तत इति व्यावर्तकं पदद्वयमपि मृग्यम् । **अन्धंतमो** हि अपुनरावृत्तितमः 'अन्धंतमः प्रविशन्ती'तिश्रुतिरपि, केवलेन्द्रियपोषका एव संभूतिमुपासत इति श्रुतिराह 'अविद्यामुपासत' इति च । ज्ञानरहितं प्रमाणबहिर्भूतं यत्कर्म लौकिकं निषिद्धं च तेन तम एव । ज्ञानसहितं तु कर्म वैदिकम् । 'य एवास्मि

---

श्रीपुरुषोत्तमकृतः प्रकाशः ।

भेदेनान्यत्रापि प्राणपरित्यागोक्तिर्न विरुद्धेत्यर्थः । तेन सिद्धमाहुः **अत** इत्यादि । इममर्थं लोकन्यायेन दृढं कुर्वन्ति **अयुक्तत्वादि**ति । अयुक्तत्वं सम्पाद्येत्यर्थः ।

**स्वयं किल्बिषेत्यत्र । तादृशेन्द्रियाणा**मिति । युक्तानामन्तर्मुखेन्द्रियाणां न तु संसारावेशदुष्टानामित्यर्थः । ननु प्रसिद्धार्थपदेनैव व्यावृत्तिसिद्धेर्नार्थकोविदपदं नातिप्रयोजनमित्यत आहुः **भगवदिच्छये**त्यादि ।
१०-४६-२४
**गोपिकाव**दिति वैधर्म्ये दृष्टान्तः । तद्विरुद्धो, सिद्धार्थ इत्यर्थः । तथा च नार्थकोविदः परित्यक्तोन्धं व्रजतीत्युक्तेऽन्तर्गृहगतगोपिकादौ व्यभिचारस्तदर्थमसिद्धार्थ इति । असिद्धार्थः परित्यक्तोऽन्धं व्रजतीत्युक्ते ऊर्ध्वं गन्तरि परित्यागाभावाद्व्यभिचार इति पदद्वयमावश्यकमेवेत्यर्थः । एवमिन्द्रियपोषकस्यान्धंतमप्रवेशो न श्रुतिसिद्ध इति तं स्फुटीकुर्वन्ति **अन्धं तम** इत्यादि । सम्भूयते उत्पद्यतेऽनेनेति सम्यक् भूतिर्भवनमस्मादिति वा सम्भूतिः इन्द्रियगणः तामुपासते पुष्णन्तीत्यर्थः । नन्विदं फलं धर्मकरणेपि तुल्यम् । 'अविद्यामुपासत' श्रुत्यन्तरे अविद्याशब्देन कर्मणामेव परामर्शात् । अतो वृथैवोपदेश इत्यत आहुः **अविद्ये**त्यादि । वैदिकस्यातथात्वे गमकमाहुः **य एवे**त्यादि । श्रुतिस्तु यजुर्ब्राह्मणे तृतीयकाण्डे

स सन् यज' इत्यादिश्रुतेः तस्य मोक्षफलत्वम्, एतज्ज्ञापयितुमाह **स्वधर्मविमुख** इति । तस्मात् स्वधर्मानुसारेण भोगः कर्तव्यः ॥ २४ ॥

धर्मो ज्ञानसहित इति धर्मसहितश्च भोग इति बुद्धिमांस्तादृशमेव कुर्यादित्याह **तस्माल्लोकमिम**मिति ।

**तस्माल्लोकमिमं राजन्स्वप्नमायामनोरथम् ।**
**वीक्ष्यायम्यात्मनात्मानं समः शान्तो भव प्रभो ॥ २५ ॥**

लोकानुसारेण पुत्रानुसरणं कर्तव्यमिति लोको निन्द्यते स्वप्नमायामनोरथत्वेन, **स्वप्न**स्तामसः **माया** राजसी, **मनोरथः** सात्त्विकस्तथोत्कर्षापकर्षोपपन्नमपि जगन् न चिरकालावस्थायीति तदनुरोधेन तु न पुरुषार्थो नाशनीयः, उत्पत्तौ सिद्धायां मरणेऽपि सिद्धे पूर्वं पश्चाच्च नानेन संघातेन सह स्थितः स्थास्यतीति सिद्धत्वात् स्वप्नादितुल्यत्वं युक्तमेव । अनेनोत्कृष्टमिदं राजशरीरमित्यपि परिहृतम् । एवं **वीक्ष्य** पूर्वोक्तप्रकारेणात्मनैवात्मानं संघातव्यतिरिक्तं ज्ञात्वा देहसंबन्धिष्वप्युदासीनो भवेत्याह **सम** इति । नन्वेवं पर्यालोचना कथं भविष्यतीत्याशङ्कायामाह **शान्तो भवे**ति । नन्वेवमुपाये कथं न सर्वे भवन्तीत्याशङ्क्याह **प्रभो** इति । त्वं समर्थो विवेकी न त्वन्ये अविवेकिनः ॥ २५ ॥

एवमुपदिष्टे ज्ञाने सन्तुष्टः सन् धृतराष्ट्र उत्तरमाह **यथा वद**तीत्यादिचतुर्भिः ।

धृतराष्ट्र उवाच—**यथा वदति कल्याणीं वाचं दानपते भवान् ।**
**तथानया न तृप्यामि मर्त्यः प्राप्य यथामृतम् ॥ २६ ॥**

एवं व्यासेनाप्येतादृशमुक्तं भीष्मेणान्यैश्च तत उपदिष्टं ज्ञानं क्षणमात्रमेव तिष्ठति पश्चादन्यथैव प्रवर्तते । पुनरुपदिष्टे पश्चात्तापसहितं ज्ञानं भवति । तदपि न तिष्ठतीति पुनरन्यथैव प्रवर्तते । एवमनेकपर्यायेऽस्मन्मनसोयमेव स्वभाव इति निश्चित्य पश्चात्तापो निवृत्तस्ततः प्रभृति ज्ञानमपि मन्यते वैषम्यमपि करोतीमं सिद्धान्तमतो न जानातीति तं प्रति बोधयतीति, तदास्यानिष्टं भवेद् यदि पुत्रनाशं नाङ्गीकुर्यात्तदा स्वस्य दोषो भवेत्, परं स्वयं कर्तुं न शक्तो नाप्यन्यः किन्त्वीश्वर एवेति तस्याभिप्रेतम् । अनेनास्य युद्धोद्यमोपि निवारितः । हे **दानपते** दानाध्यक्ष । धर्मशास्त्रे स्वयमेव निपुण इति, अनेन त्वं धर्ममेव जानासि । न तु कालम्, स्वभावमीश्वरेच्छां वा, परं यद्वदसि **तत्कल्याणी**मेव **वाचं** वदसि । सत्या मनोहरा च । 'सत्यं ब्रूयात् प्रियं ब्रूया'दिति स्मृतेः । यतस्त्वं दान-

---

श्रीपुरुषोत्तमकृतः प्रकाशः ।

सप्तप्रपाठकपञ्चमानुवाकेऽछिद्रेऽस्ति । तत्र योहमस्मि यस्यास्मीत्यादिसामुद्रतरङ्गन्यायेन भेदाभेदौ सर्वात्मभावश्चोक्त इति, **मोक्षफलत्वं,** भाष्ये च सायणीये यद्वाख्यातं तत्तु लोकानुसारित्वाद्धूममार्गगामिनिकृष्टाधिकारिपरमिति न क्वापि शङ्कालेशः ।

पतिरिति । अद्यापि तव वचनश्रवणे श्रद्धा वर्तत इत्याह **तथानयेति** । तथाभूतयानया वाण्या **न तृप्यामि** । अलमिति न मन्ये । स्वस्य तद्वाक्यमपेक्षितमिति ज्ञापयितुं दृष्टान्तमाह **मर्त्यः** मरणधर्मा **यथामृतं प्राप्य** न तृप्यतीति ॥ २६ ॥

यथा गङ्गायां सज्वरोपि श्रद्धावान् गङ्गास्नानेन न तृप्यते परं तस्य शरीरं न सहते तथा मम मन इत्याह **तथापीति** ।

**तथापि सूनृता सौम्य हृदि न स्थीयते चले।**
**पुत्रानुरागविषमे विद्युत्सौदामिनी यथा ॥ २७॥**

**सूनृता** सत्यरूपा सतां मनसि यद्यपि तिष्ठति मनसो हि भार्या सा । तथापि चञ्चले मनसि वेश्यारते भर्तरीव **हृदि** चञ्चले सति **न स्थीयते** । चाञ्चल्यमात्रे तदनुगुणकार्याकर्तरि तिष्ठेतापि तदपि नास्तीत्याह **पुत्रानुरागविषम** इति । पुत्रानुरागेण विषमं जातं यथा जलप्रवाहेण भूमिर्निम्नोन्नता भवति । यथा मालाकारा विद्युत् क्षणमपि न तिष्ठति दण्डाकारा तु क्षणं दृश्यतेपि । अत उक्तं **विद्युत्सौदामिनी यथेति** । सौदामिनी विद्युदिति प्रत्येकसमुदायाभ्यां वा विद्युद्वाचकम् ॥ २७ ॥

तर्हि यत्नः कथं क्रियते चित्तवृत्तिनिरोधस्य योगस्य विद्यमानत्वादिति चेत्तत्राह **ईश्वरस्येति** ।

**ईश्वरस्य विधिं को नु विधुनोत्यन्यथा पुमान्।**
**भूमेर्भारावताराय योऽवतीर्णो यदोः कुले ॥ २८ ॥**

ईश्वरेण कश्चन प्रकारो विहितः । एवं प्रकारेणैवैतत् कर्तव्यमिति । तत्कोन्यथाकर्तुं शक्तः । एतद्विज्ञानमावापोद्वापाभ्यां परिश्रमेण भवति, तस्मिन् कृते ज्ञायत इति न काप्यनुपपत्तिः । एवं ज्ञात्वा को वा **पुमान्** विवेकी समर्थोपीश्वरविचारितं प्रकारं विशेषेण **धुनोत्यपि** दूरीकरोति । कम्पितं वा करोति । नन्वीश्वर उदासीनो, 'नादत्ते कस्यचित्पापं न चैव सुकृतं विभु'रिति वाक्यात् । अज्ञानेनैव तथाचित्तं जायते । नत्वीश्वरस्तथा करोतीति चेत्तत्राह **भूमेर्भारावतारायेति** । भगवान् भूभारहरणार्थमवतीर्णः अन्यथाऽवतारमेव न कुर्यादतो ज्ञायते भगवता अन्यः प्रकारो विचारित इति । नन्वेतदपि नाङ्गीकर्तव्यं वाक्यविरोधात् । अतोवतारस्य प्रयोजनान्तरमनवतरणं वा कल्पनीयमिति चेन्न ।

---

श्रीपुरुषोत्तमकृतः प्रकाशः ।

**ईश्वरस्येत्यत्र** । **तथाचित्तमिति** । पुत्रानुरागविषमं चित्तमित्यर्थः । **अन्यथेति** । यदि प्रकारान्तरं न विचारयेदित्यर्थः । **एतदिति** । भूभारहरणार्थत्वम् । **वाक्यविरोधादिति** । 'यदा यदा ही'त्यादिवाक्यविरोधात् ।

१०-४६-२८

तथा सति शास्त्रवैफल्यात्, सर्वमुक्तिर्वा प्रसज्येत । अतोधिकारपरं शास्त्रमित्यपि पक्षे यथा सर्वगुणसंपत्तिर्मयि तथा न कस्यापीति सर्वेषामनाश्वास एव स्यात् । अतो व्यभिचारादीश्वरेच्छा स्वतन्त्रेति वक्तव्यम् । एवमपि शास्त्रवैफल्यमिति चेत् । सत्यम् । न सर्वत्र शास्त्रं प्रमाणम् । किन्तु क्वचिदेव यत्रेश्वरेच्छा, यथोक्तसाधनेऽप्यजननात् । अतः सर्वत्र शास्त्रमेव प्रमाणं यदि शास्त्रानुसारेणापि कदाचिन्न भवति तदेश्वरविधिरिति कल्प्यते । यथा मण्यादिप्रतिबन्धे दाहाभावाच्छक्तिः परिकल्प्यते सा अग्नौ मणौ वेत्यत्र वयमुदासीनाः । तथा तादृशस्थले ईश्वरेच्छा नियामिकेति ज्ञातव्यम् । ईश्वरत्वादेव न पर्यनुयोगः, लोके च महाराजाज्ञादिषु सामान्यविशेषभावः श्रूयते सर्वतो निरुपद्रुतेऽपि देशे कस्यचिदुपद्रवो महाराजेच्छया भवतीति, न चैतावता सामान्याज्ञया निष्कण्टकं राज्यं विरुध्यते । अतो निमित्तभूतानस्मदादीन्न मर्यादायां स्थापयतीति युक्तमेव ज्ञातेऽपि शास्त्रे वैषम्यम् । अन्यथा भगवान् यदोः कुलेऽवतीर्णो न भवेत् ॥ २८ ॥

एवं भगवन्माहात्म्यं स्मृत्वा भगवन्तं नमस्यति **यो दुर्विमर्शेति** ।

**यो दुर्विमर्शपथया निजमाययेदं**
**सृष्ट्वा गुणान्विभजते तदनुप्रविष्टः ।**
**तस्मै नमो दुरवबोधविहारतन्त्र-**
**संसारचक्रगतये परमेश्वराय** ॥ २९ ॥

पूर्णो भगवान् कथमवतीर्णः किमर्थं वा अवतीर्ण इति सन्देहं वारयन् नमस्यति । दुःखेनापि विमर्शो विचारो न यस्येति । एतादृशः पन्था यस्य । मन्त्रादि वान्यसामर्थ्यपक्षं व्यावर्तयति । **निजेति** । भगवद्धर्माणामपि जिज्ञासा अशक्या । यथा मायाया मार्गस्यापि, तत्र भगवतो विमर्शं को वा करिष्यति । 'अलौकिकास्तु ये भावा न तांस्तर्केण योजयेत्' इति निषेधश्च । एतादृश्या मायया लोके कपटत्वेन प्रसिद्धयापीदं प्रसिद्धं जगत् सृष्ट्वा तत्र स्वयं सत्यस्वरूपः प्रविष्टः । गुणान् सत्त्वादीन् उच्चनीचभावेन भजते पृथक्करोति । यस्या मार्ग एव न ज्ञायते तया किं कश्चित् कर्तुं समर्थः, मायासृष्टं वा कश्चित्प्रवेष्टुं प्रविश्य वा तुल्ये उच्चनीचतां संपादयितुम् । अतो महानुभावो भगवानिति **तस्मै नमः** । **किञ्च** । श्रुतौ काण्डद्वये पञ्चरात्रे इतिहासपुराणेषु च सहस्रधा सृष्टिर्निरूपिता । अतो केन साधनेन कथमेवं

---

श्रीपुरुषोत्तमकृतः प्रकाशः ।

**तथा सतीति** । अवतारेणैव धर्मासम्भवे सति । मोक्षैकप्रयोजनत्वपक्षेपि दूषणमाहुः **सर्वे**-त्यादि । **अविश्वास** इति । शास्त्र इति शेषः । अवतारेणान्यथाबुद्धावपि शास्त्रप्रामाण्यविघाताभावं दृष्टान्तेन साधयन्ति **लोके चे**त्यादि । **निमित्तभूतानिति**, भारहरणनिमित्तभूतान् ।

करोतीति **दुरवबोधो विहारतन्त्रः** क्रीडापरिकरो यस्य संसारस्य, तस्य चक्रं तस्यापि गतिर्यस्मात् तत्र वा गतिर्यस्येति । भगवतः संसारः अहन्ताममतात्मकः न लौकिकवत् । इच्छया सर्वं जायत इत्यतो लीलार्थमित्यध्यवसीयते । भगवतोवताराः भगवच्छास्त्रं भगवदीयाः पुरुषाः पदार्थाश्च तेषां साधारणोपयोगाभावात् किमर्थं करणमिति नाशङ्कनीयम् । दुरवबोधत्वादेव, अतो भगवतः कार्यं जगद् भगवल्लीला वैष्णवप्रकारश्चेति । उभयोर्दुर्ज्ञेयत्वात् परम एवेश्वरो भगवानीश्वरादेवालौकिकात् परमेश्वर उभयालौकिक इति ॥ २९ ॥

अनेन भगवतः संसारोयं भगवदादयोस्मदादयश्च तदिच्छयैव प्रवर्तितुं योग्याः, न तु स्वेच्छयेति । उपदेशो वा ज्ञानं वा न विचारणीयामिति तूष्णीं सर्वैः स्थातव्यमित्याभिप्रायं बुध्वा ततो निर्गत इत्याह **इत्यभिप्रेत्य नृपतेरभिप्रायमिति** ।

श्रीशुक उवाच—**इत्यभिप्रेत्य नृपतेरभिप्रायं स यादवः ।**

**सुहृद्भिः समनुज्ञातः पुनर्यदुपुरीमगात् ॥ ३० ॥**

तस्य तद्वाक्यानङ्गीकारे हेतुद्वयमाह **नृपतेरिति** । **स यादव** इति । राजवाक्यमङ्गीकर्तव्यम् । यदुवंशे भगवदवताराद् यादवैश्च सुतरां तदङ्गीकर्तव्यम् । तदुत्कर्ष एवोक्त इति, ततोत्रापि लौकिकन्यायेन **सुहृद्भिः** भीष्मादिभिः **सम्यगनुज्ञातो यदुपुरीं** मथुरा**मगात्** ॥ ३० ॥

**शशंस रामकृष्णाभ्यां धृतराष्ट्रविचेष्टितम् ।**

**पाण्डवान्प्रति कौरव्य यदर्थं प्रेषितः स्वयम् ॥ ३१ ॥**

स्वयं केवलमाज्ञाकारी न स्वतन्त्र इति ज्ञापयितुं रामकृष्णयोः स्थाने **शशंस** । धृतराष्ट्रस्य **विशेषेण चेष्टितं पाण्डवान् प्रति** मारणपर्यन्तमुद्योगम् । ननु सतामेतदयुक्तमिति चेत्तत्राह **यदर्थं स्वयं प्रेषित** इति । अधिकारिणो नायं दोषः, **कौरव्येति** विश्वासार्थम्, **स्वयं प्रेषित** इत्यन्यद्वारापि कथनं व्यावर्तितम् । अन्येन पूर्वार्धान्तप्रकरणेनाग्रे

---

श्रीपुरुषोत्तमकृतः प्रकाशः ।

**इत्यभीत्यस्याभासे । उभयोरिति** । मम तव चेत्यर्थः । **उभयालौकिक** १०-४६-३० इति । मायासंसारालौकिक इत्यर्थः ।

॥ इति श्रीपुरुषोत्तमजीकृतषट्चत्वारिंशाध्यायविवृतिप्रकाशः ॥

---

श्रीविट्ठलेशात्मजश्रीवल्लभकृतलेखः ।

**यो दुर्विमर्षेत्यत्र । उभयोरिति** । कार्यकारणयोरित्यर्थः ।

**इति श्रीमद्दशमस्कन्धीयपूर्वार्धविवरणटिप्पणी सम्पूर्णा ॥**

भगवतैव कर्तव्यमिति ज्ञापितम् । एतावत्पर्यन्तं न साक्षाद्भगवता किञ्चित्कृतं किन्त्वन्यानुरोधेनैवेति । अतो भगवतो लीलाद्वयमन्यानुरोधेन करणं स्वतःकरणमिति भगवतो भक्तानुरोधो निरूपितः ॥ ३१ ॥

इत्येवं भगवल्लीला भक्तविश्वासदायिनी ।
निरूपितातियत्नेन कृष्णपादाम्बुजाश्रया ॥ १ ॥

सर्वेषु पुष्टहृदयेषु निवेदयामि मार्गो यदा भगवतो भवतामभीष्टः ।
भक्तिप्रकारसहितो हरिभावयुक्तो ज्ञेयस्तदा विवृतिरेव सदा विचिन्त्या ॥२॥

दशमस्कन्धविवृतिः पूर्वार्धे सुनिरूपिता ।
कृष्णपादाम्बुजे न्यस्तः श्रीपुष्पाञ्जलिरुज्ज्वलः ॥ ३ ॥

इति श्रीभागवतसुबोधिन्यां श्रीलक्ष्मणभट्टात्मजश्रीवल्लभदीक्षितविरचितायां दशमस्कन्धपूर्वार्धे षट्चत्वारिंशाध्यायविवरणम् ॥ ४६ ॥



श्रीगोपीजनवल्लभाय नमः ।

# भ्रमरगीताध्यायटिप्पणी ।

**श्रीमद्विट्ठलेश्वरप्रकटिता ।**

**श्रीकृष्णः शरणं मम ।**

विविधापराधकूटक्षमाक्षमांस्तातचरणयुगरेणून् ।
नत्वा तत्तात्पर्यं प्रकटीकुर्मो यथाशक्ति ॥ १ ॥
तत्पादरजसागत्य यादृग्भावः कृतो मम ।
तादृशेनैव तद्भावं वर्णयाम्यवशः क्वचित् ॥ २ ॥

ननु व्रजसीमन्तिनीनां 'ता मन्मनस्का' इत्यादिवाक्यैः प्रभुणा स्तुतानां ज्ञानोपदेशो निरोधविरोधी, तयोः सहानवस्थाननियमात् । एवं सत्यस्याध्यायस्यैतत्स्कन्धा-
१०-४४-०
प्रवेशश्च स्यात् । 'तस्मान्मद्भक्तियुक्तस्य योगिनो वै मदात्मनः । न ज्ञानं न च वैराग्यं प्रायः श्रेयो भवेदिहे'ति भगवद्वाक्यादत्युच्चावस्थां प्रापितानां नीचावस्थाप्रापणमयुक्तं चेत्याशङ्कानिरासमध्यायार्थोक्त्यैव कुर्वन्ति **चतुश्चत्वारिंशेऽध्याय** इति । अस्मिन्नध्याये **निरोधमे**वाहेति संबन्धः । उद्देश्यत्वेन ज्ञानोक्तिव्यवच्छेदायैवकारः । 'तं वीक्ष्ये' त्युपक्रमेण 'भक्त्युद्रेकं व्रजौकसा' मित्युपसंहारेण च स्नेहस्यैवोक्तिः सम्यक्त्वम् । पूर्वमहर्निशं पूर्णो भगवद्भावो निरूपितः । अधुना तु यथा प्रियेण समं स्वसंबन्धव्यवच्छेदकोपस्थितावात्य-तिशयोऽनिर्वचनीयो भवति लौकिकानामपि, तथा तादृग्ज्ञानोपदेशश्रवणेनातितप्ततैलपतित-जलबिन्दुसदृशेनात्युत्कटभावो वर्ण्यत इति पूर्वस्माद्विशेषः । ननूपदेशस्य न भावजनक-त्वम्, किन्तु स्थितस्यैव प्राकट्ये हेतुत्वम् । एवं सत्येतदुक्तिर्व्यर्थेत्यत आहुः **याते कृष्ण** इति । अन्यथेति शेषः । हृदि सर्वदा प्राकट्यान्नैकट्याभावो बाधित इत्यत उक्तं **लोकरीत्ये**ति । देहलीदीपवल्लोकरीत्येत्युभयत्र संबध्यते । तथा सति लोकरीत्यैव याते, वस्तुतस्तु व्रज एव सदा प्रकट इत्यर्थः । लोकवन्नैकट्याभावः पूर्वमपीति स्फुट-मित्युक्तम् । यद्येतत्कथनं न स्यात्तदा बहिः प्राकट्याभावेपि कालक्षेपदर्शनात् सर्वेषां भक्तानां तथा मतिः स्यात्, तदभावार्थमेतत्कथनमावश्यकमित्यर्थः । ननु ज्ञानोपदेश-श्रवणेनापि सा मतिर्भविष्यत्येवेत्यत आहुः **सेवकेने**ति । **ता** उक्तप्रकारैर्निरुद्धा एव । तत्र हेतवः **सेवकेने**त्यादिनोच्यन्ते । यदि ज्ञानमार्गे प्रवेशयेत्, ज्ञानमार्गीयेणैवोपदेशं कारयेत् । सेवकेन कृत्वोपदेशं यत्कारितवांस्तेन भक्तिमार्ग एव प्रवेशोभिमतो, नेतरस्मि-न्नित्यर्थः । किञ्च । एताः पूर्वं प्रयोजनवशान्न निरुद्धाः । तथासति प्रयोजने जाते निरोधो

गच्छेत् । किन्तु 'शुद्धभावप्रसादितः प्रीतः प्रोवाच सस्मितम्'। 'माऽसूयितुं नार्हथ तत्प्रियं प्रियाः'। 'न पारयेह' मित्यादिवाक्यैः भगवतो व्रजसीमन्तिनीविषयिणी या प्रीतिस्तयैव ता निरुद्धाः, अतः कथमन्यथा कुर्यात् । अतो **ज्ञानेन** उपदेशजनितज्ञानेनापीत्यर्थः । तत्र प्रकारमाहुः **आत्मत्वेने**ति । नहि स्वात्मनः स्वेन समं वियोगः स्वविस्मृतिः स्वाहिताचरणं वा संभवत्यतस्तथाभूतासु किं समाधेयमस्तीति स्वस्मिन्नसाधारणनिरुपधिस्नेहं प्रियस्य ज्ञातवत्य इति पूर्वस्मादतिविलक्षणः स्नेहभाव उत्पन्नः । अत एव मूले प्रियतमपदमुक्त**मेवं प्रियतमादिष्ट**मिति । अथवा । **सेवकेने**त्यादिना भगवतः कायवाङ्मनोभिरेतन्निरोध उच्यते । सेवकः कायरूपः, उपदेशो वाग्रूपः, प्रीतिर्मानसी । अत उपदेशजेनात्मत्वेन ज्ञानेनापि प्रियस्वरूपपरत्वमेवासाम्, न तु ज्ञानिनामिव स्वास्थ्यम्, अन्यथा 'कृष्णावेशात्मविक्लव'मिति न वदेत् । तथा चैतावत्पर्यन्तं स्वसत्ताज्ञानमपि स्थितम् । अतः परं तु तामपि न ज्ञास्यन्तीति पूर्वस्मादधिको निरोधः सेत्स्यतीत्यर्थः । अत एव **सर्वथे**तिपदम् । एवं भक्तिमार्गविरोधं परिहृत्य ज्ञानोपदेशस्यावश्यकतामाहुः **वस्तुन** इति । 'विज्ञाय संदेशहर'मितिवाक्यात् स्वार्थमेवागत इति निश्चयेन मानोत्पत्तिरिति निश्चयस्यापि दोषत्वम् । भगवदीयत्वानिश्चयाभाव उपालम्भासंभवादिति भावः ।

**चतुश्चत्वारिंशाध्यायविवरणे** स्वामिनीभावेषु दोषशब्दप्रयोगस्यायमाशयः । लोके ह्यन्त्यावस्थाहेतुर्दोषो भवति, विरहभावस्य च तथात्वं प्रसिद्धमेव । यथातिप्रचुरे दोषे तीक्ष्णौषधदानं विषमाशीविषदंशश्च कार्यते मर्मस्थानेषु, तेन बहिःसंवेदनं तत्कालीनमरणनिवृत्तिश्च, ततो विविधरसैः शनैः शनैः सर्वात्मना दोषापगमे स्वाभाविकजीवनहेत्वन्नदानम्, तेन च सर्वात्मना स्वास्थ्यम्, तथात्राप्यत्यन्तप्राणबाधायां हि प्रिये दोषारोपः । स चाचिरादेवान्त्यावस्थाज्ञापको भवति, अतस्तं दृष्ट्वा तन्निवृत्त्यर्थमेवोक्तरूपसदृशोपदेशं दत्वा स्वयं प्रियभिषजा प्रेषित इत्युद्धवस्तादृशं तं दत्तवान् । तदा बाह्यानुसन्धानमभूत् । अत एव 'तत्संदेशागतस्मृती'रितिवचनम् । 'ततस्ताः कृष्णसंदेशैर्व्यपेतविरहज्वरा' इति ज्वरपदप्रयोगश्च । भगवतोऽत्रैव तात्पर्यमित्येतदेव फलत्वेनानूद्यते, न तु ज्ञानमार्गीयं ज्ञानम्, अन्यथान्ते 'कृष्णावेशात्मविक्लव'मिति न वदेत् । तर्हि ज्ञानोपदेशस्य क्वोपयोग इति चेत् । उच्यते । यथा योगिनो वपुर्योगसंस्कारसंस्कृतं सन्नाग्न्याद्युपहतं भवति, तथा भगवानात्मेति महापुरुषोपदेशेन ज्ञानाख्यसंस्कारे संपन्ने विरहेन्त्यावस्था भवितुं न शक्नोतीति तत्रैवोपयोग इति । अत्रागतस्मृतित्वे विरहज्वराहित्ये च हेतुः संदेशे प्रियसंबन्धित्वज्ञानमेव, न तु शास्त्रार्थीयमिति ज्ञानम् । अन्यथोपदेशपदमेव वदेदुभयत्र, न तु संदेशपदम् । किञ्च । ज्ञानोपदेशलक्षणसंदेशो ह्युक्तरूप एव । तत्रोपक्रमे 'श्रूयतां प्रियसंदेश' इति संदेश एकत्वमेवोक्तम् । 'कृष्णसंदेशै'रिति बहुत्वं पश्चादुच्यते । एवं च सति ज्ञानोपदेशस्य स्मृतावुपयोगो विविधान्तरङ्गवार्तानां तज्ज्वरा-

पगम इति मन्तव्यम् । अत एव भगवतापि 'मत्संदेशै'रिति बहुत्वमुक्तं संदेशेषु । विप्रयोगे प्रियसंदेशस्यापि तत्तुल्यत्वभानेन तदा स्वास्थ्यस्य रसशास्त्रसिद्धत्वादपि । अपरञ्च । स्मृतिर्हि पूर्वानुभूतस्य, पूर्वमनुभवश्च निर्दोषपूर्णगुणस्य भगवतः । मध्ये विरहस्वाभाव्याद्दोषारोपक्षणे व्यभिचारिभावे जाते यथा पैत्तिकादिज्वरभरेण दोषवशात् प्रलापे सत्यञ्जनादिना प्रकृत्यनुसंधानेन प्रलापनिवृत्तिः, न तु ज्वरस्यापि, तथोपदेशसंदेशेन विरहभरनिवृत्त्या पूर्वोक्तव्यभिचारिभावनिवृत्तिः, न तु विरहस्यापीति । अत्र वयं त्वेवं मन्महे। पूर्वमुपक्रमे दुःखमेवोक्तम्, तत उपदेशः, तदनन्तरमपि 'हे नाथे' त्यन्तेन ग्रन्थेन क्लेशो निरूपितः । ततो विविधसंदेशैर्विरहतापनिवृत्तिर्भगवत्यात्मत्वेन ज्ञानं चोक्तम् । ततोन्ते 'दृष्ट्वा स्त्रीणां भगवति कृष्णावेशात्मविक्लव'मिति सर्वदानुवर्तमानः क्लेश उक्तः । एवं सत्युपक्रमोपसंहाराभ्यां विरहभाव एव दृढो निरूपितो भवति । मध्ये यद् 'ज्ञात्वात्मानमधोक्षज' मित्युक्तम्, तत्तु 'असावहं,' 'कृष्णोहं पश्यत गति' मितिवत्कादाचित्क एव भाव उक्त इत्युपसंहारानुरोधान्मन्तव्यम् ।

नन्वेवं सत्युद्धवप्रेषणं किंप्रयोजनकम्, उक्तभावस्य सार्वदिकत्वादिति चेत् । अत्राप्युच्यते । उद्धवे हि प्रभोः परमा कृपा, अतः पूर्णो भगवद्भावो यादृशोस्ति, तादृशोत्र देयः । स च व्रजसुन्दरीष्वेव सिद्धः । पुंव्यक्तावसंभावितश्च । अतो मद्भाव एतादृश इत्युद्धवाय प्रदर्शनमेकं प्रयोजनम् । ततस्तद्दर्शनेन सततं तद्भावनया प्रियसंदेशहारकत्वेन तासामत्यनुग्रहेण चोद्धवेपि तज्जातीयभावोत्पत्त्यर्थमिति द्वितीयं प्रयोजनम् । विप्रयोगे प्रियसंदेशागमनेन यः कश्चन संतोषः स नान्यदा नान्यथा चेति तृतीयम् । 'मद्वियोगाधि' मिति वचनान्मध्ये मध्ये यदैव प्रियेणैवमेवं संदेशः प्रेषित आसीदिति स्मरिष्यन्ति, तदा च पूर्वविलक्षणो भावो भविष्यतीति तुरीयम् । ज्ञानाद्भक्तिरधिका, यतस्तदुपदेशेपि भक्त्यैव तदुपमर्दो, न तु तेन भक्तेरिति निदर्शनार्थमपीति पञ्चमम् । अत एवैकादशे भगवद्वचनं 'न ज्ञानं न च वैराग्यं प्रायः श्रेयो भवेदिहे'ति । पित्रोः प्रीतिजननमुक्तमेव । भगवतः स्वामिनीनां चान्योन्यसंदेशैरन्योन्यं ये भावा जायन्ते, तेऽनन्ता एवेत्यनन्तान्येव प्रयोजनानीति दिक् ।

प्रकरणार्थानाहुः **बीज**मिति । वक्ष्यमाणस्तोत्रादौ बीजं स्नेहः । स पूर्वं निरूप्यते । स्तोत्रोपदेशयोरनन्तरं दोषस्य प्रिये दोषारोपस्य मानस्य च निवृत्तिः, तया च पूर्वस्नेहोक्तिः । ततो ज्ञानस्य फलं प्रिये निर्दोषपूर्णगुणत्वज्ञानं स्वस्मिन्नल्पत्वज्ञानं च । तत उद्धववाक्यैः कृतार्थत्वम् ।

१०-४४-१ **मानाद्दोषद्वय**मिति । उपालम्भो भ्रमरव्याजोक्त्या दोषोक्तिश्चेति द्वयम् ।

**जानीमस्त्वा**मित्यादिवाक्यप्रतिपाद्यार्थोक्त्यनन्तरं **कस्याश्चिदेव तामस-**
१०-४४-५ **तामस्या** इति । अत्युत्कटभक्तिमार्गीयभाववत्त्वेन ज्ञानमार्गीयज्ञानोदय संभावनारहिताया इत्यर्थः । सत्त्वरजस्तमांसि प्राकृतेभ्यो भिन्नानि भगव-

द्धर्मरूपाणि सन्तीति पूर्वमेव बहुधोक्तम् । समित्युपसर्गसूचितमर्थमाहुः तत्रापीति । भूषणादिसर्वसंपद्युक्त आगत इति भर्तरि अपि कुशलं ज्ञायते तवापि तथेत्यर्थः । एवं कथने गूढाभिसन्धिमुद्घाटयन्ति अन्यथेति । स्वयमापद्ग्रस्तोन्यानुपेक्षेत चेत्, न दोषः स्यात्, सर्वतः कुशली स्वयमन्या न् दुःखितांश्चेदुपेक्षेत, तदा सा दोषायैव स्यात्, प्रकृते स्वोपेक्षाकरणात्तथात्वमिति भावः । दुःखिता अपि तदीयत्वममन्यमानाश्चेत्, तदा तदुपेक्षा न दोषाय स्यात्, न तु तद्विपरीतानामपीत्याशयेन स्वस्य केवलतदीयत्वमाहुः भर्त्रेति-पदेन । विवाहितो हि भर्ता भवति । अत्र तदभावेपि स्वस्य केवलतदीयत्वं वक्तुं तथोक्तम् । किञ्च । न पतित्वमात्रम्, किन्तु भरणकर्तृत्वमपि, एतादृशश्चेदुपेक्षते, तदा तासां जीवनमेव न भवतीति भावः ।

पुंभिः स्त्रीषु कृतेत्यत्र विवाहिताः पुमांसः स्त्रियश्च ज्ञेयाः । अत एव विरागे
१०-४४-६ श्रुत्युक्तत्यागोक्तिः । स्नेहमेव कुर्वन्तीति । न त्वपराधेपि क्रोधानुवृत्ति-
मिति भावः । अथवा । कुर्वन्त्येवेति संबन्धो ज्ञेयः ।

तत्र सात्त्विकादिभावेष्विति । आद्यो दृष्टान्तो राजससात्त्विकः । ततो राजस-
१०-४४-८ राजसः । ततस्तामसतामसः । ततस्तामसराजसः । ततो निर्गुणः । ततः
सात्त्विकराजसः । ततस्तामससात्त्विकः । ततः सात्त्विकसात्त्विकः । ततः सात्त्विकतामसः । ततो राजसतामस इति दश ।

मधुप कितवेत्यस्याभासे । प्रथमं तामसतामसीति । अत्रेदमाकूतम् ।
१०-४४-१२ विप्रयोगे प्रलापदैन्यादिवद्दोषारोपोपि व्यभिचारिभाव एव । तथा सति
रसात्मकत्वाविशेषेप्यत्युग्रभावोत्पत्तौ भगवद्धर्मरूपो रसात्मकः प्रमाणादि-सर्वबलनिरासकोत्युग्रस्तामसत्वेनोपचर्यमाणो यः स एव हेतुरिति वाच्यम् । भावानां मिथ उपमर्द्योपमर्दकभावस्तु 'रजस्तमश्चाभिभूय सत्त्वं भवति भारत । रजः सत्त्वं तमश्चैव तमः सत्त्वं रजस्तथे'तीति प्रभुवाक्यात्सत्त्वादीनां यथा, तथैवेति तत्त्वमुपचारेणोच्यते । एवं सति रसात्मकप्रभुधर्म एवाविर्भवतीत्यारोपो दोषस्यायमिति न वक्तुं शक्यम् । भगवदितरा-स्मरणात्, स्मर्यमाणस्य तस्य स न वक्तुं शक्यः । इत एव नानुभूयमानस्य । प्रभुस्वरूपे तद्धर्मेषु वा दोषत्वाभावात् । ज्ञानवत आत्मस्फूर्तिश्चावश्यकी । एवं सति तदा तदभावाद्दोषत्वेनैव प्रभुधर्मेषु ज्ञानादुच्यमानधर्मात्मकत्वमेव स्वामिन्यास्तदा संपन्नमिति तामसतामसीत्युक्तम् । श्रीमदुद्धवानामपि स्वामिन्या एतादृगवस्थादर्शनेन प्रभुरेतादृशीरेताः कथं न मिलतीति भावो दोषारोप इव जात इत्यपि ज्ञापनायैतत्स्वरूपत्व-मेवोक्तम् । एतादृश्याः स्वामिन्या हृद्यागमनेनैतद्भावोदयाद् उपचारोयमित्यरुच्या पक्षा-न्तरमाहुः तद्भावयुक्ता वेति ।

**मधुप कितवेत्यत्र । मतान्तरभाषेयमित्यादि** । अत्रायमाशयः । शुद्धपुष्टिमार्गीयभक्तानां ज्ञानमार्गबोधनं भक्तिमार्गविरुद्धतमम्, अतो न समाधिभाषायामस्य प्रवेशो वक्तुं शक्यः । वर्ण्यते चात्युत्कटो रसात्मकः स्नेहभावः । स एव हि परमपुरुषार्थरूपः । तद्विघातकश्च सः । यद्यपि ज्ञानस्य स्वातन्त्र्येणात्रानुद्देश्यत्वम्, किन्तु प्रिये दोषारोपमात्रनिवर्तकत्वेन, तथापि तदारोपस्यापि रसात्मकत्वाद् व्यभिचारिभावत्वेनास्थिरत्वाच्च न सर्वथा ज्ञानस्योपयोगः । न ह्येतावत्पर्यन्तं साधिते निरोधे काचिन्न्यूनतास्ति, येन ज्ञानमुपयुज्येत । तस्मात् सूष्टूक्तं **मतान्तरे**त्यादि । कथने तूपपत्तिरियमेव । यत्संगमस्तदार्तिर्वा पुरुषार्थ इतिशास्त्रार्थः । एवं सति विप्रलम्भे प्रिये दोषस्फूर्तौ स्वदुःखदत्वज्ञानं हेतुः । तथा सति स्वसुखदत्वेनोत्तमत्वं प्रियत्वं च सिध्यति, न तु स्वरूपतः । तथा सति स्नेहस्य निरुपधित्वं भज्येतेति तत्समाधानायात्मत्वेन बोधनम् । तथा सति भगवत्येतासामेतासु च भगवतः सहजः स्नेहः सूचितो भवति । दुःखदत्वासंभवश्च । यथा स्वाधिष्ठितं देहं पीडयितुं जीवात्मा नोत्सहते, तथा स्वाधिष्ठितं जीवात्मानं भगवानित्युक्तं भवति । अत एव श्रुतिराह 'यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वा'मिति । तथा च विप्रयोगेन्तर्लाभः, संयोगे बहिरिति तदा तदा तत्तद्धर्माः स्नेहवशादाविर्भवन्ति । तावपि स्नेहजनितावेव, अन्यथा सर्वेषां तौ स्याताम् । तथा च स्नेहस्यैव दोषस्फूर्तिहेतुत्वं पर्यवस्यतीति निर्दोषत्वं प्रिये भाति । इदं तु मर्यादारीत्योच्यते, वस्तुतस्त्वत्युत्कटस्नेहेनैव दोषः स्फुरति, सोपि भगवद्भाव एवेति न भ्रमरूपो, न वा दोषरूपः । रसात्मकभगवत्स्वरूपमेतादृशमेवेति नाधिकं विचारणीयमत्रास्ति । अन्यथा रसाभाव (रसाभासः) एव सिध्यतीति नः प्रतिभाति । ज्ञानाद् भक्तेराधिक्यमप्यनेन ज्ञाप्यते ।

**समाधिभाषाया**मिति । तत्र हि माहात्म्यज्ञानस्नेहौ क्वचिद्व्यस्तौ क्वचित्समस्तौ च निरूप्येते । प्रकृते तु 'काचिन्मधुकर'मित्यादिना प्रस्तुता कथा न तादृशीत्यस्याः कथायाः समाधिभाषात्वं तद्विरुद्धार्थकत्वं च विरुद्धमिति कस्यचिद्भाति, विहितस्नेहाभावेन भक्तिमार्गविरोधश्च तथा, स बोध्यते विरोधोत्र नास्तीति । तत्र मतान्तरभाषात्वं कामशास्त्रानुरोधित्वं चेति हेतुद्वयम् । अत्रेदं ज्ञेयम् । मर्यादामार्गीयमतात् पुष्टिमार्गीयं तन् मतान्तरमित्युच्यते । समाधौ तु व्यासैर्द्विविधोपि भक्तिमार्गो दृष्टः । 'अनर्थोपशमं साक्षाद्भक्तियोग'मिति वाक्यात् । तदर्थस्तु 'अनर्थोपशमं भक्तियोग'मिति पदेन साधनरूप उच्यते, 'साक्षाद्भक्तियोग'मिति पदेन फलरूपः । 'अजानतो लोकस्य' आद्यः । 'समाधौ दृष्ट्वा स्वयं विद्वानि'ति द्वितीयमपि तमुक्तवान् व्रजसीमन्तिनीषु । अयं पुष्टिमार्गीय इति मतान्तररूपः । एतादृशेषु ज्ञानोक्तिरपि तथा । कामशास्त्रानुसारेणैव पूर्वं स्वरूपानन्दं दत्तवानित्यधुनापि तथैवोच्यत इति न कोपि विरोधः । तथा चेयं समाधिभाषैव । तथा चात्र समाधिभाषायां सत्यां भक्तिमार्गे च सत्युक्तरीत्या न विरोध इत्यर्थः ।

कालस्य दूतत्वमुपपादयन्ति **कालद्वारा** हीत्यादिना । तत्तत्काले तथा तथा भगवत्पूजाध्यानस्तोत्रादेर्विहितत्वेन स स काल एव भगवत्प्रापकः, तदभावे तदकरणादिति भावः ।

**प्रियसखे**त्यत्र । **प्रथमपर्याया**दित्यादि । 'काचिन्मधुकरं दृष्ट्वे'त्यादिनोक्तः
१०-४४-२२ प्रथमः पर्यायः । तदैतद्दर्शनेन यादृशी बुद्धिर्जनिता तस्याः सकाशादन्यथा प्रकारान्तरेण बुद्धिमधुना जनयतीत्यागमनमपि तथैव संभावयतीत्यर्थः । कालपक्षे अर्थसंगतिमाहुः **हेमन्ते तासा**मित्यादिना । पूर्वं वसन्ततौरागमनमुक्तम् । तथा च 'पुनरागा' इति पदात्तस्यैवाधुनाप्यागमनं वक्तुमुचितम्, न तु हेमन्तस्येति शङ्कां निरस्यन्ति **तासां साधनोपक्रम** इत्यादिना । अत्रेदमाकूतम् । पूर्वोक्तस्तु नेष्टसाधकत्वेन प्रतीतः, अधुना प्रतीयमानस्त्विष्टसाधकत्वेन प्रतीयते, तादृशश्च हेमन्त एव । व्रते कालस्याप्यङ्गत्वात्तेन तत्त्वमुच्यते । तथा च व्रततत्फलदानसमये पूर्वमागत आसीः, अधुना किं पुनरागा इष्टं साधयितुमित्यर्थः पर्यवस्यति । किञ्च । चैत्रादिकस्य संवत्सरस्य नवमो मासो, हेमन्तस्य प्रथमो मासो मार्गशीर्षो भवति । उक्तिश्चेयं नवमीति स एव तद्व्यापारविषयीक्रियते । गतस्य तस्यैवावृत्तिरसंभावितेतिशङ्काभावायाहुः **पुनर्दण्डकलितव**दिति । यथा गतोपि पुरुषः पुरुषान्तरेण दण्डेन प्रेरितः पुनरावर्तते, । कुलालचक्रप्राग्देशो वा, तथा पुनरस्मदिष्टं सिषाधयिषुस्त्वां प्रेषितवानित्यर्थः । कालो हि सर्वनियामकः, तस्यान्यशेषत्वेनागमनमसंभावितमित्यत आहुः **सात्त्विक** इति । दोषाभावज्ञापनपूर्वकप्रियत्वादिज्ञानानुगुणत्वेन तथा । भक्त्यनुगुणत्वेन गुणातीतो वेत्यर्थः । प्रेषितो हि प्रेषकवाक्यमंगीकृत्यागत्य तदुक्तं वचनं निवेदयति । प्रकृते कालस्तादृश इति तस्मिंस्तद्धर्मानाहु**स्तदीये**त्यादिना । कालपक्षे स्वस्य श्रुतिरूपत्वान्मन्त्रदेवतारूपत्वम् । तत्तत्काले कृतं पूजनादिकं मन्त्राधिष्ठातृदेवतावरेणैव फलितं भवतीति **वरये**त्युक्तमित्यर्थः । **विभज्यैवे**ति । शक्तीनां भगवद्धर्मत्वेन तत्स्वरूपाश्रितत्वेपि पृथक्कार्यकरणार्थं तथेत्यर्थः ।

**सान्त्वयन् प्रियसंदेशै**रित्यत्र । **तत्रापि प्रियसंदेशेनैव, न तु स्वत** इति । अत्रायमाशयः । एतादृशीनां सान्त्वनं प्रभुप्रादुर्भावं विना तद्वाक्या-
१०-४४-२२ नामप्यशक्यम्, किं पुनर्मम, तच्चावश्यकम्, तत्र स्नेहस्यैवायं सहजो धर्मो यत्तत्संबन्धिन्यपि तत्त्वेनैव भानम् । तेन शब्दार्थस्यानभिप्रेतत्वेपि प्रियसंबन्धित्वेन शब्दज्ञानेनैव तच्छ्रवणेनापाततः सान्त्वनं भविष्यतीति ज्ञात्वा श्रीमदुद्धवैर्विवक्षितमुक्तमिति ज्ञापनाय प्रियपदमुक्तमिति । अत एवोपक्रमोपसंहारयोरपि 'श्रूयतां प्रियसंदेश' इति, 'तत्संदेशागतस्मृती'रित्येवोक्तम्, न तूपदेशपदम् । वस्तुतस्तु संदेशोप्येतादृशीषु न वक्तुं शक्यः, तथापि प्रभोराज्ञा तथेति तत्पालनार्थमुक्तमित्याहु**राज्ञा** चेत्यादि ।

स्वरूपातिरिक्तस्य सान्त्वनहेतोः स्वस्याज्ञानेप्याज्ञानुभावेनैव सान्त्वनं भविष्यति, नो चेत्प्रभुः कथं वदेदिति हृदिकृत्वा वदन्तीति भावः । एतदवस्थादर्शने तादृग्वाक्यश्रवणेपि यदेतेषां वाक्प्रसवः स तु 'मत्संदेशैर्विमोचये'त्याज्ञानुभावेन, न तु स्वसामर्थ्येनेति ज्ञेयम् । वस्तुतस्त्ववश्यंभाव्यसामर्थ्ये प्रेषणवैयर्थ्यं ज्ञात्वा स्वसामर्थ्यमेव वरमिव दत्तवान् 'मत्संदेशैर्विमोचये'ति वचनेनेति प्रतिजानीमः ।

**अहो यूयमि**त्यादेराभासे । **तासां स्वाभाविक** इत्यादि । षड्भिः स्तोत्रकरणे तात्पर्यमुच्यते । स्त्रीत्वादिस्तत्स्वभावश्च भगवद्गुणकृत एवेति । 'ता
१०-४४-२३ मन्मनस्का' इति भगवद्वाक्याच्च तद्धर्मा भगवद्धर्मा एवेति निर्दोषगुणरूपा एवेति ज्ञापयितुमैश्वर्यादिगुणसङ्ख्यासमानसङ्ख्यकैः श्लोकैः स्तवनमित्यर्थः । भगवद्गुणैः अन्तः स्थितभगवत्स्वरूपा इति तद्धर्मा एव वागादिरूपेणाविर्भवन्तीति तथेत्यर्थः । **साधारण्यार्थावि**ति । कतिपयानामेव न पूर्णार्थत्वम्, किन्तु सर्वासाम् । लोका अपि न तथा, किन्तु सर्व इत्यर्थः । **तेषामि**ति । लोकानामित्यर्थः ।

**भवतीनां वियोग** इत्यत्र । **जीवब्रह्मणोस्तु भेदेऽज्ञानमेव हेतु**रित्यादि । अत्रेदं प्रतिभाति । 'एतावानस्य महिमा अतो ज्यायांश्च पूरुष'
१०-४४-२९ इत्यादिश्रुतिभ्यो 'यस्मात्क्षरमतीतोह'मित्यादिवाक्यैश्च प्रपञ्चातीतत्वं पुरुषोत्तमस्य निर्विवादम् । 'एतावनस्य महिमा' 'सर्वं खल्विदं ब्रह्मे'त्यादिश्रुतिभ्यः प्रपञ्चस्य विभूतिरूपब्रह्मात्मकत्वम्, पुरुषोत्तमस्य तदतीतत्वं चोपपद्यते । एवं पुरुषोत्तमलीलापदार्थानां पुरुषोत्तमात्मकत्वमेव, न तु पूर्वमध्यपातित्वमिति मन्तव्यम्, अन्यथा 'ते ते धामान्युश्मसी'त्याद्यृक्षु 'विष्णोः परमं पद'मिति न वदेद्, 'विष्णोः कर्माणि पश्यत' 'तद्विष्णोः परमं पद'मित्यादि च । एवं सति सर्वस्यापि लीलापदार्थस्यात्मरूपेण सह भवतीनां वियोगो न संभवति । न हि स्वेन साकं वियोगः संभवति । एतदेव मूले **सर्वात्मने**ति पदेनोक्तम् । सर्वात्मना सर्वथेत्यर्थः । तथा च तत्तद्देशकालज्ञानक्रिया त्करणादेरातृणस्तम्बस्य नित्यत्वेन श्रीरासोत्सवस्वनृत्यप्रभुबाहुगृहीतकण्ठानि स्वस्वरूपाणि पूर्वमनुभूतान्यधुनापि वर्तमानैस्तैः साकमेतदवस्थापन्नानामपि स्वानामभेदज्ञापने पूर्वोक्तानामनिर्वचनीयनिरवध्यानन्दात्मकत्वात्तथात्वमेवाधुनापि स्वस्मिन्भातं भवतीति स्वास्थ्यं भवति । यद्यप्यस्य कादाचित्कत्वेन तस्य च सर्वोपमर्दित्वेन न सर्वात्मना स्वास्थ्यसंभावना, तथाप्यस्य प्रियसङ्गमरूपत्वेन निरवध्यानन्दरूपत्वेन भवतितरां तथात्वम्, येन तत्सामयिकोत्कटदुःखनिवृत्त्या किञ्चित्कालं सस्मितस्वामिनीमुखाब्जदर्शनेन स्वागमनसार्थकत्वज्ञानेन स्वस्यापि दुःखनिवृत्तिः । एवं सति भवतीनां मे वियोगो, मम च भवतीनां वियोगः, सर्वात्मना सर्वात्मरूपेण वर्तमानस्य मम न संभवतीत्यर्थः संपद्यते ।

अयमेवार्थोऽग्रे व्यक्तीकृतो **यथा भूतानी**त्यादिना । आश्रयकरणकर्मणामभेदश्चोक्तः **आत्मन्येवे**त्यादिना ( १०-४४-३१ ) । सृष्टिः । स्वरूपस्थितिहेतुः,

१०-४४-३० सोत्र प्रभुसंगम एव । हननं वियोगकरणम् । सर्वतिरोधायकत्वात् । तदपि रसार्थमेवेत्यनु पश्चात्पालये स्वरूपानन्ददानेन । अत एवान्ते पालनमुक्तम् । अत्र हेतून् क्रमेणाह **आत्मे**त्यादिना । आत्मानुभावेन सृजे, तदपि माया योगमायान्तरङ्गा लीलोपयोगिनी तदनुभावेन माने सति हन्मि, तेन सर्वतिरोधाने भूतेन्द्रियगुणस्वरूपेण पुनराविर्भूयानु, पालये ।

ननु देहाद्यध्यासवानात्मा प्रतीयत इति कथं भगवदात्मकत्वमिति चेत्तत्राह **आत्मा ज्ञानमय** इति । ज्ञानप्रचुर इत्यर्थः । लीलासंबन्धिदेहानामपि

१०-४४-३२ तदात्मकत्वात्तत्राहमिति ज्ञानं वास्तवमेव, न त्वविद्याकृतम्, यतः **शुद्धो**ऽविद्यासंबन्धरहितः । अत्र हेतुर्व्यतिरिक्तः प्रापञ्चिकेभ्यो जीवेभ्य इति शेषः । तत्र हेतु**र्गुणाश्रय** इति । पुरुषोत्तमगुणाश्रयत्वात्तथा । न हि प्राकृतेषु लीलां स्वयं करोतीति भावः । स्वापाद्यवस्थावत्त्वेनापि प्राकृतत्वं न शङ्कनीयम् । यतः सुषुप्त्यादयो लीलोपयोगिन्या मायया संपादिता या वृत्तयस्ताभिः स संबध्यते । 'लोकवत्तु लीलाकैवल्य' मितिन्यायेन लोकमध्ये क्रियमाणा लोकसमानाकारा चेन्न भवेत्, तदा लीलारसो न भवेत् । अत एव व्यासैरपि लोकसमानाकारत्वम्, न तु लोकमध्यपातित्वमिति ज्ञापनाय लोकवदित्युक्तम् ।

ननु लीलाविषयिणी कस्यापि नैवं प्रतीतिर्दृश्यत इत्याशङ्क्य प्रतिबन्धकवशान्नैवं प्रतीतिर्लोकस्य, तदपगमे सा भवतीत्याशयेनाह **येने**ति । सर्वतो मनसो

१०-४४-३३ निवृत्तौ केवलभगवत्परत्वे तथैव प्रतिपद्यते जानातीत्यर्थः ।

नन्वेवं सति शास्त्रानेकत्वं कथमित्याशङ्क्य साधनप्रकारभेदत एव तद्भेदः, न तु

१० ४४-३४ तत्र फलभेदोप्यस्तीत्याह **एतदन्त** इति ।

नन्वेवं सति विशेषाभावात्संनिकर्ष एव कुतो न साध्यते, दुःखहेतुर्विप्रकर्षः किमर्थ इत्याशङ्कायां तत्तात्पर्यमाह **यथे**त्यादिना । अत्रेदमाकूतम् । पूर्वमनुभावितो

१०-४४-३६ यो भजनानन्दः स तु ब्रह्मानन्दतः शास्त्रीयभक्त्यानन्दतश्च कोटिगुणाधिकोऽनिर्वचनीयश्च भवति । तथा च सन्निकर्षे त्वग्रिमाग्रिमनूतननूतनरसाकाङ्क्षा तदनुकूलो यत्नश्च भवति, न तु पूर्वानुभूतलीलास्वरूपतलस्पर्शः कदापि । विप्रकर्षे तु मनआदीनां बहिःस्वविषयालाभेन्तर्विद्यमानमेव तं गृह्णन्ति, तदा यथा बहिः प्रकटात्प्रियाद्रसानुभवः पूर्वमासीत्तथान्तःप्रकटात्प्रियात् पूर्वस्मादपि विलक्षणो रसोनुभूतो भवति, यः सङ्गमेपि दुरापः । अतो महारसदानार्थमेवैवंकरणम् ।

एतदेवोक्तं **मदनुध्यानकाम्यये**तिपदेन, **यथे**त्यादिना ( १०-४४-३५,३६ ) च । सङ्गमे मदुपयोगित्वने देहादिस्फूर्तिरप्यस्ति, द्वितीये तु सापि नास्तीत्यपि रसाधिक्यम् ।

एतदेवोक्तं **विमुक्ताशेषवृत्तीति** विशेषणेन ( १०-४४-३७ ) । एतेन रसानुभवे नैरन्तर्यमुक्तं भवति । बहिरनुसन्धाने तु तदेव बहिःसाक्षात्संबन्धात्मकं फलं शीघ्रमेव साधयति । अतस्तथैव भविष्यतीत्याह **अचिरा**दित्यादिना ( १०-४४-३७ ) । एतासां त्वधुनैव बहिःसंगमोभिलषितः, तदभावादस्मदनभिप्रेतामप्यस्मदधिकारविरुद्धामपि ज्ञात्वेश्वरभावेनाज्ञापितवान्, अनभिप्रेतमपि बलाद्ग्राहयितुमित्यनाकर्णनीयमिदं भवति यद्यपि, तथापि प्रियतमसम्बन्धीत्याकर्णनमावश्यकामिति तथा । एताभिः प्रियसंबन्धित्वेनैव श्रुतत्वात्तथैव फलिष्यति, न तूपदेशत्वेनेतिज्ञापनायाग्रे **संदेश**पदम् ( १०-४४-३९ ) । एतेनैव 'ननु वयमिव भगवानपि पूर्वमस्मद्योगासहिष्णुरनुभूतः, अधुना तं कथं सहत' इत्याशङ्का निरस्ता । भगवदुक्तिष्वाज्ञात्वमेव प्रतीतम्, न तु प्रीतिवचनत्वम् । सा त्वीश्वरभावेनैव भवतीत्यैश्वर्यमेवाधुना स्वस्मिन् जानाति, ईशितव्यतामेवास्मासु जानातीति युक्तमनागमनम् । न चैवं भक्तिमार्ग विरोध इति वाच्यम् । 'स्वागतं व' इत्यादिवचनवत्पूर्वतिरोधानवदस्यापि रसविशेषानुभावकत्वात् । एवमेव प्रभावपि ज्ञेयमिति दिक् । **मतान्तरभाषेय**मित्याचार्यवर्यैः पूर्वमेवोक्तमिति ( १०-४४-१२ ) नाधिकं शङ्कनीयं समाधेयं वास्त्यत्र । परन्तु 'यन्मायया दुर्जयया मुह्यन्ति ज्ञानकाशये'तिवाक्याज्ज्ञानस्य मोहरूपत्वाद्धर्मिमात्रपराणामन्येन मोहासंभवात् तस्य फलत्वेन मोहकत्वासंभवान्न भगवद्भावच्युतिः कदापि भविष्यतीति सर्वं सुस्थम् । अत एव 'ज्ञानिनामपि वाक्येन न भक्तं मोहयिष्यती'त्याचार्यवचन ( सं. नि. २० ). मस्मत्सर्वस्वपालकमस्तीत्यतिनिश्चिन्ता वयम् ।

ईश्वरस्य कृतौ वाचि पूर्वपक्षसमाहिती ।
ब्रह्मादीनामप्यशक्ये तथापि स्वस्य सर्वथा ॥ १ ॥
तदीयत्ववशाद्धाष्ट्र्याद्यत्किञ्चित्कथयामि तत् ।
क्षमन्तां तातचरणास्तेनैवाशेषमुत्तमम् ॥ २ ॥
यो बीजावापमारभ्य फलपाकावधि स्वयम् ।
पोषितस्तं व्रजतरुं नाथो नापि जिहासति ॥ ३ ॥

**इति श्रीमद्विट्ठलेश्वरविरचितभ्रमरगीताध्यायटिप्पणी ।**

श्रीकृष्णाय नमः ।

श्रीहरिधनविरचिता

# भ्रमरगीतीयसुबोधिनीदीपिका ।

राजसप्रकरणीयप्रमेयप्रकरणचतुर्थाध्यायार्थनिरूपणे **स्वस्थित्यैव निरोधनादित्यादि।**

१०-४३-० तत्रायमाशयः । ननु तामसभक्तानां तामसप्रकरणे निरोधस्योक्तत्वात्पुनरत्र तेषां तत्कथनं किमर्थमित्याशङ्क्याहुः **स्वस्थित्यैवेति**। पूर्वं हि संयोगविप्रयोगोभयनिरूपणात्संयोगे लीलाभिर्निरोधनं वियोगे स्वरूपस्थित्यापि । साम्प्रतं तु केवलविप्रयोगदानात्स्वरूपस्थित्यैव तदिति पुनः कथनमित्यर्थः । ननु स्वरूपस्थितौ तदात्मकत्वसम्पत्तेः किं निरोधनमिति चेन् न । तस्य रसात्मकत्वेनाधेयतया स्थितत्वात् । आधारस्तु स्वामिन्य एव । तथा च स्वस्थितस्वरूपमात्रासक्तकरणं बहिष्ठतन्नैरपेक्ष्येणात्र तदिति भावः । नन्वत्र विप्रयोगे किं कैवल्यं, सर्वत्रैव तस्य केवलत्वादिति चेत् । सत्यं। केवलत्वं हि स्वरूपलीलातत्सामग्र्यादीनामान्तरानुभवहेतुत्वेन विप्रयोगभावात्मकत्वमिति जानीहि । अत एवात्र बहिःसंवेदनेनुभूयमानानां लीलापदार्थानां स्मारकत्वमेवोक्तं 'पुनः पुनः स्मारयन्ती'ति । अन्यथा अनुभावकत्वमेवोक्तं स्यादिति भावः । ननु गुणगानेपि तेषां पदार्थानां भावात्मकत्वेन ततः प्रकृते वैलक्षण्यमिति चेत् । न । भावात्मकत्वेपि सर्वान्ते तेषां 'रेमिर' इति वाक्येन संयोगानुभावकत्वात् । प्रकृते तु स्वरूपस्यैतदात्मकत्वेनान्तरो बाह्यश्च विप्रयोगानुभव एवेत्यलमुक्त्या । **तेनेति** । तेन स्वस्थितिनिरोधेन परोक्षे विशेषेण भगवत्परतादर्शना'त्सर्वात्मभावोधिकृतो भवतीनामि'त्युद्धववाक्याच्चोक्तं, तामसप्रकरणे लीलानिरुद्धत्वमपि समर्थितं जातमित्यर्थः । नन्वेषा कथा तामसप्रकरणे कुतो नोक्ता तामसभक्तनिरोधकथात्वात् । अत्र तन्निरूपणे किं तात्पर्यमिति चेत्तत्राहुः । **राजसत्वं चेति** । स्वरूपस्थितिनिरोधेन स्वरूपस्यान्तरस्यैव रसात्मकस्य भावरूपस्य तादृक्संयोगवियोगरूपत्वेन बहिःसंवेदनासंवेदनाभ्यामन्तर्निष्ठया विरहेण च प्रतिक्षणमुभयानुभवादेतेषां विक्षेपवद्भावसम्पत्त्या राजसत्वं च सम्यक् स्थायिभावरूपेण सिद्धमित्यर्थः । एतदेवोक्तमाचार्यैः संन्यासनिर्णये 'विकलत्वं तथास्वास्थ्यं प्रकृति'रिति । **गुणोत्कर्षश्चेति** । बहिःप्राकट्यनैरपेक्ष्येण परोक्षे गुणैरेव संयोगसमय इव सर्वप्रकारकभगवत्स्वरूपानुभवा'त्तव कथामृत'मित्यत्र स्वामिनीभिरेव निरूपितो गुणानां भगवत्समत्वलक्षणो य उत्कर्षः स एतत्कथया निरूपितो जात इत्यर्थः ।

**तेषामेव चेति** । '**ज्ञातीन्व**' इत्युक्त्या तेषां नन्दादीनां यः सम्बन्धः पुत्रत्वादिरूपः स एव स्थापितः । वसुदेवादिष्वपि सम्बन्धबुद्धावेतेष्वभिमानमात्रसत्त्वे समा-

धानाय 'वो द्रष्टुमेष्याम' इत्येवोक्तं स्यात् । अतो वस्तुतः पुरुषोत्तमस्य लीलामात्रैकक्रुते लीलार्थपुत्रत्वस्वीकारो नन्दगृह एवेति त एव सम्बन्धिनो, वसुदेवगृहे तु प्रद्युम्नांशेनावतारकार्यार्थं पुत्रत्वेनाविर्भाव इति न साक्षात्पुरुषोत्तमस्य पुत्रत्वादिसम्बन्ध इत्येतेषु ज्ञातित्वनिरूपणेन बोधितमिति भावः । एतदेवोक्तं प्रभुभिर्जन्मप्रकरणटिप्पण्याम् । 'नन्दगृहे प्रादुर्भूतस्यैव पुरुषोत्तमस्य सर्वतः पाणिपादान्तत्वेन तदा कार्यमस्तीति वसुदेवगृहे प्रादुर्भाव इति ज्ञायते' इति । तथैवाचार्यचरणैरप्यभिहितं 'पुरुषोत्तमस्तु नन्दगृह एव मायया सह जात' इति । **स्थापित** इत्युक्त्या पूर्वं वसुदेवसमानीतस्वरूपस्यात्र स्थित्या तत्सम्बन्ध एतत्संबन्धो वेति सन्देहः स्थितोधुना तेन रूपेण मथुरासमागमनोत्तरं 'ज्ञाती'नितिनिरूपणेन सन्देहनिवृत्तिपूर्वकं नन्दादिसम्बन्ध एव भगवता स्थापित इति गम्यते । तथा च वस्तुतः साक्षात्सम्बन्धिनां तेषां सन्तोषसम्पादनमावश्यकमित्युद्धवप्रेषणमिति भावः । **कार्यस्यावश्यकत्वादिति** । महारसत्वेन स्वदत्तस्वरूपानुभवहेतोर्ज्ञानोपदेशलक्षणकार्यस्य जरासन्धादिवधरूपावतारकार्यस्य वेत्यर्थः । स्वगमने एतदुभयासम्भवादिति भावः । **विद्यात** इति । एतावत्पर्यन्तं भगवान्विद्यायां स्थितः, अत एव व्रजस्थभक्त्यस्फुरणं तस्यास्तद्विरोधित्वादधुना भक्तौ प्रतिष्ठित इति बोधनार्थमेवं कथनम्, अन्यथा विद्याग्रहणादागत्येत्युक्तं स्यादिति भावः । **मित्रभूता गोपा अल्पगोप्या इति** । समतया प्रीति--विषया गोपा अन्तरङ्गलीलासम्बन्धित्वेन सन्देशकथने स्वामिनीभ्यो न गोप्या न गोपनीया इति नन्दादिभ्यो गोपनीया इत्यल्प**गोप्या** इत्यर्थः । ननु गोपसन्देशस्तु प्रेषणाज्ञायां नोक्त इति किमर्थमेतन्निरूपणं विवृताविति चेत्, सत्यम् । तथापि 'इति सम्प्रार्थितो गोपै'रित्यनेनान्ते तत्प्रार्थनाया उक्तत्वात्तत्सन्देशोपि वर्तत इत्यभिप्रेत्याचार्यैस्तथोक्तमिति ज्ञेयं, स्वामिनीसम्बन्धित्वेनैव तदङ्गीकरणादाज्ञावसरे भिन्नतया न तदुक्तिस्तदाज्ञयैव तत्सम्भवादिति भावः । **गोप्यस्त्विति** । गोपेभ्योपि स्वामिन्यो गोप्या इत्यतिगोप्यत्वमित्यर्थः । गोपानां स्वामिनीसन्देशज्ञाने 'मोहितास्तस्य मायये'त्यन्तरङ्गतमलीलाविषयकाज्ञानस्य पूर्वसम्पादितस्य निवृत्तिः स्यादिति तथेति भावः ।

**वृष्णीनामित्यत्र** । **समानशीलव्यसनवानिति** । यादवान्तरवदवतारकार्यसम्बन्धित्वाभावेन निगूढलीलाकार्योपयोगिभक्तत्वादिति भावः । **स्वतोपि**
१०-४३-१ **च्छाययेति** । 'गोपीनां विनुदन् शुच' इत्यग्रिमवाक्यपर्यालोचनया तथोक्तमित्यर्थः । **छायया** भगवद्वाक्यछाययेति बोध्यम् ।

**गच्छोद्धवेत्यत्र** । श्लोकचतुष्टयार्थं कारिकया संगृह्णन्ति **प्रमाणं** चेत्यादिना । **गच्छोद्धवेति** वाक्यं प्रमाणं; उद्धवस्य गोकुलगमनप्रवृत्ति-
१०-४३-३ हेतुत्वात् । **प्रमेयं** 'ता मन्मस्का' इत्यनेनोक्तं स्वामिनीस्वरूपम् । **उपपत्तिः**

स्वामिनीनामेवंविधस्वरूपं साम्प्रतमस्तीत्यत्र युक्ति'र्मयि ता' इति श्लोकोक्ता मूर्च्छादैन्यादि-निरूपणरूपा । चकारादुपपत्तावपि स्वरूपनिरूपणम् । **बाधकमुद्धवाप्रेषणे** 'धारयन्ती'ति श्लोकोक्तं यथाकथंचित्तत्प्राणधारणसूचितस्थित्यभावरूपम्, एते चत्वारोप्यर्था अत्रैवाज्ञावसर एवोद्धवस्य तत्स्वरूपाभिज्ञत्वसिद्धये वक्तव्या, अन्यथा तत्स्वरूपानभिज्ञस्य तत्र प्रेषणे कार्यं न सिध्येत्, प्रत्युत स्वरूपाज्ञानादन्यथाकथनेन वैमनस्यमेव सम्पादयेदिति भावः । **तदुपपादितमिति** । 'ज्ञातीन्वो द्रष्टुमेष्याम' इत्यनेनेत्यर्थः । **आधिग्रस्ता** इति । भगवद्विप्रयोगस्य स्वरूपात्मकत्वेन व्यापकत्ववत्तदाधेरपि तथात्वादिति भावः । ननु नन्दादिषु प्रीतिप्रापणमेवोक्तं स्वामिनीषु सन्देशस्तत्र चात्मत्वेन स्वनिरूपणं कुत इत्याशङ्क्याहुः । **ता मन्मनस्का इत्यत्र अस्मत्कथन** इति अस्मच्छब्दवाच्य आत्मा तत्कथने स्वामिनीषु

१०-४३-४ स्वस्यात्मत्वेन कथने प्रमेयबलत्वेन स्वामिनीस्वरूपमेव विशेष इति तदे-
वाहेत्यर्थः । 'यथा मद्धस्तस्थिते'त्यादिना भगवदङ्गीकारानुभाव उक्तः ।

तथा च यत्र 'नैषातिदुःसहेति' वाक्याद्भगवद्गुणपरिगृहीतानां क्षुधादिदेहधर्मैर्बाधाभावस्तत्र साक्षात्स्वरूपपरिगृहीतेषु तदभावे का शङ्केति भावः । **फलसाधकत्वादिति** । भक्तिमार्गफलं हि भावो व्यसनात्मकस्तत्साधकत्वादित्यर्थः ।

**मयि ता इत्यत्र । ज्ञानस्येति** भयादिहेतुभूतज्ञानस्येत्यर्थः । **मानसव्यापारस्येति**

उत्कटचिन्तादेरित्यर्थः । **स्मरणमात्रमेवेति** । भगवतो दूरस्थित्या तत्स्मरण-
१०-४३-५ मात्रस्यैवोत्कटचिन्तारूपत्वादित्यर्थः । मूर्च्छादैन्ये उभे अपि कथमुपपद्येते

इत्याशङ्क्यान्तःसंवेदनबहिःसंवेदनाभ्यां तदुभयोपपत्तिरित्याहुः **मत्स्मरण** इत्यादि । अन्तःसंवेदने भगवत्स्मृतिर्वियोगेन तथैव बहिःसंवेदने लीलास्मृतिरित्युभयमप्युपपद्यत इति भावः । **मत्सन्देश** इति सन्देशस्यानुभूयमानस्वरूपप्रापकत्वादिति भावः ।

**धारयन्त्यतिकृच्छ्रेणेत्यत्र । बह्वयो मृता** इति । भगवति लीलासहिते तासु प्रविष्टे

प्रयोजनाभावात्पूर्वं तत्प्रविष्टरसात्मकस्वामिनीनां भगवति प्रवेशादिति
१०-४३-६ भावः । अत्रायं निर्णयः । एताः श्रुतयोऽग्निपुत्राश्च, तास्ते च भगवता

प्रकटिता रसात्मकस्वरूपदानायेति वरदानकथयावगम्यते । तथा च तदानीं भेदेन दर्शनं दत्तमिति तथैव प्रकटः स्वयं नन्दगृहे, गोप्यः श्रुतिष्विति सिद्धे कार्ये निरोधरूपे तासां पुनर्भगवति प्रवेश इत्याभिप्रेत्य तथोक्तमाचार्यैः । अग्निकुमाराणां तु भिन्नैव व्यवस्था कात्यायनीप्रवेशादिरूपा । **तज्जीवन** इति । पूर्वोक्त'मायास्य इति दौत्यकै'रिति वाक्यमेतावत्पर्यन्तं जीवने साधनमित्यर्थः ।

**इत्युक्त** इत्यत्र । **स हीति** । अत एव भगवता तथोक्त इति भावः । **तेन**

**निन्देत्यादि** । निन्दासाधारणकार्यकर्तृत्वेन लोकैः क्रियमाणा स्तुति-
१०-४३-७ रेतदकरणे तैरेव क्रियमाणा लोकातिक्रमो लोकविरुद्धकरणरूपः पर-

लोकादिबाधः स्वामिनीवचनानां दोषारोपादिरूपाणां श्रवणेन तत्सर्वमविगणय्येत्यर्थः । प्रशब्दार्थमाहुः **तत्रापीति** ।

**प्राप्त इत्यत्र गमनदिवस** इति । तथा च शीघ्रगमने सन्देशाकथनात्कालस्य व्यर्थ-
१०-४३-८ गतिः स्यादिति भावः । **आदौ नन्दश्चेति** । आज्ञायास्तथात्वादित्यर्थः । अन्यथा समयसत्त्वे गोपादिभ्योपि वदेदिति भावः । **स्मारकेणेति** रथादिनेत्यर्थः ।

**कालस्य तथात्वादिति** । **अतिथि**समागमकालत्वात्सन्ध्याकालस्येत्यर्थः । **अग्नि-वाचकश्चेति** तथा चाग्नेरप्यग्निहोत्रीयस्यास्तमयसमयोत एव विहरणं तदेति बोधितम् । **भगवद्रहितत्वादिति** । भगवतः स्वामिनीषु सत्त्वेन गोकुले तथात्वमित्यर्थः । एतेन तत्र भगवत्सत्त्वेनैश्वर्यं सकललीलाविष्करणरूपं तास्वेवास्तीति श्रीगोकुले तदभाव इति भावः ।

**वासितार्थ इत्यत्र । तेन पितरोपीति** एतेनात्रत्यकामस्य धर्माविरुद्धत्वमुक्तं,
१०-४३-९ तथा च 'धर्माविरुद्धो भूतेषु कामोस्मि भरतर्षभ' इति वाक्याद्भगवद्विभूति-रूपत्वमपीति भावः । **जयपूर्वक** इति तथा चात्र कामकृतकार्पण्यदोषा-भावोपीति भावः ।

**गायन्तीभिश्च इत्यत्र । उत्सवनिरूपणार्थ**मिति स्वामिनीगानेनैव सर्वेषां
१०-४३-११ गोकुलवासिनां भगवद्वियोगेपि परमानन्दसिद्धेरिति भावः । **स्त्रियश्चेदिति** । पुंसां धर्मबुद्ध्यापि गानसम्भवादिति भावः । **गोपान् गोपीरिति** । येषामुत्सवो याभिश्च गानेनोत्सवस्तदुभयवर्णनमित्यर्थः ।

**अद्यर्कातिथीत्यत्र । प्रवृत्तिस्वभाव**मिति । ज्ञाने निरूप्ये धर्मनिरूपणात्तद-
१०-४३-१२ नुकूलमेव ज्ञानमत्रोपयुज्यत इति भावः ।

**तमागतमित्यत्र । अनेनेति** । प्रियत्वनिरूपणेनेत्यर्थः । अन्यथा समानशीलत्वा-
१०-४३-१४ भावेन प्रियत्वं न स्यादिति भावः ।

**कच्चिदङ्ग इत्यत्र । परिशब्दार्थ**मिति । अन्यथा भगवत्प्रश्नस्य पश्चात्कृतस्य गौणत्वं
१०-४३-१६ स्यादिति भावः । **वैमनस्य**मिति कंसद्विष्टपुत्रस्थापनादित्यर्थः । सख्युर्गुण एव भासते न दोष इत्येतदर्थमाहुः **परमानन्द** इति ।

**दिष्ट्येत्यत्र । आमयरूप** इति । कंसशब्दस्य पादोपरिगतरोगवाचकत्वादिति
१०-४३-१७ भावः ।

**अप्यायास्यतीत्यत्र । अगमनमेवेति** । इतरस्फूर्तावेव गमनसम्भवादितिभावः ।
१०-४३-१९ **नित्यं निरीक्षितमिति** । भावेनेत्यर्थः । **प्रेमाधिक्यादिति** । भगवद्भक्त-सङ्गेन भावोद्रेकादित्यर्थः ।

१०-४३-२१ **स्मरतामित्यत्र । स्मृत एवेति** । सदानन्दत्वेन सर्वान्तरत्वादित्यर्थः ।

१०-४३-२३ **मन्ये कृष्णं चेत्यस्याभासे । विपरीतबुद्धेरिति** पुत्रत्वबुद्धेरित्यर्थः ।

१०-४३-२९ **तयोरित्थमित्यत्र । सहजः सम्बन्धो** गर्भस्थितिरूप इत्यर्थः ।

**युवामित्यत्र । स्वतन्त्रभक्तीति** । श्रवणादिरूपेत्यर्थः । **प्रमेयभक्तिरिति** ।
स्वरूपविषयिणीत्यर्थः । **नारायणशब्दोत्रेति** । नारं जीवसमूहस्तदयनं
१०-४३-३० यस्येति व्युत्पत्तेस्तथेत्यर्थः । **प्रमाणरूपोपीति** । गुरुत्वात्तादृशवाक्यहेतु-
त्वेन तद्रूपेत्यर्थः ।

**एतौ हीत्यत्र । एक एवेति** । ताभ्यां नन्दयशोदाभ्यां 'मन्ये कृष्णं च रामं चे'ति
वाक्यात्कृष्णो रामश्च प्रत्येकमेक एव ज्ञातो न तु कृष्ण एवाविष्टवेशि-
१०-४३-३१ भेदेन द्वाविति तथा ज्ञापनाय द्वावुद्दिश्य जगत्कारणत्वरूपमूलधर्मनिरूप-
णमित्यर्थः । **तुल्यतयेति** । गोपत्वेन तुल्यतया यो देहसम्बन्धस्तमित्यर्थः । **प्रापञ्चिकादिति** ।
लौकिकादभ्युदयफलाद्भगवद्दत्तस्याभ्युदयफलस्यापि विलक्षणत्वबोधाय विलक्षणपदेनाभ्युदय-
फलमुक्तमित्यर्थः । **ब्रह्म भगवानिति** । अक्षररूपेण पुरुषोत्तमरूपेण च लीलार्थमाविर्भूतं
कार्यमिवानयोरप्यभ्युदयनिःश्रेयसफलदानायैवंरूपेण प्रादुर्भावात्कार्यरूपत्वमिति शङ्का
स्यादिति भावः ।

**यस्मिन् जन इत्यत्र । निष्काममिति** । निष्कामं हि मनः आत्मगामि
१०-४३-३२ भवतीत्येवंज्ञानेपि निष्कामत्वे सिद्धे सतीत्यर्थः ।

**तस्मिन् भवन्तावित्यत्र । तादृश एवेति** 'यो यच्छ्रद्धः स एव स' इति वाक्या-
दुपासक उपास्यरूपो भवतीति गम्यते । तथा च भवदुपास्यस्य सर्वफलरूप-
१०-४३-३३ त्वेन भवतोपि सर्वफलरूपत्वमेव सम्पन्नमिति किमवशिष्टं फलेष्विति भावः ।
**सर्वमस्यान्नमिति** आत्मा चासौ हेतुश्चेति समासेनाखिलानामात्मत्वं हेतुत्वं चोच्यते भगवति । तथा च कार्यस्य कारणे लयात्तस्य तदन्नत्ववत्सर्वस्यापि भगवति लयेन तदन्नत्वमिति ततोनायासेनापेक्षितसर्वसिद्धिरिति भावः । **विकृतेपीति** । विराड्रूपप्रपञ्च इत्यर्थः । एतेन ब्रह्मादीनां तत्र कारणत्वेन प्रसिद्धानां तद्विभूतित्वेन तत्स्वरूपत्वमेवेति भावः । **अयमिति** । पुरुषो नारायणो न तु पुरुषोत्तमो विराड्रूपत्वहेतुत्वादित्यर्थः । पूर्वं नारायणशब्दवाच्ये श्रीनन्दादिपुष्टिमार्गीयभक्तभावविषयत्वेन पुरुषोत्तमत्वमुक्तमिति ज्ञेयम् । **कारणार्थमिति** । सेवादिकारणार्थमित्यर्थः । अन्यथा दुराराध्यत्वेन सेवाद्यसम्भवादुद्धारो न स्यादिति भावः । **अनेनेति** । स्वामिनः फलदानपरत्वसूचनेनेत्यर्थः । ननु सर्वेषामवतारेण फलसिद्धौ किमस्माकं सर्वभिन्नत्वादित्याशङ्क्याहुः । **लोकस्येति** । **रसत्वेति** । दर्शनादिना काव्यादिश्रवणेनेव तत्कालं जायमानो व्यभिचारिभावो रस इत्युच्यते तद्व्यावृत्त्यर्थमित्यर्थः । तथा च भवतां परोक्षेपि पूर्वस्थितभावाधिकभावदर्शनात्स्थायिभाव एवेति भावः । **पुत्रत्वेपीति** । भावो हि देवादिविषया रतिः । तथा च तत्र यथा मनुष्यत्वाप्रतीतिस्तथात्र केवलदेवत्वप्रतीतिर्गर्ग-

वाक्यानुमानाभ्यां या, सा दूरे, यतः पुत्रत्वेपि पुत्रो देव इत्याकारिकापि न प्रतीतिः, किन्तु केवलपुत्रत्वप्रतीतिरित्ययं भावः स्थायिभाव एवान्यवाक्यैरचाल्यत्वेन दृढतमत्वादत एव वात्सल्यानुरूपैव भगवति कृतिरेतेषां नान्येत्यर्थः । **भगवदागमनादि**ति । अन्ये हि भगवतः स्थाने गच्छन्ति ब्रह्मादयः, स भवद्गृहे लीलार्थमागत इति भवत्सु तथात्वं निश्चीयत इत्यर्थः ।

**आगमिष्यतीत्यत्र । वाक्यविरोधाभावादि**ति । स्वामिनीः प्रति समाधान-
वाक्यं तदिति नन्ददर्शनार्थं गोपिकाभ्यो गुप्ततया समागमेपि 'चिरा-
१०-४३-३४ यितानि'ति वाक्यं न विरुध्यत इत्यर्थः । **नन्दं द्रष्टुमि**ति । अत्रायमाशयः । वियोगो द्विविधः धर्मात्मको धर्म्यात्मकश्च । आनन्दस्य श्रुतावुभयरूपत्वेन निरूपणात्, तद्रूपस्य रसस्यापि द्वैविध्यमिति वियोगाख्यः स्वरूपात्मको ग्म्यः स्वामिनीभ्य एव दत्त इति नन्दादिषु धर्मरूपतद्दानमतस्तदर्थं पूर्वरूपेणागमनमावश्यकमेवान्यथा तेनान्यथाभाव एव स्यात्, वह्नितापेन वह्निभिन्नस्य दाहवत् । वह्न्यात्मकत्वे तु न दाहो वह्नेरिव । अत एव स्वामिनीनामर्थे नागमनं, तद्देहादीनां तद्रसात्मकत्वात् । 'प्रायः प्राणानि'त्यत्र प्राणधारणहेतुः प्रमेयबलमिदमेव ज्ञेयम् । तथा च नन्ददर्शनार्था समागमनार्थिकार्थोक्तिराचार्याणां समीचीनैवेति भावः । **मार्गानुरोधादि**ति भक्तिमार्गानुरोधादित्यर्थः । भक्तिमार्गे हि भगवता भक्ता रक्षणीया एवान्यथा मार्गेऽप्रवृत्त्या सर्वेषां तदुच्छेद एव स्यादिति तदनुरोधात् श्रीनन्दरक्षार्थं संयोगात्मकरूपेणागमनं, तत्र वियोगस्य धर्मात्मकत्वेन संयोगात्मकेन स्वरूपेण रक्षासम्भवात् । यत्र तु स्वरूपात्मकः स तत्रागमने प्रत्युत स्वरूपविरोधान्नाश एव स्यादिति भावः । अत एवाग्रिमाध्यायविवृत्तावुपदेशवाक्येषूक्तमाचार्यैः 'रतः परं सम्बन्धे सर्वदाहो भवेदि'ति ।

**हत्वेत्यत्र । अनेने**ति । निरपेक्षत्वेनैव भगवतो हेतुवादे प्रयोजनाभावाद्भगवान्
१०-४३-३५ प्रयोजनाभावयुक्त इत्यर्थः ।

**मा खिद्यतमित्यत्र । लौकिक** इति । **लौकिके** लोकरीत्या क्रियमाणे समा-
धाने श्रीनन्दादिभिर्भगवानेवापेक्ष्यत इत्युद्धवैरपि न रामनाम गृहीत-
१०-४३-३६ मित्यर्थः । **अन्नादिक्रियाणामि**ति । आनन्दमयत्वेन सर्वाधारश्चेद्भगवान्न स्यात्तदा न प्राणमनोविज्ञानादिसम्बन्धिनीनामुत्पत्तिस्थितिप्रलयरूपाणां क्रियाणामाधारव्यतिरेकेण स्थित्यसम्भव एव स्यादित्यर्थः ।

**युवयोरेवेत्यत्र । तत्राधिदैविक** इति । भगवान् पुत्रोप्याधिदैविकपुत्रः पूर्वोक्त-
रीत्या, परं भवतां स भौतिकः गोपत्वेन स्वात्मप्रकटनात् । तथा चान्यथा
१०-४३-४२ प्रतीत्यापि या मुक्तिः सा प्रमेयबलेन द्वेषिणामिवेति भावः ।

**एवं निशेत्यत्र । त्रिवारमित्येक** इति । प्रायश्चित्तपाते पुनर्दोहसम्भवात् ।
१०-४३-४४ 'अन्यां दुग्ध्वा पुनर्होतव्य'मिति श्रुतेरित्यर्थः ।

**उद्गायतीनामित्यत्र । तावन्मात्रे**ति भगवन्निष्ठसौन्दर्यादिमात्रपरत्व इत्यर्थः ।

१०-४३-४६ **कार्यकारणसहितमिति** । गाने स्वामिनीनां लौकिकवैदिकनिरपेक्षत्व-बोधनाय कार्यं द्युस्पर्श आत्मसुखानुभव आन्तरः, कारणं ध्वनिः तत्सहितं गानमत्र निरूप्यते। तत्रोदुपसर्गेण गानस्योच्चत्वस्याप्युक्तत्वाल्लोकसंकोचपरित्यागेन गानमिति लोकनैरपेक्ष्यमुक्तम्। द्युस्पर्शेनात्मसुखस्य लोकान्तरगतानामिव भावेन भगवल्लीला-विष्टानामनुभवान्मुक्त्यादिवैदिकतन्नैरपेक्ष्यमप्युक्तम् । तथा चैतादृग्गानश्रवणेन सर्वथा भगवत्परत्वनिश्चयादुद्धवस्य तासु भगवद्योग्यत्वस्फूर्त्या सन्तोषस्तत्कृतातिथ्यरूपो जात इति भावः। **अस्वर्ग्यत्वमिति** । लोककृतापकीर्तिश्रवणेनात्मसुखरूपत्वं गानस्य भासेतेत्याशङ्क्येत्यर्थः । **तस्यैवेति** । ध्वनेरेवेत्यर्थः । एतेन स्वरग्रहणेनैव यत्र गाने परमानन्द-सम्बन्धस्तत्रार्थरसादियुक्तगाने तत्सम्बन्ध इति किं वाच्यमिति सूचितम्। **तत्फलस्येति** ध्वनिफलस्य गानस्येत्यर्थः। **तेनैवेति**। गानेनैवेत्यर्थः। वेदे हि काण्डद्वये भुक्तिमुक्ती फल-त्वेन प्रतिपाद्येते, ते उभे अपि गान एव स्वरूपानुभवात्तन्मात्रास्फूर्तेः सिद्धे, इति तन्निर-पेक्षता चेत्यर्थः। **भगवदीयत्वेनेति**। ता हि भगवदीयाः, अतो न गानमानन्दसाधकतया कुर्वन्ति, किन्तु भगवद्भावापन्नास्तथा चानन्दो ध्वनावेव प्रतिष्ठितोऽतोऽन्येषामपि कृतपुण्य-पुञ्जानामेतद्गानद्वारैतदानन्दसिद्धिरिति भावः। एतदेवोक्तं 'यासां हरिकथोद्गीत'मित्यनेन। भगवदीयत्वमेवोपपादयन्ति। **वाचनिकेति**। मानसिककर्मणस्तु वियोगेन दुःखानुभवा-त्तत्सम्बन्ध इत्यर्थः। एतेन परोक्षे ये मनसि क्लिष्टा वचनेन गायन्ति क्रियाभिश्च लीला अभि-नयन्ति, उभाभ्यां च किञ्चित्सुखमनुभवन्ति यतो विरहे जीवनं ते भगवदीया इति निरू-पितम्। एतद्ध्वनेरेव सर्वामङ्गलनिरसनहेतुत्वोक्तेर्यादृगेतद्रूपं तादृक्सर्वान् गुणगानकर्तॄन् ज्ञापयन्त एव तन्महत्वमाहुः **भगवदीयानां गुणानामित्यादिना**। भगवदीयानां गुणानां सम्बन्ध्यपि ध्वनिरन्येषां गोपिकानां स्वामिनीनां गवां च सम्बन्धी अपेक्ष्यते सर्वत्र गान इति यथा भगवान् गोपीनां गवां चापेक्षकस्तथा भगवद्गुणा इत्यर्थः।

**भगवत्युदित** इत्यस्याभासे **निलीय** इति। नन्दगृह एव वार्तां कुर्वन् रहसि स्थित इत्यर्थः। रथस्तु जिज्ञासाहेतुर्न रात्रौ दृष्ट इति भावः। **गोपिकानामिति**।
१०-४३-४७ एतासां परमपुरुषार्थो वियोगस्वरूपात्मकत्वस्फूर्तिरूप इत्यर्थः। उद्धवस्य तु स्पष्ट एव पुरुषार्थः।

**किं साधयिष्यतीत्यत्र**। **भयादागत** इति। उद्धवत्वादुत्सवरूपत्वेन स्वज्ञापने स्वामिन्यो नान्यथा कथयेयुरिति निर्भयः । कृताह्निकः समागतः,
१०-४३-४९ अन्यथा विलम्बक्षोभदर्शने तासां नोचिते इति भावः।

इति श्रीमन्निजाचार्यतत्सूनुकरुणाबलात्। हरिरायेण लिखिता सुखदा दीपिका शुभा ॥१॥

**इति श्रीहरिरायविरचिता भ्रमरगीतप्रथमाध्यायसुबोधिन्या दीपिका समाप्ता।**

॥ श्रीभागवतपीयूषसमुद्रमथनक्षमाय नमः ॥

---

॥ श्रीहरिः ॥

श्रीहरिरायजीकृत—

# भ्रमरगीतीयपद्यसंशयोच्छेदः । १०-४४-५४

**ततस्ताः कृष्णसन्देशै**रित्यस्याभासे । **एवं तासां विलाप**मित्यादि । एवं 'हा नाथे'त्यादिप्रकारेण तासां स्वामिनीनां वियोगज्वरप्रलापरूपं भगवदा-
१०-४४-५४. काङ्क्षयातिदैन्येन प्रार्थनारूपं **श्रुत्वा** तन्निवारणाय योर्थः पूर्वं पत्रे उप-**दिष्टः सन्देशरूपः** सर्वथावियोगाभावप्रतिपादकवाक्यसमूहात्मा, यतस्तासां स्वस्वरूपस्यानुभवनीयप्रभुस्वरूपस्य च स्मृतिरभू'त्तत्सन्देशागतस्मृती'रिति, तमेवार्थं पुनरप्येकदा परिचयं प्राप्य विलापनिवृत्त्यर्थमुपदिष्टवानित्यर्थः । **तदनन्तरम**पीति । गाढवियोगेन विलापानन्तरमपीत्यर्थः । **एतत्सर्व**मिति विलापप्रार्थनादिकमित्यर्थः । **भगवदुक्तार्थाज्ञानादि**ति । भगवदुक्तस्य वियोगाभावप्रतिपादनरूपस्यार्थस्याज्ञानाद्विस्मरणादित्यर्थः । **वियोगे हि सती**ति । भगवदुक्तार्थस्मरणे वियोगस्यैवास्फूर्तेः तज्जन्यदुःखचित्तोद्धरणादीनां तु सुतरामस्फूर्तिरिति भावः । अतः पिण्डितमर्थमाहुः **अत** इति । यतोऽज्ञानादेवायं वियोगो न वस्तुतस्तदात्मकस्य प्रभोर्नित्यसंयुक्तत्वादतः **प्रथमोपदेशेन** प्राथमिकसन्देशकथनेन **अभिप्रायः** प्रभो'र्धारयन्त्यतिकृच्छ्रेणे'त्यादिवाक्यवक्तुर्यथाकथंचित्त्वया तासां मत्पत्रविलिखितसन्देशैर्जीवनं सम्पादनीयमिति य आशयः स सिद्धः । स्वस्वरूपस्मृत्या स्वनिकटभगवत्प्रीतिपरिज्ञानेन च किंचित्स्वास्थ्यसम्पत्तेः । परं न विरहज्वरविलापनिवृत्तिर्यतः परोक्षरीत्या शाब्दमेव ज्ञानमभून्न साक्षाद्धृदयदेशाविर्भूतस्य प्रभोरनुभवः, तस्य क्रमेण निष्पाद्यत्वात् । किन्तु येन दोषेण पूर्ववर्णितत्रिदोषरूपेण विरहेन्त्यावस्थाबोधकेन 'मधुप कितवे'त्यादिवाक्यान्युक्तानि, तस्य निवृत्तिस्तदासीदत एव जीवनाशासम्पत्तिश्च । सर्वथा तदनुभवे वियोगात्मकस्वरूपस्यैवानुभवान्न प्रार्थनादिकं भविष्यतीति भावः । अत एव सर्वमुद्धवस्य दोषनिरूपणं स्मारणेपि प्राप्तस्वरूपस्य तथानुभवाभावात्तूष्णीं स्थितिरेतत्पर्याये तु स्वरूपप्राप्तिस्फूर्तेरुद्धवस्योपकारं मत्वा तं पूजितवत्यः । एतेन वियोगः स्वरूपात्मको धर्मी तु स्थित एव धर्मात्मकस्तापकार्यो ( वियोग इत्यर्थः ) विलापरूपो निवृत्त इति सूचितम् । **निर्दुष्टानां भाव** इति । कुशलप्रश्नमारभ्य 'हा नाथे'त्यन्तैः श्लोकैरुक्त इत्यर्थः । **सोपि पदार्थ** इति । यः पूर्वोक्तभावनिरूपकपद्येषूक्तः कुशलप्रश्नादिस्वोद्धरणप्रार्थनान्तः पदार्थः सोपि पुनर्द्वितीयपर्याये पूर्वोक्तः'भवतीना'मित्यादिश्लोकैः स्वोपदेशस्मारणेन निवर्तित इत्यर्थः । ननु

प्रथमपर्याये कथमनिवृत्तः कथं चेदानीं निवृत्त इत्याकाङ्क्षायामाहुः **तदा भगवतीति**। यदा द्वितीयपर्याये पुनरुपदेशस्मारणं तदा तथेत्यर्थः । एवमुत्तररसात्मकस्वरूपप्राप्तिरेवोक्ता । तथा च धर्म्यपेक्षयापि धर्मस्य दुर्बलत्वात्संयोगात्मकस्वरूपस्यास्फूर्तेस्तद्विषयकप्रार्थनादिकमपि तद्धर्मरूपं निवृत्तमिति भावः । अत एव न वाक्यैरेव केवलैर्विरहज्वरनिवृत्तिर्मन्त्रैरिव किन्तु स्वरूपप्राप्त्या भेषजेनेवेति बोधयितुमाहुः **ज्वराभावे दृष्टमेव द्वारं जातमि**ति । **स्वात्मैवे**ति । तथा सति स्वात्मनि भगवत्त्वेन स्फूर्तौ तस्यावान्तरत्वेन न बहिर्भगवानस्तीति स्फुरणे क्व प्रार्थनादिसम्भावनेति भावः। ननु तथापि देहादीनां स्वीयत्वेन स्फूर्तौ बहिर्भगवत्स्फूर्तेरावश्यकत्वात् प्रार्थनादिकं भविष्यत्येवेत्याशङ्क्याहुः **अधोक्षज**मिति । इन्द्रियजन्यज्ञानागोचरो हि भगवानिति देहेन्द्रियाद्यध्यासेनात्मसंघातस्फूर्तौ स्वात्मनि तत्स्फूर्तिरेव न स्यादिति भावः । एतेन देहादीनां प्रभुसत्तया सत्तामात्रं न स्फूर्तिरपीति ज्ञापितम् । स्फूर्तौ तदर्थं प्रार्थना तदभावान्न सेति भावः। **अथवे**ति पूर्वस्मिन्कल्पे स्वात्मस्थाने भगवत्स्फूर्तिरुक्ता, इदानीं तु भगवानेव तदात्मरूपी जात इत्युच्यते । पूर्वं स्वात्मनि तत्स्फूर्तिरधुना स्वात्मनस्तत्त्वेन स्फूर्तिरिति विशेषः । एतेन स्वात्मा यथा देहादिभिः सर्वं करोति नान्यत्र तिष्ठति नान्यहितं चिन्तयति तथैतासु स्थित्वा भगवानेव सर्वं करोतीति निरूपितम् । तथा चैवं पदसंयोजनम् । **अधोक्षज**मिति विशेष्य**मात्मान**मितिविशेषणम्, तथा सत्यधोक्षजं भगवन्तमेतज्जीवात्मानमर्थाज्जातं ज्ञात्वा सर्वदैतद्भावाप्रापकत्वेनैतत्सर्वात्मना विद्यमानस्य विस्मृतकण्ठचामीकरन्यायेन ज्ञानात्मिकैव प्राप्तिरिति **प्राप्ता** इत्यर्थः। **अधोक्षजः** साकार इति । तत्संघातप्रवेशे कोशप्रतिमान्याय उक्तः । जीवस्य तु निराकारत्वान्न तथा स्थितिरिति भावः । ननु किं तदात्मानमाधारीकृत्य प्रभुः प्रकटोऽथवा तद्देहमिति सन्देहे 'तस्यैष आत्मा वृणुते तनुं स्वा'मिति श्रुतेस्तद्देह एव स्वस्थितिं कृतवान्प्रभुर्न तदात्मनि, पूर्णस्य साकारस्य तत्र स्थित्ययोग्यत्वादित्यभिप्रेत्याहुः **तासां संघातमध्य** इत्यादि । नन्वेवं सत्यात्मनः का स्थितिरिति सन्दिह्याहुः **स्वस्मिन्नन्तर्भाव्ये**ति। महाग्नौ तत्स्थाने समागते विस्फुलिंगस्येव तदात्मनः परमात्मन्यन्तर्भाव इत्यर्थः । अत एवोक्तं 'मयि ते तेषु चाप्यह' मिति । एतेनैतद्दशायां कदाचिद्भगवद्भावः कदाचिद्गोपिकाभाव उभयात्मकीभूय प्रभोस्तद्देहेष्वाविष्टत्वादित्युक्तम्। परन्तु वियोगात्मनि प्रभावन्तर्भूतत्वादेतदात्मनः संयोगास्फूर्तिरिति पूर्वमेव स प्रार्थनादिभावो निवृत्त एवेति ज्ञेयम् । नन्वेवं सति भगवद्भाव एव मुख्यतया भवेत् स्वात्मनस्तत्रैवान्तर्भूतत्वान्न गोपिकाभाव इत्यन्तर्निष्ठतैव सिध्येन्न वियोगानुभव इत्यरुच्या पक्षान्तरमाहुः **तत्प्रदेशे** वेति । जीवात्मस्थल इत्यर्थः । तथा च यथा काष्ठे वह्न्याविर्भावे काष्ठाकारे सत्येव वह्न्यात्मकता तथा जीवे भगवदात्मकत्वेपि न जीवगतसूक्ष्माकारनिवृत्तिः । कदाचिज्जलादग्निनिर्वापणे काष्ठसजातीयेङ्गालानामुत्पत्तिवत्कदाचिज्जीवभावोपि स्फुरतीति भावः ।

अन्यथा तूक्तदशैवोक्ता **स्यादिति** । ननु तथापि कदाचित्समयान्तरे पुनर्वह्निसम्बन्धे काष्ठाकारस्योपरतिरिव जीवलयः स्यादिति स दोषस्तदवस्थ इत्याशङ्क्य पक्षान्तरमाहुः **तत्रैव** वेति। तासां जीवात्मन्येवा**नन्दांशाभिव्यक्त्या** स्वानन्दमात्रमाविर्भाव्य सच्चिदंशो तासामेव । एतावदेव जीवस्वरूपमेव **स्वरूपत्वेन सम्पाद्य पश्चात्त**दपरोक्षतया हृदये अथवा **स्वप्रकाशत्वेने**न्द्रियाप्रकाश्यतया बाह्यत्वे**नात्मानं** भगवान् **ज्ञापितवा**निति तथा **ज्ञात्वे**त्यर्थः ।

सूक्ष्मरूपेण तत्सत्ता ज्ञानं चापि स्वरीतितः। आनन्दस्तत्र हि हरेरेष जीवो विलक्षणः ॥१॥
अत एवायमानन्दो नान्यजीवैर्हि लभ्यते। स्वामिनीनां प्रसादेन प्राप्यते नान्यथा स्वतः ॥२॥

**अन्यथे**ति। एवं भगवत आत्मत्वेनाविर्भूतस्य ज्ञानाभावे वाक्यमात्रात्**प्रतीति**रुपासनादाविवा**ध्यारोपन्यायेन** स्यात्तथा च नाधिनिवर्तनलक्षणोद्धवागमनप्रयोजनसिद्धिरिति भावः । ननु मास्तु भगवत आत्मत्वेन प्राप्तिः, शब्दमात्रमेव सन्देशरूपं विरहक्लेशौ निवर्त्यतामित्याशङ्क्याहुः **शब्दमात्र** इति । अयमर्थः । भगवता 'मद्वियोगाधि'मितिवचनादाधिरेव निवर्तनीयत्वेनोक्तो न तु वियोगस्तस्य रूपात्मकस्य फलत्वेन दत्तत्वात्तथा च स्वरूपस्याप्राप्तौ केवलशब्दैः सन्देशरूपैः स्वास्थ्ये विरहस्यैवाभावः स्यादित्यर्थः । एवं सति महदेवानिष्टमापद्येत परमफलानुभूतिप्रतिबन्धात् । अत एव 'ज्ञात्वा पाने महान् रस' इति स्वदत्तस्योत्तररसात्मनो ज्ञानार्थमेवोद्धवद्वारा भगवतस्तदुपदेशाग्रहः । स्वदत्तस्योत्तररसात्मकस्वरूपानुभवस्य तु प्रागपि सिद्धेः । अत एव ज्ञानोपदेशाज्ज्ञानात्मिकैव प्राप्तिरित्यभिप्रेत्यैव 'बर्हापीडे'तिपद्यव्याकृतावुक्तं 'मुख्यप्रापणार्थं चे'ति । नन्वेवं दत्ते तथाविधस्वरूपे तस्य विरहात्मकत्वाद्विलापादिकं सम्भविष्यत्येवेति कथं सन्देशैर्ज्वरस्यापि निवृत्तिरित्याशङ्क्याहुः **आत्मत्वा**दिति । भेदप्रतीतौ विलापादिकं नाभेदप्रतीतौ, यथार्धज्वलितकाष्ठे धूमादिः तथा वन्हिवत्तदात्मनि प्रविष्टत्वात्तदात्मकतैव सम्पन्नेतीतरस्फूर्त्यभावान्न विलापप्रार्थनादिकमिति भावः । ननु पुत्रादीनामात्मत्वेपि भेदेन प्रतीतिर्देहभेदात्तथात्रापि स्यादित्याशङ्क्याहुः **यत्र** इति । अंशतोपि भेदे प्रियालिङ्गितप्रिय इव संयुक्ततयापि भायात्, प्रकृते न तथेति सर्वांशेनाभेदो देहस्यापि स्फूर्त्यभावादित्यर्थः । एतादृशमहाफलप्राप्तौ साधनाभावमाशङ्क्य निःसाधनत्वादेतासां न कापि कृतिः किन्तु प्रभोरेव स्वत एतादृक् फलं दातुं गुणगानहेतुभूतहविर्योगजनकगोचारणार्थकगमनसदृशमथुरागमनम्, तत उद्धवप्रेषणेन स्वदत्तस्वस्वरूपज्ञापनं रसानुभववैशिष्ट्यायैतासां तु ज्ञानमात्रमिति ज्ञात्वेत्युक्तमित्याशयेनाहुः **कृतिर्भगवत एवे**त्यादि । **साक्षाद् गुरुत्वाभावेपी**ति । दूतत्वेन भगवदुक्तानुवादकत्वादित्यर्थः । **श्रूयतामित्यादी**ति । श्रवणं कर्तव्यमित्युपदेशस्य तूद्धवेनैव

कृतत्वादित्यर्थः । योगार्थमादाय साक्षाद्गुरुत्वमप्याहुः **निगरणार्थस्येति** । भगवदुपदिष्टस्याप्येताः प्रति साक्षादुद्धवेनैव कथनादित्यर्थः । पूजायामपि न दूतत्वेन पूर्ववत्सम्माननरूपा सा किन्तु ज्ञानोत्तरमन्यथोद्बोधयितुमाहुः **आत्मविदां** वेति । आत्मविदां भगवत्स्वरूपज्ञानवतां यत्**सम्माननं** सर्वत्र भगवद्बुद्ध्या तदत्र तथेत्यर्थः । पक्षान्तरमाहुः **अथवा पूर्वमिति** । **पूर्वं** उपदेशात्पूर्वं **भगवन्तं** तथा **ज्ञातवत्य** इत्यर्थः । **इदानीमिति** । उद्धवद्वारोपदेशे सति स्वात्मत्वेन ज्ञातवत्यस्तथा चोद्धवोपदेशस्यैव तत्कार्यमिति तद्धेतुभूते उद्धवे गते **अग्रे तथैवेति** यथा पूर्ववियोगरसात्मना भगवताऽत्यार्त्या **तदात्मिका**खिललीलारसानुभवं कुर्वन्त्य एव भविष्यन्तीत्यर्थः । **ननु** तदा किं तासु सिद्धमुपदेशेनेति चेत्तत्राहुः **ब्रह्मभावेति** । आत्मत्वेन ज्ञानेनोद्धवोपदेशेन आगन्तुकेन काष्ठेऽग्निभाव इव देहेन्द्रियादिषु भगवत्त्वसम्पत्तियोग्यता निरूपिता । मुख्यस्यात्मनस्तत्सम्बन्धे तदीयसंघातस्य योग्यस्य तत्सम्बन्धौचित्यादित्यर्थः । नन्वेवं योग्यतायां न ब्रह्मभावः कथमित्याकाङ्क्षायामाहुः **तच्चेति** । **तत्** पूर्ववद्रमणं **नाभिलषितम्**इच्छाविषयो न स्यादित्यर्थः । तथा च कर्मवासनेन ब्रह्मभावेन लये रमणेच्छाया एव शुकस्य शीघ्रलये कथाया इव प्रतिबन्धकत्वादिति भावः । ननु स्वात्मस्फूर्तिरहितानां रमणेच्छा च कथमुपपद्यत इति चेत्, सत्यम् । भगवानपि तद्भावरूपेण तत्रास्त इति तस्य तथाविधेच्छावत्त्वोपपत्तेः । अत एव 'स्त्रीभावो गूढ' इति 'बर्हापीडे'ति पद्ये प्रभुभिरभिहितम् । तथा च नेयमिच्छा लोकवद्देहाध्यासेन किन्तु स्त्रीभावात्मनः प्रभोस्तथाविधभावेनेति ज्ञेयमिति भावः । ननु कथं ज्ञायते तासामिच्छा परान्तःकरणस्य पराप्रत्यक्षत्वादित्याशङ्क्याहुः **इतीति** । इतिशब्दो हेतौ । इति हेतो**रुत्कटेच्छां** प्रभुसम्बन्धविषयिणीं **ज्ञापयितुं** तदीयस्य दूतत्वेनागत**स्योद्धवस्य पूजा निरूपिते**त्यर्थः । ब्रह्मभावयोग्यता फलितनानाभावाद्यनुत्पत्तिरिति बोध्यम् ।

अयोग्ये योग्यतां कुर्वन्नशक्ते शक्तिमीदृशीम् ।
अज्ञे विज्ञत्वमबले बलं कृष्णो विराजते ॥ १ ॥
निःसाधनधनं कृष्णस्तस्याप्यास्यं परं धनम् ।
धनेन तेन सधनं मां करोतु कृपाधनः ॥ २ ॥

**इति श्रीहरिरायोदितभ्रमरगीतीयपद्यसंशयोच्छेदः सम्पूर्णः ।**



श्रीकृष्णाय नमः ।

# दशमपूर्वार्धराजसप्रमेयप्रकरणनिबन्धः ॥

## श्रीमद्वल्लभाचार्यप्रणीतः ।



प्रमेयबलमासाद्य ततः सप्तभिरुच्यते ॥ १ ॥
आसक्तिर्यादवानां च दुष्टानां च वधस्तथा ।
प्रमेये सप्त भक्ता हि तावन्तश्चाऽपि विद्विषः ॥ २ ॥
देवकी वसुदेवश्च सर्व एव च यादवाः ।
आध्यात्मिकप्रकारेण द्वावेतौ परिकीर्तितौ ॥ ३ ॥
अधिदेवो गुरुः प्रोक्तः पुत्रदानात्स मोचितः ।
नन्दः पत्नीयुतश्चैव गोपिकाः कुब्जया युताः ॥ ४ ॥
अक्रूरः पाण्डवाश्चैव सप्तैते निःप्रपञ्चिताः ।
गजः पञ्च तथा मल्लः सप्तमः कंस उच्यते ॥ ५ ॥
भ्रातरस्तत्प्रसङ्गेन हता सप्तैव दोषतः ।
एतावानेव रूपे हि स्नेहद्वेषविनिर्णयः ॥ ६ ॥
जीवन्तो मुक्तिमायान्ति भक्ता द्विष्टा हताः पुनः ।
रूपं सर्वविमोक्षाय स्नेहासक्तिनिवारकम् ॥ ७ ॥
भयं यस्मात्तस्य वधः कारणं तत्पुरोदितम् ।

---

### श्रीमत्प्रभुचरणैः पुरुषोत्तमस्य दर्शिता निबन्धयोजना ।

अतः परं प्रमेयप्रकरणं सार्धत्रिंशद्भिर्विचारयन्तः समाख्याबीजमाहुः **प्रमेयबल**मित्यादि । तथा च प्रमेयभूतस्य भगवतो यद्बलं तद्बोधकत्वात् प्रमेयप्रकरण इति समाख्येत्यर्थः । सप्ताध्यायात्मकत्वे बीजमाहुः **प्रमेये सप्ते**त्यादि । उभयान् गणयन्ति **देवकी**त्यादिभिस्त्रिभिः । ननु कंसभ्रातरोऽष्टौ हता इति कथं सप्त इत्यत आहुः **भ्रातर** इत्यादि । तथा च तेषां वधस्य प्रासङ्गिकत्वान्न तेन वध्याधिक्यमित्यर्थः । नन्वत्र निरोधव्यत्वाद्भक्ता एव वक्तव्या द्वेषिनिरूपणस्य किं प्रयोजनमत आहुः **एतावा**नित्यादि सपादश्लोकं । तथा च रूपप्राकट्यस्य सर्वमोक्षार्थत्वात् प्रमेयबलसूचनार्थं तन्निरूपणमित्यर्थः । नन्वेवं सति यत्र कचिद्वक्तव्या, अत्रैव कुत उक्ताः, किञ्च साधनाभावे कथं विमोक्षोपि, इत्यत आहुः **स्नेहे**त्यादि । **पुरेति** सप्तमे 'गोप्यः कामाद् भयात्कंसः' इत्यत्र । **तदि**त्यस्याग्रिमार्धेन सह

---

१ तस्मात् ।

**अध्यायद्वितयेनैव बहिरन्तर्व्यवस्थया ॥ ८ ॥**
**ततः कालात्तु सर्वेषां भयहेतोर्निवारणम् ।**
**तेनैव सिद्धं माहात्म्यमासक्तः स्याद्भयादपि ॥ ९ ॥**
**एवं त्रिभिरिहाऽध्यायैरासक्तौ साधनं जगौ ।**
**स्निग्धानां सान्त्वनाभावे प्रतिबन्धो भवेदिह ॥ १० ॥**
**अतश्चतुर्भिर्भूतानां त्रिविधानां च सान्त्वनम् ।**
**कालजं सान्त्वने व्यर्थमतस्तद्विनिवारितम् ॥ ११ ॥**
**अज्ञाने सान्त्वनं युक्तं तेन द्वाभ्यां व्रजे जगौ ।**
**यशोदा वाथ नन्दो वा गोपिका वा यदा यदा ॥ १२ ॥**
**कृष्णासक्त्यैकहृदयास्तदाविर्भावमेति हि ।**
**बहिर्मुखदशायां तु न पश्यन्तीति दुःखिताः ॥ १३ ॥**
**अतः प्रबोध एवात्र कर्तव्यो न ततोऽधिकः ।**

---

श्रीमत्प्रभुचरणैः पुरुषोत्तमस्य दर्शिता निबन्धयोजना ।

योजना । उदितपदमत्राप्यनुषज्यते । तथा च स्नेहवृद्ध्यर्थमत्र निरूपणमित्यर्थः । ननु अत्र 'तत्र-प्रवयसोप्यासन् युवान' इत्यादिनिरूपणस्य किं प्रयोजनमत आहुः **तत** इत्यादि । तथा च माहात्म्यज्ञानपूर्वत्वं विना स्नेहस्य भक्तित्वं न स्यादिति पूर्वाङ्गसम्पत्तिबोधनाय तन्निरूपण-मित्यर्थः । ननु भयनिवृत्तेः स्नेहाङ्गत्वेपि भयस्य तद्विरोधित्वादन्यत्रैव निरूपणं युक्तं नात्रे-त्यत आहुः **आसक्त** इत्यादि । आसक्तिर्ह्येकतानत्वं, सैवात्र मोक्षं प्रति व्यापारः । तथा च सा यथा स्नेहात्तथा भयादपि, पेशस्कृद्रुद्धे कीटे तथा दर्शनात्, अत्र स्कन्धे सैव प्रतिपाद्यतेऽतो भयस्य स्नेहविरोधित्वेपि कथनमत्र नायुक्तमित्यर्थः । एवं चात्रावान्तरप्रकरणद्वयमन्यत्सि-ध्यतीत्याहुः **एवमित्यादि** सार्धेन । इहेति, आसक्तौ, **त्रिविधानामिति** तामसराजस-सात्त्विकानाम् । ननु माहात्म्यज्ञापनाय क्रियमाणस्य कालनिवारणस्यात्राध्याये किमिति निरूपणमित्यपेक्षायामाहुः **कालजमित्यादि**, सान्त्वने कृते कालजं दुःखं चेत्स्यात् तदा सान्त्वनं व्यर्थमिति योजना, कालजे सान्त्वनमिति वा पाठः । नन्वासक्तिप्रतिबन्धाभावो हि सान्त्वनप्रयोजनं, सा तु पूर्णा अनपनोद्या चेत्सान्त्वनस्य किं प्रयोजनमित्याकाङ्क्षायामाहुः **अज्ञान** इत्यादि । **जगाविति** भगवत्स्थित्यज्ञानं जगौ, तथा च स्थित्यज्ञाने दोषारोप-सद्भावात्तदभावार्थं सान्त्वनं युक्तमित्यर्थः । ननु बहुधापि सान्त्वने कृते दोषारोपो न निवारयितुं शक्यः, शब्दापेक्षया लोके प्रत्यक्षस्य बलिष्ठत्वादित्याकाङ्क्षायां सान्त्वनस्य युक्तत्वं तत्कार्यनिरूपणद्वारा बोधयन्ति **यशोदा** चेति द्वाभ्याम् । **ततोधिक** इति बहिः-

---

१ कालाद्धि । कालात्तु कलहः ।

लोकवत्तु व्यवस्थानं[1] लोकधर्मविनाशनः ॥ १४ ॥
नन्दादीनां न कर्तव्यः पिष्टपेषो न युज्यते ।
प्रपञ्चपातने सक्तास्ते कृष्णस्य न सर्वथा ॥ १५ ॥
अन्तर्मुखे त्वाविरासीत्ततो बोधनमुत्तमम् ।
चौर्यादिकं यथापूर्वं प्रपञ्चस्मृतिशान्तये ॥ १६ ॥
तथा बहिर्मुखत्वेपि दुःखं यच्छत्यबोधतः ।
मथुरास्था नाधुनापि निःप्रपञ्चा न सर्वथा ॥ १७ ॥
अतः प्रपञ्चधर्माणां संग्रहस्तां विचार्य हि ।
जीवाः स्वभावतो दुष्टा दोषाभावं नयन्ति हि ॥ १८ ॥
सर्वमेव स्वसम्बन्धात्तथा कृष्णेपि सङ्गताः ।
प्रपञ्चविस्मृतिः पूर्वं दोषाभावाय कारिता ॥ १९ ॥
कृष्णविस्मरणं तत्र न युक्तमिति बोधनम् ।
प्रबोधे दोषहानिः स्यादात्मत्वे सुतरामपि ॥ २० ॥

---

श्रीमत्प्रभुचरणैः पुरुषोत्तमस्य दर्शिता निबन्धयोजना ।

स्वानुभवः, तस्याः कर्तव्यत्वे हेतुमाहुः **लोकव**दित्यारभ्य **ने**त्यन्तमतो बहिः स्वानुभावनरूप**पिष्टपेषो** न युज्यते इत्यर्थः । अयुक्तत्वमुपपादयन्ति **प्रपञ्चे**त्यादि, **न सर्वथे**ति, न प्रपञ्चविस्मृतिपर्यन्तं, तथा च बहिरनुभवे तावत्पर्यन्तत्वाभावात्तादृशमनुभावनं न युक्तमित्यर्थः । नन्वेवं सति क्रूरत्वमापद्येतेत्यत आहुः **अन्तरि**त्यादि । **आविरासी**दिति आविरास्ते । पक्षे प्राप्तमपि तन्निरस्यन्ति **चौर्यादिक**मित्यादि । तथा चात्र क्वापि दोषलेशाभावात्कापि लीला नायुक्तेत्यर्थः । ननु यथा व्रजस्थानां प्रपञ्चनिवृत्त्यर्थं भगवता यत्नो भूयान् क्रियते तथा मथुरास्थानामर्थे कुतो न क्रियते निरोधव्यत्वस्यात्रापि तुल्यत्वादित्याशङ्कायामाहुः **मथुरास्था** इत्यादि । **नाधुना**पीति सम्यगासक्ता इति शेषः, तत्र गमकं **निःप्रपञ्चे**त्यादि । अतो हेतोस्तामपूर्णासक्तिं **विचार्य प्रपञ्चधर्माणां** पुत्रत्वादीनां **सङ्ग्रहः** स्वस्मिन् प्रत्यायनं भगवता हि निश्चयेन कार्यते इति शेषः । हि यतो हेतोः **स्वभावतो दुष्टा जीवाः** दोषसत्तामेव प्रापयन्ति, तत्प्रसिद्धं महाभारते राजधर्मेषु बभ्रूग्रसेनादिकर्तृकं, तथाधुनापि ज्ञातव्यम्, तथा च पूर्णासक्तेरजातत्वात् नेदानीं तत्प्रपञ्चाभावयत्नः, किन्तु व्रजस्थानामेवार्थे इत्यर्थः । ननु व्रजस्थानां भगवदासक्तिप्रपञ्चविस्मृत्योः पूर्णतया जातत्वेन कार्यस्य पूर्तेः पुनः प्रबोधस्य किं प्रयोजनमत आहुः **प्रपञ्चे**त्यादित्रयं, **अत्रे**ति विप्रयोगदशायां **दोषहानि**रिति सात्त्विकभावप्रतिबन्धकदोषहानिः । **आत्मत्व** इति ज्ञान इति शेषः ।

---

१ व्यवस्थायाम् ।

**तदुद्धवेन गुरुणा बोधयामास केशवः ।**
**य एव स्यादुपायोऽत्र स कर्तव्यो न चेतरः ॥ २१ ॥**
**अतो बोधनमत्रोक्तं न तु साक्षात्स्वयं गतः ।**
**आगतः सर्वदैवाऽस्ते सदा चाऽयाति सत्यवाक् ॥ २२ ॥**
**इदं च बोधनात्सिद्धे दोषोपि विनिवर्तते ।**
**दोषश्चतुर्धा टीकायां विस्तरेण प्रपञ्चितः ॥ २३ ॥**
**तत्क्षान्तिश्चापि बोधेन तेन नात्रोच्यते स्फुटः ।**
**कुब्जा तु राजसी नारी तथाक्रूरश्च यादवः ॥ २४ ॥**
**उपलक्षणभावेन द्वावेतौ विनिरूपितौ ।**
**कुन्ती च पाण्डवाश्चैव सात्त्विकौ पूर्ववन्मतौ ॥ २५ ॥**
**धृतराष्ट्रकृते दुःखे तस्यापि स्यात्तु बोधनम् ।**
**स तु सात्त्विकवर्यो हि पुत्रस्नेहात्तथाकरोत् ॥ २६**
**अतः प्रबोध उचितस्तस्याऽपि स्यान्न संशयः ।**
**एवं चतुर्भिरध्यायैः सान्त्वनं विनिरूपितम् ॥ २७ ॥**
**प्रमाणेऽपि प्रमेयेऽपि भगवान् सस्वरूपधृक् ।**
**क्रमेणैवाऽत्र संयोज्यस्तेन नोक्तो विशेषतः ॥ २८ ॥**

---

श्रीमत्प्रभुचरणैः पुरुषोत्तमस्य दर्शिता निबन्धयोजना ।

**तदि**तितस्मात् आत्मत्वं वा, तथा च स्वाविस्मरणार्थं सात्त्विकभावप्रतिबन्धनिवृत्त्यर्थं प्रबोधोपदेशनमित्यर्थः । ननु यथेदं बोधनेनाभूत्, तथा स्वतोपि स्यादिति स्वयमेव कुतो नागादित्यत आहुः **य एव** इत्यादि । ननु अनागमने 'एष्याम' इति 'आयास्य' इति वाक्यबाधप्रसङ्गः इत्यत आहुः **आगत** इत्यादि । **अयमि**त्यस्य पूर्वार्धेन सम्बन्धः । **इदमिति** पाठश्चेत्तदोत्तरार्ध एव सम्बन्धः । एवं सार्धैर्द्वादशभिः तामसानां सान्त्वनं समर्थितम् । राजसानामाहुः **कुब्जे**त्यादि । **निरूपिता**विति एकस्मिन्नध्याय उक्तौ । सात्त्विकानामाहुः **कुन्ती**त्यादि । **पूर्ववदि**ति निरोधव्यत्वात्सान्त्वनीयौ । ननु तत्सान्त्वने कर्तव्ये धृतराष्ट्रज्ञानोपदेशः कुत उच्यत इत्यत आहुः **धृते**त्यादि । अयं चरणः पूर्वत्रापि सम्बध्यते, तस्य दुःखहेतुतायाः वारणीयत्वात्तस्याप्युपदेश इत्यर्थः । ननु योग्यताभावे कथं स इत्यत आहुः **स** त्वित्यादि । **तथाकरोदि**ति राजसभावेनाकरोत् । **अत** इति राजसभावस्य निवर्तनीयत्वात् । **न संशय** इति प्रथमस्कन्धे तन्मुक्तेरप्युक्तत्वात् तथेत्यर्थः । प्रकरणार्थं निर्णीयोपसंहरन्ति **एव**मित्यादि । नन्वत्राध्यायार्थो विशेषतः कुतो नोक्त इत्यत आहुः **प्रमाणे-**

---

१ स्ति । २ स्नेहं ।

अलौकिकेन भावेन यावद्धि भगवत्कृतः ।
स पूर्वार्धो हरेः स्वस्य धर्मस्तादृश उच्यते ॥ २९ ॥
लोकधर्मं पुरस्कृत्य यच्चकार यदूद्वहः ।
अस्वभावादुत्तरार्द्धं कार्यं तत्तु प्रकीर्तितम् ॥ ३० ॥
प्रमेयं च तथा चार्धं राजसप्रक्रियार्धतः ।
एवं प्रमेयबलतः कृष्णासक्ता अभवन्मुदा ॥ ३१ ॥

---

श्रीमत्प्रभुचरणैः पुरुषोत्तमस्य दर्शिता निबन्धयोजना ।

**पीत्यादि,** । अत्र पूर्वार्धमपि समाप्तम् । तत्र बीजमाहुः **अलौकिकेने**त्यादि । स्फुटमन्यत् । एवं सार्धत्रिंशद्भिः प्रमेयप्रकरणं विचारितम् ॥

**इति श्रीमत्प्रभुचरणैः पुरुषोत्तमस्य दर्शिता दशमपूर्वार्ध-राजसप्रमेयप्रकरणनिबन्धयोजना ।**



## पुरुषोत्तमनामसहस्रस्थैतत्प्रकरणभगवन्नामानि ॥

(८९१-९१५) सद्यः कुवलयापीडघाती चाणूरमर्दनः ॥ ३

लीलाहतमहामल्लः शलतोशलघातकः ।
कंसान्तको जितामित्रो वसुदेवविमोचकः ॥ १ ॥
ज्ञाततत्त्वपितृज्ञानमोहनामृतवाङ्मयः ।
उग्रसेनप्रतिष्ठाता यादवाधिविनाशकः ॥ २ ॥
नन्दादिसान्त्वनकरो ब्रह्मचर्यव्रते स्थितः ।
गुरुशुश्रूषणपरो विद्यापारमितेश्वरः ॥ ३ ॥
सान्दीपनिमृतापत्यदाता कालान्तकादिजित् ।
गोकुलाश्वासनपरो यशोदानन्दपोषकः ॥ ४ ॥
गोपिकाविरहव्याजमनोगतिरतिप्रदः ।
समोद्धवभ्रमरवाग् गोपिकामोहनाशकः ॥ ५ ॥
कुब्जारतिप्रदोऽक्रूरपवित्रीकृतभूगृहः ।
पृथादुःखप्रणेता च पाण्डवानां सुखप्रदः ॥ ६ ॥

## त्रिविधनामावलीस्थराजसप्रमेयप्रकरणीयभगवन्नामानि ।

कुवलयापीडघातकाय नमः ॥ १ ॥ गजदन्तवरायुधाय नमः ॥ २ ॥ निखिलजन-मनोनयनाल्हादकाय नमः ॥ ३ ॥ सर्वरसाविर्भावकाय नमः ॥ ४ ॥ निखिलकामिनी-प्रेमावलोकिताय नमः ॥ ५ ॥ चाणूरादिमहामल्लदैत्यगर्वनिबर्हणाय नमः ॥ ६ ॥ कंसघात-काय नमः ॥ ७ ॥ वसुदेवदेवकीदुःखनिवारकाय नमः ॥ ८ ॥ यदुकुलनलिनीविकाशकाय नमः ॥ ९ ॥ कालदुःखनिवारकाय नमः ॥१०॥ प्रदर्शितसदाचाराय नमः ॥११॥ सांदीपनि-मृतापत्यदात्रे नमः ॥ १२ ॥ नन्दादिज्ञानबोधकाय नमः ॥ १३ ॥ यशोदास्नेहरक्षकाय नमः ॥ १४ ॥ गोपिकादिलौकिकभावदोषदूरीकरणाय नमः ॥ १५ ॥ उद्धवादिमध्यम-भावबोधकाय नमः ॥ १६ ॥ स्वनिष्ठमनोदोषनाशकाय नमः ॥ १७ ॥ कुब्जादिमनोरथ-पूरकाय नमः ॥ १८ ॥ अक्रूरादिभक्तसन्मानहेतवे नमः ॥ १९ ॥ भक्तहितचिन्तकाय नमः ॥ २० ॥ पाण्डवस्थापकाय नमः ॥ २१ ॥ कुन्तीप्रीतिहेतवे नमः ॥ २२ ॥ प्रौढलीलाव-बोधकाय नमः ॥ २३ ॥ भक्तपक्षबोधकाय नमः ॥ २४ ॥ धृतराष्ट्रज्ञानबोधकाय नमः ॥ २५ ॥ इच्छावादस्थापकाय नमः ॥ २६ ॥ मायाप्रवर्तकाय नमः ॥ २७ ॥ सर्वाभिवन्दितचरणाय नमः ॥ २८ ॥

# अथ दशमस्कन्धार्थराजसप्रमेयप्रकरणानुक्रमः ।

रङ्गोत्सवे कुवलयापीडयुद्धविघातनम् ।
दर्शनं रामकृष्णस्य पौराणां प्रेमदर्शनम् ॥ २६ ॥
मल्लानां निधनं रङ्गे कंसस्य सह बन्धुभिः ।
पित्रोश्च सान्त्वनं सर्वसुहृदां परितोषणम् ॥ २७ ॥
उग्रसेनाभिषेकश्च नन्दादिव्रजप्रेषणम् ।
ईषद्द्विजातिसंस्कारः पठनञ्च गुरोर्गृहे ॥ २८ ॥
मृतपुत्रप्रदानं च गुरोः पञ्चजनार्दनम् ।
पुनरागमनं शौरेर्मधुपुर्यां महोत्सवः ॥ २९ ॥
उद्धवप्रेषणं गोपीविलापपरिसान्त्वनम् ।
कुब्जारतिस्तथाऽक्रूरप्रेषणं गजसाह्वये ॥ ३० ॥
पाण्डवेषु च वैषम्यं धृतराष्ट्रस्य बोधनम् ।
इत्येवं दशमस्कन्धपूर्वार्धे विनिरूपितम् ॥ ३१ ॥

**इतिदशमस्कन्धराजसप्रमेयप्रकरणं समाप्तम् ।**

---

# अथ निबन्धान्तर्गतराजसप्रमेयनिबन्धकठिनांशविवेचनम् ।

अग्रे चतुश्चत्वारिंशाध्यायार्थोक्तौ 'जीवाः स्वभावतो दुष्टा' इत्यादि 'स्फुट' इत्यन्तम् । जीवाः स्वार्थपरायणाः स्वार्थे सिद्धे सर्वपरित्यागेन तज्जनितदुःखमप्यनुभूय स्वार्थसाधकं नोपकुर्वन्ति, नापि स्मरन्ति, इति जीवगतो दोषः कृष्णसङ्गताभिर्गोपिकाभिः कृष्णे आरोप्यते । यथा वा ज्वराभिभूतरसनेन्द्रियेण सितायां कटुकत्वारोपः, तादृशदोषाभावाय पूर्वं प्रपञ्चविस्मृतिः संयोगलीलया कारिता । निरन्तरं भक्ताधीनतया स्थितो न स्वार्थमात्रपरायण इति भक्तैर्ज्ञातः, स्वरूपलीलारसनिमग्नानामन्यविस्मरणान्महारसत्वमपि भगवतो ज्ञातं, परं भगवतो रसात्मकस्य द्विदलरूपत्वेन यदा भगवान् द्वितीयं दलमनुभावयति तदा तस्य तीव्रत्वेन सोढुमशक्यत्वाज्ज्ञापितोपि दोषाभावे दोषः पुनः प्रत्यवतिष्ठते, स्मरणेन च दुःखं जन्यत इति स्मरणमेव न कर्तव्यमिति भक्तानां भाति, तत्सर्वमुपदेशेन निवार्यते । वस्तुतस्तु भगवानात्मा सर्वाश्रयः भक्तवश्यः सत्यवाक्, अतस्त्यक्त्वा नैव गच्छतीति बोधेन पूर्वदोषनिवृत्तिः । संयोगलीलायां प्रकटरूपस्तु देहेन्द्रियादिगामी, विरहे निरन्तरं स्मृतस्तु मनोघर्षणेन मनोनिवृत्त्याऽऽत्मगामी भवतीति दूरस्थित्यभिप्रायज्ञापनेनापि पूर्वदोषनिवृत्तिः । एतदेवोक्तं 'जीवाः स्वभावत' इत्यादिभिः षड्भिः श्लोकैः ।

**इति श्रीनिबन्धकठिनांशविवेचनम् ।**

---

# श्रीगोकुलरायभट्टकृतदशमपूर्वार्धराजसप्रमेयप्रकरणाध्यायार्थः ।

राजसप्रकरणान्तर्गतप्रमेयप्रकरणे भक्तानामासक्तिप्रतिबन्धकबाह्यभयनिवारणार्थं कृतस्य कुवलयापीडवधस्य गजदन्तवरायुधार्थकत्वेनैश्वर्यबोधकत्वात् दशविधरसविशिष्टस्वरूपप्रदर्शनस्यापि ऐश्वर्यबोधकत्वाद् दर्शनमात्रेण प्रबुद्धसंस्कारैः लोकैः परस्परतद्गुणप्रकाशकवार्ताकरणस्यापि ऐश्वर्यबोधकत्वादैश्वर्यनिरूपणं चत्वारिंशेध्याये ॥ ४० ॥

राजसप्रकरणान्तर्गतप्रमेयप्रकरणे भक्तानामासक्तिप्रतिबन्धकान्तर्भयनिवारणार्थं कृतस्य मल्लकंसादिवधस्य केवलवीर्यबोधकत्वाद्वीर्यनिरूपणमेकचत्वारिंशेध्याये ॥ ४१ ॥

राजसप्रकरणान्तर्गतप्रमेयप्रकरणे मातापित्रोर्विमोचनस्य उग्रसेनराज्यदानस्य सर्वयादवप्रत्यानयनस्य नन्दादिप्रतियापनस्य लब्धसंस्कारत्वस्य यशोबोधकत्वात्कालभयस्य भगवदासक्तिहेतुत्वेन आसक्तेषु यादवेषु कालगुणजरानिवृत्तेर्गुरोर्मृतपुत्रानयनेन साक्षात्कालनिवृत्तेश्च यशोबोधकत्वाद् यशोनिरूपणं द्विचत्वारिंशेध्याये ॥ ४२ ॥

राजसप्रकरणान्तर्गतप्रमेयप्रकरणे आसक्तिप्रतिबन्धाभावाय स्निग्धानां सान्त्वननिरूपणप्रस्तावे भगवतो व्रजस्थप्राणगमनरूपापत्तिनिवारणोद्योगकथनाद् व्रजं गतस्योद्धवस्यापि श्रीमत्त्वकथनाद् व्रजवर्णनस्यापि श्रीनिरूपकत्वादुद्धवसमागमे नन्देन दावाग्न्यादिमृत्युभ्यो रक्षितृत्वस्य स्मरणात्, उद्धवेनापि अन्तर्मुखत्वे भगवत्स्थितिबोधनात्, लौकिकसम्बन्धनिराकरणाद् भगवतः सर्वरूपत्वकथनाच्चान्ते भगवच्छ्रीरूपाणां गोपिकानां निरूपणाच्च श्रीनिरूपणं त्रिचत्वारिंशेध्याये ॥ ४३ ॥

राजसप्रकरणान्तर्गतप्रमेयप्रकरणे आसक्तिप्रतिबन्धाभावाय स्निग्धानां सान्त्वननिरूपणप्रस्तावे भगवति मानासूयादिदोषाणां ज्ञाननिवर्त्यत्वेन पूर्वं दोषनिरूपणस्य ज्ञानोपयोगित्वाद् उद्धवे भगवदुपदिष्टज्ञानस्य विद्यमानत्वेन गोपिकोक्तदोषाणां गुणत्वेनैव ज्ञानाद् उद्धवेनोपदेशे वियोगाभावसर्वाश्रयत्वज्ञानमयात्मत्वबोधनाद् 'यत्त्वहमि'त्यादिना विरहसामयिकभगवदभिप्रायबोधनाच्च निरन्तरं व्रजभक्तसङ्गेन तादृग्भक्तिकारणस्य भक्तभावज्ञानस्य उद्धवेपि जातस्य उद्धवोक्तवचनैर्गोपीनमस्कारान्तैरवगमाज् ज्ञाननिरूपणं चतुश्चत्वारिंशेध्याये ॥ ४४ ॥ एवं तामसानां सान्त्वनम् ।

राजसप्रकरणान्तर्गतप्रमेयप्रकरणे आसक्तिप्रतिबन्धाभावाय स्निग्धानां सान्त्वननिरूपणप्रस्तावे कुब्जासमागमस्य कामहेतुकत्वेन तस्यै कामवरप्रदानेन औदासीन्यबोधनात्, अक्रूरसमागमस्यापि अन्यत्र प्रेषणार्थकत्वेन औदासीन्यबोधकत्वात्, अक्रूरस्तुतौ

मायानिवृत्तेर्वैराग्यकार्यस्य प्रार्थनाच्च वैराग्यनिरूपणं पञ्चचत्वारिंशेऽध्याये ॥ ४५ ॥ एवं राजसानां सान्त्वनम् ।

राजसप्रकरणान्तर्गतप्रमेयप्रकरणे आसक्तिप्रतिबन्धाभावाय स्निग्धानां सान्त्वननिरूपणप्रस्तावे कुन्तीस्तुतौ भक्तशरणत्वस्य स्वरूपधर्मस्य बोधनात्, अक्रूरविदुराभ्यां कुन्तीपाण्डवसान्त्वनानन्तरं अक्रूरोपदिष्टेन धृतराष्ट्रेण पाण्डवरक्षाया अकरणस्य भूभारहरणहेतुत्वेन धर्मिकार्यत्वात् धर्मिनिरूपणं षट्चत्वारिंशेऽध्याये ॥ ४६ ॥ एवं सात्त्विकानां सान्त्वनमिति दशमे पूर्वार्धम् ।

---

# गोष्ठिशालरामचन्द्रभट्टात्मजघनश्यामभट्टकृतप्रकरणविभागसूचिका ।

अतः परं प्रमाणैः प्रमितिविषयीभूतप्रमेयरूपभगवद्बलबोधकत्वात् प्रमेयप्रकरणत्वमस्यात्रापि सप्तभिरध्यायैर्निरूपणम् । षडध्याया धर्मनिरूपकाः सप्तमश्च धर्मिनिरूपकः । तत्र प्रथमे कुवलयापीडवधरूपमैश्वर्यम्, द्वितीये चाणुरादिवधकंसवधरूपं वीर्यम्, तृतीये उग्रसेनाय राज्यदानं यशः, चतुर्थे गोकुलस्थापन्निवारकोद्योगरूपं श्रीकार्यम्, पञ्चमे 'भवतीनां वियोगो मे' इत्यादिना ज्ञानकार्यम्, षष्ठे कुब्जाऽक्रूरादिगृहगमनं भक्तकृपालुत्वरूपं तदतिरिक्तासक्त्यभावरूपं वैराग्यम्, सप्तमे धृतराष्ट्रोऽक्रूरोपदिष्टोऽपि पाण्डवरक्षणं न कृतवान्, इदं भूभारहरणमूलत्वाद्धर्मिकार्यम् ।

**अत्र पूर्वार्धं प्रमेयप्रकरणं च समाप्तम् ।**

---

श्रीकृष्णाय नमः ।

श्रीश्यामलात्मजश्रीव्रजराजकृता

# त्रिचत्वारिंशाध्यायसुबोधिनीविवृतिः ॥

श्रीवल्लभो जयति भक्तहितैकबन्धुः ।

व्रजसीमन्तिनीनेत्रमीननीरनिधिः प्रभुः ।
करोतु शिशिरं मेऽन्तः स्वविलासतरङ्गितैः ॥ १ ॥
स्वीयापराधतूलाग्निर्व्रजेशरतिदीपकः ।
स्वाचार्यचरणाम्भोजरेणुः स्वीयं करोतु माम् ॥ २ ॥
श्रीविट्ठलपदाम्भोजपरागघनमोदतः ।
स्वाचार्यविवृतान्भावान्वर्णयामि यथामति ॥ ३ ॥
पुरुषोत्तमवाक्यानां भावो यद्यपि दुर्घटः ।
तथापि तत्कृपाधाष्ट्र्यं तरलीकुरुते मनः ॥ ४ ॥

ननु व्रजस्य नित्यत्वात्तत्र भगवल्लीलादीनां च नित्यत्वाद्भगवतोऽपि तत्र नित्यस्थितिरूपत्वादुद्धवप्रेषणमप्रयोजनकमिव भातीत्याशंकानिराकरणमध्यायार्थोक्त्यैव कुर्वन्ति । **त्रिचत्वारिंशकेऽध्याय इति** । अस्मिन्नध्याये **यशोदानन्दयोः स्वस्थित्यैव निरोधो** निरूप्यत इत्यर्थः । पूर्वमुक्तोपीह विशेषेण निरूप्यत इति भावः । यतः स्वस्थित्यैव तयोर्निरोधनात् निरोधस्य कृतत्वादित्यर्थः । विशेषेण निरूपणं तु भगवतो मथुरादिष्वगमनेनेति भावः । एतज्ज्ञापनार्थमेव श्रीमदुद्धवप्रेषणं च । पूर्णपुरुषोत्तमस्तु व्रजान्न निर्गत एव । मथुरादिलीला तु प्रद्युम्नांशेनैव । अत एव श्रीशुकैरुक्तम्, 'ता निराशा निववृतुर्गोविन्दविनिवर्तने । विशोका अहनी निन्युर्गायन्त्यः प्रियचेष्टित'मिति । हीति युक्तश्चायमर्थः । भगवदासक्तियुक्तानां भगवन्तं विना क्षणमपि स्थितिर्न भवति । भगवानत्राविर्भूय यथाक्रमं निरोधं कृतवांस्तथैव निरूप्यत इति पूर्वं **यशोदानन्दयोर्निरोधो** निरूप्यत इत्यर्थः । पश्चाच्च गोपीनां निरोधो निरूप्यत इत्याहुः **गोपिकानामिति** ।

**ततो** यशोदानन्दनिरोधनिरूपणानन्तरमेतदध्यायसमाप्तिमारभ्याग्रिमाध्यायेन गोपिकानां निरोधो **वाच्य** इत्यर्थः । अनेन निरोधकथनेन उक्त'मायास्य इति दौत्यकै'रित्यादि समर्थितामिति भावः । ननु व्रजरत्नासु भगवतो दूतादिवाक्यैनैतादृक्कथनमप्यनुचितमित्याशंक्याहुः **राजसत्वं चेति** । राजसत्वं तत्प्रेषणेन सिद्धमित्यर्थः । अन्यथा प्रेमविरुद्धमेव प्रेषणं स्यात् । अत एव क्वचिदुक्तं 'राजा मित्रं केन दृष्टं श्रुतं वे'त्यादि । यद्यपि भगवतो

न तथा, तथापि राजसप्रकरणत्वात्तथेति भावः । तेन **गुणोत्कर्षश्च रूप्यते** न तु भगवान् तथेति भावः । राजसगुणोत्कर्षख्यापनार्थं चोद्धवप्रेषणमत एव व्रजभूषणाभिरग्रिमाध्याये 'पित्रोः प्रियचिकीर्षये'त्यनेन राजसगुणख्यापकमेव तदागमनं निरूपणीयम् । यद्वा **गुणोत्कर्षो** व्रजभाग्यसीमन्तिनीगुणोत्कर्ष इति भावः । अयमेवार्थश्चकारेण ज्ञाप्यते । त्रिचत्वारिंशाध्यायार्थसन्दर्भे श्रीमदुद्धवप्रेषणप्रयोजननिरूपणे **स्वस्यापि गमनमित्यादि** । अत्रेदं प्रद्योत्यते । **कार्यस्य** भक्तिमार्गपुरुषार्थात्मकविप्रयोगानुभवस्यावश्यकत्वादित्यर्थः, पुरुषोत्तमस्वरूपेण व्रजे नित्यस्थितिरेवोच्यते, लौकिकन्यायेनात्रागतस्वरूपस्मृतिमात्रेण श्रीनन्दादीनां विप्रयोगानुभवो भवति, स चानेन स्वरूपेण तत्र गमने बाध्येतेति । तस्य चावश्यकत्वात्तदभावे पूर्णरसदानाभावे नैतत्स्वरूपागमनमिति भावः । ततोऽग्रे क्षणमपि भगवद्विप्रयोगस्मरणेत्यार्त्या तापाधिक्येन स्वरूपान्यथाभावं विचिन्त्य **तत्सान्त्वनार्थं** प्रेषणमिति भावः । **उद्धवस्वरूपनिरूपणाभासे तत्र सन्तीत्यादि** । भगवत्सुखचरित्रकथनेन भगवत्स्मरणकथनेन यशोदानन्दादीनां **प्रकटसन्देशयोन्यत्वम्** । मित्रभूतगोपानां च वृन्दावने रसक्रीडौपयिकतल्पादिरचनं तत्र कृतक्रीडादिस्मारणेन भगवतस्तद्विप्रयोगजदुःखनिरूपणेनाल्पगोप्यत्वम् । व्रजसौभाग्यवतीनां तु भगवत्प्रेमस्थानरूपत्वाद**तिगोप्यत्वमेव** । तत्र च सन्देशबाहुल्याद्भावात्मकत्वाच्च लेखनाशक्यत्वम्, तच्चरणमकरन्दमत्तानां श्रीमदाचार्यलिखनचन्द्रोदयावलोकात्स्वत एव भावाब्धिरुत्तरलो भविष्यति ।

**वृष्णीनां प्रवर इत्यत्र कुलीन** इत्यादि निरूपणस्यायं भावः । मातापित्रोर्निकटे कुलीनस्यैव प्रेषणमुचितं यतस्तस्यैव सर्वत्र प्राशस्त्यम् । स्वगोत्र-

१०-४३-१

जत्वेन मित्रगोपेषु प्रेमप्राशस्त्यमेव कथयेदन्यथा स्वस्यापि लज्जा स्यात् । महत्त्वेन प्रेमातिशयकलिलान्तःकरणवशाद्व्रजवरवधूनां वाक्यैः क्षोभाभाव इति भावः । तद्वाक्यभारवहत्वार्थं महत्त्वमपेक्ष्यतेऽन्यथा प्रेषणमननुरूपं स्यात् । महद्वाक्यस्य प्रामाण्यत्वाद्भगवानागमिष्यतीत्यादिवाक्यानां च तत्रत्यानां प्रामाण्यं स्यादिति भावः । **कृष्णस्य दयित** इत्यस्याभासे **तर्ह्युचितमेवे**त्यादिरसमार्गस्वरूपाज्ञानवद्बुद्ध्यानुचितत्वम् । भगवतस्तु प्रेममार्गरूपत्वादुपालम्भोपढौकनाद्यनेकरसयुक्तसन्देशकथनमेवोचितत्वमिति भावः । **अत एव गुह्यार्थ** इत्युक्तम् । **सखेत्यत्र** । **भगवत** इत्यादि । अत्र समानशीलत्वेन प्रियविप्रयोगकातरत्वधर्मा एव विवक्षिता न तु अन्येपि । तेन यथा भगवता स्वामिनीविप्रयोगासहिष्णुता तथोद्धवस्यापि भगवद्विप्रयोगासहिष्णुत्वम्, तद्दुःखज्ञानादेव तत्र गमनमिति भावः । अप्राप्ततद्दुःखस्यान्यस्मिन् तद्दुःखभावाभावात् । अत एव नारदेनोक्तम्, 'यथा कण्टकविद्धांग' इति । तत्रैव पुनः **साक्षादिति** एतस्य विवरणे **एनं दृष्ट्वैव जानन्ती**त्यादेरयं भावः । भगवत्सारूप्यत्वादेतद्दर्शनेन प्रियदर्शन इव सुखिता भवन्ति इत्यर्थः । यथा चित्रप्रियाकृतिदर्शनेनानन्दोद्बोधो रसानुभवसिद्धस्तथा ताद्रूप्यस्वरूपेणापीति भावः ।

तेनायं चित्रप्रतिकृतिवदापाततः सुखं करिष्यति सर्वदानुवर्तमानस्तु विरह एवात एवाग्रे श्रीमदुद्धवैरेव क्लेशस्यानिवृत्तिदर्शनसन्तुष्टैस्तत्पादरजःप्राप्तियोग्यं जन्म प्रार्थितमेतज्ज्ञापनायैव श्रीशुकैरपि 'दृष्ट्वा कृष्णावेशात्मविक्लव'मिति निरूपितम् । यद्वा विप्रयोगात्मकरसस्वरूपमिति भावः । यद्वा एनं दृष्ट्वा रसात्मकभावदानात्मकस्वस्वरूपं जानन्तीत्यर्थः । अत्रायं भावः । भगवतः स्वभावदानार्थं श्रीमदुद्धवः प्रेषितस्तद्दर्शनेन तथा ज्ञानमभूत्स्वामिनीनां तज्ज्ञानानन्तरं चास्मत्कृपयैवायं रसो लभ्यो नान्यथेति स्वस्मिन्रसात्मकत्वात्प्रभुकृपां जानन्तीति भावः। **बुद्धिसत्तम इत्यत्र । स्वतोपीत्यादि** । स्वबुद्धिकौशलेन रसमार्गीयछायया सन्देशादिकथनेन भगवत्स्मरणादिकथनेन तत्रत्यानां दुःखदूरीकरणसमर्थ इति **बुद्धिसत्तम** उक्तः। तत्र गमनानन्तरं तत्कृपया पूर्णभावोदयानन्तरं बुद्धिर्न स्थिरतामाप्स्यति । न च तत्रत्यानां **दुःखदूरीकरणसामर्थ्यं** भविष्यति न वा दुःखनिवारणे कोपि पुरुषार्थः सिद्ध्यतीत्यादिरूपता भविष्यतीति श्रीशुकैस्तथोक्तमिति भावः । अत एवाग्रे 'दृष्ट्वा कृष्णावेशात्मविक्लवमि'ति वैक्लव्यदर्शनानन्दभरेण नमस्कारं कृत्वा प्रार्थयिष्यतीति निरूपयिष्यते ।

**तमाहेत्यस्य** विवरणे । तच्छब्दव्यंजितनिरूपणे **तेन कार्यमित्यारभ्य प्रेषणीय** इत्यन्तं निरूपणस्यायं भावः । तच्छब्दस्य पूर्वपरामर्शित्वात् पूर्वोक्तधर्मविशिष्टेनैव
१०-४३-२
कार्यसिद्धिरिति भावः । व्रजवासिनश्चात्यन्तमनुरोध्याः, निरोधाधिकारिणस्तेषां स्वस्य अगमनार्थं विप्रयोगानुभवसिद्ध्यर्थं चेति भावः । चकारोत्र देहलीदीपन्यायमुभयत्रार्थप्रकाशकत्वेनानुहरति । उद्धवोप्यत्यन्तं प्रेष्ठः । प्रियश्चातस्तद्दर्शनजातभावांकुरेण स्वरूपरसदानार्थं प्रेषणीय इति भावः । **प्रेष्ठ** इत्यस्यार्थनिरूपणे । **अतः स्वसमान** इति **प्रतिनिधित्वादित्यादि** । स्वस्वरूपं विना तेषां येनकेनापि सान्त्वनं न स्यादिति स्वान्तरंगप्रेषणमिति भावः । दूतदर्शनजविप्रयोगस्मरणोद्भूततापनिवृत्तिरन्येन न भवतीति **स्वसमान** इति प्रतिनिधित्वाद्यत्किञ्चित्स्वास्थ्यार्थमिति भावः । **क्वचिदित्यस्यार्थनिरूपणे** एकान्ते यत्र कोऽपि न पश्यतीति । 'प्रत्यागमनसन्देशै'रित्यग्रे वाच्यत्वात्तत्रत्यानामेतच्छ्रवणे दुःखं स्यात्तत्रत्यनित्यस्थित्यज्ञानार्थं सर्वादृश्यस्थाने कथनमिति भावः ।

भगवदुक्तश्लोकचतुष्टयतात्पर्यमाहुः **प्रमाणं** चेति । आद्यश्लोके स्वयं तत्र पितृत्वस्थापनेन व्रजमण्डनासु च स्वस्यैव वियोगाधित्वकथनेन तस्य च
१०-४३-३
स्वसन्देशैरेव मोचने **प्रमाणत्वम्** । द्वितीये स्वस्वरूपात्मकत्वस्वार्थदेहधर्मादित्यागोक्त्या **प्रमेयत्वं** स्वस्य तत्प्राणधारणोक्त्या च । तृतीये स्वस्य प्रियत्वात्तत्संगाभावे स्मरणेन मूर्च्छया कातरत्वोक्त्योपपत्तिरूपत्वम् । चतुर्थेऽतिकृच्छ्रेण प्राणधारणोक्त्या तद्धारणसाधनेन स्वसन्देशोक्त्या **बाधकत्वम्** । एतच्चतुष्टयं विना प्रेषणं न स्यात् । हि युक्तश्चायमर्थो यदेतच्चतुष्टयं विना स्वांगीकृतान्तरंगप्रेषणं नोचितमिति भावः ।

**मत्सन्देशै**रित्यस्य विवरणे **मत्पत्रलिखितैस्तत्र प्रकटीकृतै**रित्यादेरयं भावः । एतेषां सन्देशानामतिगुप्तत्वाद्रसयोग्यत्वं विना वक्तुमयोग्यत्वात्पत्रमध्य एव **लिखितास्त** इति भावः । तत्र तासामवस्थासहितस्वरूपदर्शनेन तद्भावोदयानन्तरं योग्यता भविष्यतीति तत्र **प्रकटीकृतै**रित्यनेन ज्ञाप्यते । अत एवोद्धवैरपि तच्चरणरेणुप्राप्तियोग्यं जन्मापि प्रार्थनीयम् । यद्वा प्रेमरसस्वभावेन प्रियास्मरणे नैकान्ते सन्देशो लिखितुं पार्यते, तत्स्वरूपाभिनिवेशान्न तु कस्याप्यग्रे कथनसम्भवो यतस्तददर्शनेन दूतदर्शनेन च दुःखातिशयात्तस्य च प्रेमरसानुभवैकवेद्यत्वादिति भावः । नन्वानन्दमयस्य भगवतो दुःखाद्यसम्भव एव, कथं तत्कथनं, कथं वा तासां दुःखं स्वेच्छयैवेश्वरत्वान्न दूरीकृतवान् । सत्यम् । भगवति तदसम्भावितं, परं रसमार्गस्थेन भगवता रसमार्गमर्यादयैवैतासु रसदानस्य कृतत्वात्स्वयं च तन्मर्यादयैव रसभोगस्य कृतत्वात् तथात्वं युक्तमेवेति भावः । अत एव 'आत्मारामोप्यरीरम'दित्युक्तम् ।

**ता मन्मनस्का इत्यत्र । अस्मत्कथन** इत्यादि । अत्रायं भावः । भगवान्सर्वेषु
न मनोरूपेण तिष्ठति, एतासु च तिष्ठतीत्यत्र भगवद्वाक्यमेव प्रमाणमिति
१०-४३-४ भावः । एवं सत्यहमेव मनो यासामित्यर्थः सम्पत्स्यते । मन्मनोरूपाश्च ता इत्यत्र हेतुः प्रमेयबलत्वेनेति । अत्रायमर्थः । भगवन्मनोरूपतान्येषां न सम्भवति, तथा चेद्भगवान्करोति तत्प्रमेयबलेनैव, तच्च प्रमेयबलं प्रभुणात्र प्रकटीकृतम् । सर्वप्रमाणनिरासकत्वं प्रमेयबलस्य स्वतःसिद्धम् । अत एव श्रीदेवकीजलधिचन्द्रेण'मय्यावेश्य मन' इत्यारभ्य 'ते मे युक्ततमा मता' इत्यन्तं निरूपितम् । एताः स्वसौन्दर्यप्रेमादिधर्मैर्भगवन्मनोरूपा भूत्वा भगवति तिष्ठन्ति, तथा च सत्येतासां प्रमेयबलत्वं सिद्धम् । श्रीगोकुलजनप्राणनाथेनापि 'मय्यावेश्ये'त्यारभ्य 'मामवाप्स्यथ' इत्यन्तं बलात्कारेण मनोनिवेशनं निरूपणीयमग्रिमाध्याये । **प्राणिनामात्मे**त्यारभ्य **तथा नादरणीये**त्यादि । सर्वेषामात्मा यथा मदीय इति त्वया ज्ञायते, तथा तासु त्वया नादरणीयः सर्वसाधारणवदिति भावः । यतस्तेषु तासु च बह्वेव तारतम्यमाहुः **किन्त्वि**त्यादिना । उत्पत्तिशिष्टत्वोक्त्यान्यपरत्वेन पूर्वं पित्रादीनां पश्चाच्च भर्त्रादीनां चेति ज्ञाप्यते । एतासां तु भगवत्सेवार्थमेव प्राकट्यान्न तथात्वम् । **मदर्थं त्यक्तदैहिका** इत्यत्र **दैहिका देहोपयोगिन** इत्यादेरयं भावः । देहोपयोगिनः पदार्थाः स्वसुखभोगार्थं त्यक्तव्याः, किन्तु भगवदर्थं देहोपयोगश्चेत्तदा तदुपयोगार्थं कर्तव्या एव, ततस्तेषां भगवदुपयोगित्वं न तु देहोपयोगित्वं, तस्मात्तथाविधास्तु त्यक्तव्या एव । **मदर्थे**ति कथनाद्भगवदाशयैव तत्त्याग इति भावः । अत एवैताभिरेवोक्तं 'चिरात्त्वयि धृतासव'इत्यादि ।

**मयि ता** इत्यस्याभासे **फलसाधकत्वा**दित्यादि । भक्तिमार्गफलं साक्षात्सम्बन्धः । स च विप्रयोगानन्तरं जातो महारसरूपस्तत्साधक इति
१०-४३-५ तथा । **विरहएवे**त्यादेरयं भावः । संयोगे त्वग्रिमरसप्राप्त्यर्थं यत्नादि-

करणे मनो भवति, न तु पूर्वानुभूतलीलास्पर्शः कदाचिद्भवेत् । विरहे तु अन्तःप्रकटे प्रिये पूर्वानुभूतलीलासहिते महारस उत्पद्यते । स च पुरुषार्थरूप इति विरहस्य पुरुषार्थता । **गोकुलस्त्रिय** इत्यत्र **विचारचातुर्यादिरहिता** इत्यादि । स्वविप्रयोगस्य प्रत्यहं जायमानत्वात्प्रतिरात्रं तदभावत्वाच्च तत्स्मरणाभावात्तथात्वमिति भावः । **यद्वा** । भगवानस्मास्वत्यन्तं सुस्निग्ध इत्यस्माभिरपि तथा स्नेहो विधेय इति विचारः । विना विप्रयोगदुःखं प्रियज्ञापनार्थं कृत्रिमदुःखज्ञापनार्थं चातुर्यं तद्रहिता इत्यर्थः । एतासु साहजिकतथाविधस्नेहवत्यो यत्स्मरणमात्रेणैव मूर्छिता भवन्तीति भावः । **स्मरन्त्य** इत्यस्य विवरणे **स्मरणमात्रमेव मूर्छाहेतु**रित्यादेरयं भावः । मध्ये केनचिदुक्ते सति भगवानक्रूरसंगे गत इत्यादिस्मरणेनैव मूर्छा भवतीति भावः । **न हि दृष्टेनुपपन्नमिति** । अन्तर्गृहगतानामित्यर्थः । **विरहौत्कण्ठ्यकातरा** इत्यस्य विवरणे **मत्स्मरणे मूर्छा मद्धर्मस्मरणे तु कातरत्व**मित्यस्यायं भावः । भगवत्स्मरणं विप्रयोगे सति तस्य मूर्छाहेतुत्वं सिद्धमेव । भगवद्धर्माः स्वविप्रयोगासहिष्णुत्वादयस्तत्स्मरणे कातरत्वमिति भावः ।

**प्राय** इत्यस्यार्थनिरूपणे **बह्वयो मृता** इति । तासां चेत्कुशलं स्यात्तदा ममैतादृक् क्लेशो न स्यादिति भगवतोक्तं, न तु तत्र काचिदन्या सम्भावनास्ति । **कथं-**
१०-४३-६ **चिदि**त्यस्य विवरणे **न कापीत्यारभ्य धारयति**इत्यन्तम् । प्रियविप्रयोगे मरणमेव धर्मः, परं **जीवनमस्ति** ममेति शेषः । तेन मम जीवनेन किञ्चित्साधनं मद्दुःखज्ञानेन मदर्थं धारयन्तीत्यर्थः । भगवतस्तथाभावस्तु रसात्मकत्वाद्वेदादिषु लोकेषु वाऽप्रसिद्धस्तेन **कथंचनेत्यु**क्तम् । उद्धवस्यापीदानीं बोधनमनुचितं तासामनुग्रहेण च ज्ञानं भविष्यत्येवेति कथंचनेति गुप्ततयोक्तमिति भावः । अयमेवार्थः **प्रमेयबलेने**त्यादिना निर्णीतः । भगवदिच्छयास्मद्भाग्येन **जीवनमिति** ध्वनिः । रसात्मकभगवद्धर्मास्त्वेतादृशा एवेति नात्र शंका । अत एव गीतगोविन्दे 'हरि हरि हतादरतये'त्यादि भगवद्वाक्यानि विलसन्ति । एतदेव 'मय्येव सति जीवन्ती'त्यनेन निरूपितम् । कथंचनेत्यस्य विवरणे **अप्रसिद्धत्वादिति** । भगवता रसाधिक्यसमये तासु कानिचिद्वाक्यानि तथाविधानि प्रकटीकृतानि यैः कृत्वा यथाकथंचित्प्राणा रक्षणीया एव भवन्ति तासाम् । अत एवाग्रिमाध्याये ताभिरेव निरूपणीयं 'दुस्त्यजस्तत्कथार्थ' इति । प्राणरक्षार्थं **कथावलम्बन**मिति । श्रीशुकैरपि 'क्षणं युगशत'मिवेत्यनेन बहुकालजीवनमप्येतदाशयैवोक्तम् । **प्रत्यागमनसन्देशै**रित्यत्र । **आयास्यति** इत्यारभ्य **पत्रे स्पष्टो भविष्यती**त्यादि । आगमनस्य जीवनसाधनत्वं त्वस्मदन्यथा भावानन्तरं भगवानागत्य दुःखितो भविष्यतीति भगवदागमनकांक्षया ज्ञात्वा स्वदुःखसहनेनापि जीवरक्षयेति भावः । तदागमकालेनोक्तसमयेन चेज्जीर्णं स्यात्तदा तु पुनः तथैवेति किं मत्प्रेषणेनेत्युद्धवहार्दमभिप्रेत्योच्यते । तदर्थमुपायान्तरं कर्तव्यं, **स चोपायः** पत्रे 'यत्त्वह'मित्यारभ्य 'अचिरान्मामवाप्स्यथे'त्यन्तं स्पष्टो भविष्यति ।

इत्युक्तेत्यस्य विवरणे । **भर्तुरित्यत्र** । **भर्ता हि स्वामी अनेन पातिव्रत्य-**

१०-४३-७ **मित्यादि** । उद्धवस्य मध्यात्वभावस्तु सार्वदिक एव, परं तद्योग्यदेहाप्तिस्तु व्रजनितम्बिनीचरणरेणुकृपाभावेन भवति, तदर्थमेव च भगवतायं प्रेष्यत इति भावः। अत एव श्रीगोपीजनजीवनचरणरेणुप्रियानिरूपितनामविवरणे 'गोपीमनोरथाक्रान्त' इत्यत्रास्मद्भाग्योदयाचलसुधादीधितिश्रीवल्लभनन्दनचरणैर्निरूपितमस्मद्व्यतिरिक्तभावस्य न तत्र प्रवेश इति । एतद्भावदार्ढ्यमेवोक्तं **तत्राप्यादरपूर्वकं परमपुरुषार्थं प्राप्त** इत्यादिना ।

**प्राप्तो नन्दव्रजमित्यस्याभासे, स्मारकेण तासामित्यादि** । दिवसे यत्किञ्चिद्विर-

१०-४३-८ हस्य स्थितत्वादक्रूरसहगमनस्मारकत्वात्तस्य दर्शनादेव तदाधिक्यं भविष्यतीति तासां भगवदागमनोत्साहविस्मृतदेहगेहादिसमये गमनमिति भावः । अयमेवार्थो **निम्लोचति विभावसावित्यस्य** विवरणे **सर्वेषां लौकिकवैदिककर्मणि वैयग्र्यात्स्वाज्ञानं सूचितमित्यनेन** व्यक्तीकृतः । अस्य भावस्य गोप्यत्वात्सर्वेषां लौकिकवैदिकेत्यादिकथनमिति भावः । **प्राप्तो नन्दव्रजमित्यस्य** निरूपणे **विशेषाकारेणेत्यादि** । रात्रिसमय एव पितृचरणानां वियोगकालत्वात्तत्रैव गमनमिति भावः । स्वामिनीनां तु रात्रौ प्रभुसंगमकाल इति तत्र प्रातः गमनम् ।

**वासितार्थे** इत्यादेराभासे **भगवद्रहितत्वादित्यादि** । सन्ध्याकाले पशूनग्रे कृत्वा

१०-४३-९ तत्रैव **पुनरैश्वर्यरहिता अन्ये गुणाः सन्तीत्यस्यायं** भावः । गोकुलस्य भगवद्रूपत्वात्पश्वधावर्णनं कथमित्याशंक्याहुरैश्वर्येत्यादि । ईश्वरत्वं हि प्रेमविरोधि, तस्मात्तं भगवानत्र त्यक्त्वैव प्रेमवशगः सन् रमते, तेन तद्रहितत्वमिति भावः । अन्यथा तस्मिन्सति गोचारणादिकं गोपेषु सख्यम् । व्रजभाग्यभूमिकनकलतिकासु च गीतोक्तन्यायेन 'घनमसृणवाणि करवाणि चरणद्वयं सरसगलदलक्तकसराग'मित्यादिकं न सम्भवतीति तदभाव इति भावः । अत्र च भगवान्तृतीयपुरुषार्थलीलयैव रसदानं करोति, तदनुगुणपदार्थानेवात्र प्रकटयतीति ज्ञापनाय वीर्यनिरूपणे **पशूनामपि काम्लीलैव** निरूपिता । अयमेवार्थोस्मत्प्रभुचरणै**'वीर्यं कामे'**त्यादिना व्यक्तीकृतः ।

**गायन्तीभिश्चेत्यत्र । गानं च यशोरूपं स्त्रियश्चेद्गायन्तीत्यस्यायं** भावः ।

१०-४३-११ पुरुषाणां तु तद्विप्रयोगाननुभवेन गानं भवेत्परं स्त्रीणां सन्ध्यासमये प्रियवियोगानुसन्धानेन दुःखाधिक्याद्गानमसम्भावितं, ताश्च तदैव गानं कुर्युर्यदि तदागमनानन्दाविर्भावो हृदि स्यात्, तस्मादत्र तासां गानोक्त्या श्रीगोकुलाधीशागमनोत्सवामृतजलधिवीचित्वं गानस्य ज्ञाप्यत इति भावः । स्त्रीणामगानं चेत्स्यात्तदा तासां दुःखसम्मानं स्यात्तदा भगवतोऽसाधारणं यशो न स्याद्भगवतश्चेदमेव यशो यद्व्रजार्तिहरणम् । अत एवैताभिरेवोक्तं 'व्रजभयार्तिहन्वीरयोषिता'मित्यादि । न हि गोपीपतिं विना

'योषितां वीरे'ति सम्बोधनमर्हत्यन्यः । तेन स्त्रीणामेव गानं भगवतो यशोरूपमिति भावः । अयमेवार्थः श्रीमदाचार्यैः 'स्त्रियश्चेदि'त्यनेन निर्णीतः ।

**अग्न्यर्कातिथीत्यस्याभासे प्रवृत्तिस्वभावमेव ज्ञानं उपयोगीति** । निवृत्ति-
स्वभावज्ञानस्य मोक्षसाधकत्वात् । श्रीगोकुले तु नन्दगृहे प्रकटस्य पुरुषोत्तम-
१०-४३-१२ स्यैव फलरूपत्वात्प्रवृत्तिस्वभावस्यैव उपयोग इति भावः । अग्न्यर्कातिथीत्यस्य
विवरणे । **अनेन श्रौत** इत्यादि । भक्तेरेव मुख्यत्वादेतद्धर्मद्वयमपि वर्तते, परन्तु तस्य भगवति विनियोगात्तन्मध्यपातित्वमेव तयोर्नतु मुख्यत्वम् ।

**तमागत**मित्यस्मिन्पद्ये 'नन्दः' इत्यस्यार्थनिरूपणे, **अत** इत्यादि । कृष्णसेवकत्वं
तदैव पूर्णं भवति यदा व्रजे व्रजनाथदर्शनं भवति । तदर्थं भगवत्प्रेषित-
१०-४३-१४ तथाभूतोद्धवागमनेनैव प्रीत इति भावः । अयमेवार्थोऽ**नेन स्वशेषत्व**-
**मित्यनेनोक्तः**।यद्वा । आगमनेनैव प्रीतः । अतो नन्दः निरोधमध्यपात्यानन्दरूप इति भावः । अन्यथा मथुरात आगतस्य दर्शनेन भगवान् तत्रास्ति तत्सन्देशहारकोयमित्यादिना दुःखमेव भवेन्न प्रसन्नता, प्रीतत्वेन चात्र नित्यस्थितिर्ज्ञापिता । तेन नन्दत्वमानन्दरूपतेति भावः । **नन्दः प्रीत** इत्यत्र । **अनेन स्वशेषत्वमुक्त**मिति । श्रीनन्दस्य तदागमनेन प्रीतत्वादन्यथा रात्रौ भगवद्विप्रयोगे क्लेशेनाप्रीतत्वं तद्दर्शनेन भगवद्वार्तया रात्रिर्गमिष्यतीति जातप्रीतिरिति । अयमेवार्थः श्रीमदाचार्यै**रागमनेनैव प्रीत** इत्यनेनोक्तः ।

**सखेत्यस्य विवरणे वैमनस्य**परिहारनिरूपणमुद्धवबुद्धिमनुसृत्य वसुदेवहार्दस्थं
१०-४३-१६ स्वपुत्रकुशलपूर्वकन्यामारणाभिप्रायेण लोकबुद्धिमनुसृत्येत्यर्थः ।

**अपि स्मरतीति** श्लोकदशकाभासे **तस्येत्यारभ्य उक्तं भवतीत्यन्तम्** । आद्यश्लोके
कुशलमुक्तम्, स्वस्मरणप्रश्ने ततः कुशलं निरूपितम् । यतः स्वयं कुशल्ये-
१०-४३-१८ वास्मत्स्मरणं कुर्यादिति भावः । **द्वितीयश्लोकेन** भक्तरक्षा निरूपिता ।
यतः स्वविप्रयोगेन क्लिष्टान्स्वयमागत्य रक्षां कुर्यात्तदेव रक्षा स्यान्नान्यथेति भावः । रक्षार्थमस्मासु स्वजनत्वस्थापनेनास्मदीक्षणार्थमागमिष्यतीति,अन्यथेश्वरः सर्वनिरपेक्षः कथमागच्छेत् । **तृतीयश्लोके**नैश्वर्यकथनम् । भगवतश्चायमेव धर्मो यद्भक्तदुःखनिवारकत्वम् , दावाग्निपानेनान्येभ्यश्च दुरत्ययेभ्योऽप्रतीकार्यमृत्युभ्यश्चानायासेन रक्षा नैश्वर्येण विना भवेदिति भावः । **तुरीयेण** वीर्यनिरूपणम् । वीर्यस्यायमेव स्वभावो यद्वीर्यस्मरणेन सर्वक्रियाशैथिल्यं भवति । **पञ्चमेन** ज्ञाननिरूपणम् । ज्ञानस्यायमेव स्वभावो येन भगवदात्मकत्वं भवति। भगवच्चरणचिह्नदर्शनेन च तदात्मकत्वं तद्रूपत्वमिति भावः । **षष्ठश्लोकेन** वैराग्यं निरूपितम् । भगवतो वैराग्यं भक्तातिरिक्तेषु । तत्र च प्राकट्यं भक्तद्वेषिदैत्यनिराकरणार्थम् । तच्च तद्रूपमेवेति भावः । **सप्तमेन** यशो निरूपितम् । भगवतश्चेदमेव यशो यद्दैत्यादिनिवारणमनायासेन

लीलयैव भवति । **अष्टमश्लोकेन** श्रीनिरूपणम् । श्रियश्चायमेव धर्मो यत्सर्वतुच्छकरणम् । अत्र चेन्द्रमदहरणार्थं श्रीगोवर्धनोद्धरणं तद्रूपमिति भावः । **नवमे** पराक्रमता स्पष्टैव । **दशमश्लोकेन** निर्गुणवर्णनम् । गुणातीतस्वरूपलीलास्मरणेनैव प्रेमाधिक्यं भवतीत्यस्य निर्गुणतेति भावः ।

**आत्मनाथमित्यत्र** । आत्मैवेति स्वनाथत्वेन स्वस्यानन्दरूपत्वात्तत्र दुःखस्यानुचितत्वात् मरणे तद्दुःखस्मरणं च स्यात्तेन शीघ्रमागच्छेदिति भावः ।
१०-४३-१८ **गिरिमित्यस्य** विवरणे **विशेषलीलाधार** इति । विशेषलीला आसारपीडनजनितसभयकातरावलोकस्वप्रियादर्शनजनितरक्षणोत्साहसाधनत्वेन धारणं तदनुप्रियबाहुस्थितशिखरिवरभारावलोकनजनितस्वहृदयखेदज्ञापककातरसजलदृष्टिपातावलोकनाप्तप्रेमप्रमोदभरात्मिका तस्या आधारः स्थानमिति भावः ।

**गोविन्द** इत्यस्य विवरणे । **देवादिभिरित्यादेरयमाशयः** । त्रैलोक्याधिपतेरपि सर्वज्ञैर्देवादिभिरत्रेन्द्रत्वस्थापनेन तद्राज्यादत्र महत्त्वं ज्ञायत इत्यत्रागमन-
१०-४३-१९ मेवोचितमिति भावः । **तर्हि द्रक्ष्याम** इत्यत्र । **आगमनमेव हि निरोधज्ञापकमिति** । तत्र गमनेत्र भगवत्स्थित्यसम्भावना स्यात्सा च निरोधविरोधिनी, प्रेमवतां च तत्सम्बन्धं विना क्षणमपि स्थातुं न शक्यमतोऽत्रानागमने सति भगवतो निरन्तरं स्थितिरेव ज्ञाप्यत इति भावः । ननु निरन्तरं तत्र भगवत्स्थित्यागमनसम्भवो न सम्भवतीति चेत् । सत्यम् । तन्न सम्भवति । परं तत्सम्भावना तूद्धवदर्शनाद्भगवद्गमनादिस्मरणेन कादाचित्का तद्दर्शनपर्यन्तमेवोच्यत इति न कोपि विरोध इति भावः ।

**स्मरतां कृष्णवीर्याणि** इत्यस्य विवरणे **भगवतः स्थाने गमनमित्यारभ्य शैथिल्यं भवतीत्यन्त**निरूपणस्यायं भावः । भगवतः षड्गुणैश्वर्ययुक्तस्य
१०-४३-२१ स्थाने प्रेमव्यतिरेकेण न प्रभवति यत ईश्वरस्यापेक्षाभावात् । **यद्वा** । भगवत्प्रेम्णा गमनं सम्भवति, तत्तु न सम्भाव्यते, तत्र चेत्प्रेमोत्पत्तिः स्यात्तदा आगच्छेदेव, गमनं तु भगवदानयनार्थम्, तच्च भावद्वयसाकाङ्क्षम् । भगवान्प्रेमभरेण तत्र दुःखितो माभूत्, तथा चास्मदीयो भगवान्, किमिति तत्र तिष्ठति स्वीयत्वादाने य इत्यर्थः । वयं भगवदीया इति सर्वेषामेव स्फुरति, भगवानस्मदीय इति तु कृतपुण्यपुञ्जानां प्रेमवतामेव स्फुरतीति भावः । भगवता स्वस्य तदीयत्वं कृपया प्रदर्शितमित्युपकारं कृतवान्, न त्वन्यथा, तस्मादेतादृशवीर्यवतो भगवतोस्माभिः किं कार्यं, येनास्मदीयत्वमंगीकृत्यागच्छेत्तेन धाष्ट्याभावाच्च शैथिल्यं भवति । कान्तो भगवान्स्वकृपयैवागमिष्यतीति तत्रागमनमिति भावः । **लीलापांगेत्यस्य** विवरणे **ऐश्वर्यं प्रकटीभवदित्यादेरयं** भावः । ऐश्वर्ये सति प्रेम न सम्भवति, तस्माद्धाष्टर्यं प्रेमकृतं दूरीकरोतीति भावः । **यद्वा** । अत्र भगवाना-

गमिष्यति न वेति सन्देहे नैतत्स्थानत्यागार्थं तत्र गमनार्थं च यथा कथंचिद्धार्ष्ट्यं क्रियते । तच्च भगवान् स्वैश्वर्यं प्रकटीकृत्य पूर्वोक्तधर्मैः सहारमन्नेव दूरीकरोतीति भावः । अयमवोर्थो **नास्माकं गमनसामर्थ्यमित्यनेन** व्यक्तीकृतः । **चकारद्योतितार्थमाहुः सर्वमिति** । सर्वं यत्तत्र गतोस्ति तत्सत्यं, परमत्र तु भगवान्पूर्ववत्सुखं ददात्येतत्सर्वं भगवच्चरित्रमिति भावः । एतच्च प्रेमरूपनित्यलीलात्मकत्वस्वानुभवेनोच्यते न ज्ञानमाश्रित्य, एतदर्थमे**वांगे**ति सम्बोधनम**प्रतारणार्थ**मुद्धवस्यैतद्भावानवबोधादिति भावः ।

**सरिच्छैलेत्यत्र यत्र यत्र भगवता स्वानुभावः स्थापित** इति । यत्र यत्र रमणस्थलेषु स्वस्यानु पश्चात्स्वमनुलक्षीकृत्य वा भावः क्रीडात्मकः
१०-४३-२२
स्थापित इति भावः । तेन स्वरूपसहितक्रीडाया नित्यत्वमेवेति भावः ।

**यशोदेत्यत्र । नन्देनैवेत्यारभ्यस्नुतपयोधरा जातेत्यन्तम्** । नन्देनैव वर्ण्यमानानि, न तु स्वयं वर्णयति । यतस्तस्याः स्त्रीत्वात्साहजिकस्थानत्वात्प्रेम्णो न
१०-४३-२८
वर्णयितुं शक्यमतो नन्देनैव वर्ण्यमानानि भगवतश्चरितान्युद्धवागमनेन तत्र गमनसहितानि शृण्वन्ती, स्वयमपि भगवांस्तत्र गत इत्यादि पूर्ववृत्तान्तं स्मरन्ती, **अन्तः प्रेमपूर्णा** तद्भावयुक्ता तत्स्मरन्ती सती **नेत्रयोरश्रूण्यस्राक्षीत्**, ज्ञानेन्द्रिययोस्तथात्वेनोद्धवो न दृश्यत इति भावः । स्मरणमात्रेणैव विरहव्याकुला जाता इति भावः । तेनोद्धवागमनजातश्रीकृष्णश्रीनन्दकृतभगवद्वर्णनस्मरणाभावे नित्यं भगवतस्तत्रैव स्थितत्वाद्विरहाभाव एवेति भावः । उद्धवदर्शनेनोपरिभावादर्शनादन्तर्भगवदावेशेन दृढप्रेमा जातस्तेन स्नुतौ पयोधरौ यस्यास्तादृशी जाता । तयोस्तु तत्त्वोक्त्या तत्प्रेमातिशयेन तदैव भगवान्प्रकटो जात इति ज्ञाप्यते । अन्यथा दर्शनं विना स्रावाभाव इति भावः ।

**तयोरित्थमित्यस्याभासे । परमयं लौकिक** इत्यादि । लौकिकः केवलं पुत्रात्मकज्ञानरूपः । स च पूर्णपुरुषोत्तमात्मकज्ञानरूपः कर्तव्यस्तदर्थमेवो-
१०-४३-२९
द्धवप्रेषणं, तेन पुरुषोत्तमस्वरूपज्ञानोपयोगिभक्तत्वमाहेति भावः । **अयं चेत्यनेन** माहात्म्यज्ञानानन्तरं पुरुषोत्तम एवास्मत्पुत्र इत्यादि ज्ञापकता स्नेहस्य कर्तव्येति व्यज्यते । अत एवोक्तं 'माहात्म्यज्ञानपूर्वस्तु सुदृढः सर्वतोधिकः स्नेहो भक्तिरिति प्रोक्त' इति भक्तिलक्षणम् । **नन्दमाहेत्यस्याभासे, यशोदा कदाचिल्लज्जिता भविष्यतीति** । उद्धवस्यात्र भगवन्नित्यस्थित्यज्ञानेन भगवदागमनकथनपूर्वकमथुरास्थितिकथनेन भगवद्विप्रयोगे क्षणमपि स्थित्यनौचित्या मातृचरणानां च स्थित्या लज्जितात्वमिति भावः । अयमेवार्थः श्रीमदुद्धवनामनिरुक्त्या निर्णीतोस्मत्प्राणनाथचरणैः । ननु **नन्दयशोदयोरित्यनेनो**भयोरपि प्रेमसमत्वनिरूपणान्नन्देपि तथात्वं स्यादेवेति कथं नन्दे तदभाव इति चेद्, उच्यते । यशोदायाः स्त्रीत्वादल्पधैर्यवत्वेन शास्त्रार्थाज्ञानान्नन्दस्य पुरुषत्वाद्गर्गोक्तादिशास्त्रार्थज्ञानवत्वेन तदभाव

इत्यर्थः । नन्दत्वाद्वा आनन्दरूपत्वात्तद्दर्शनादिनाप्यन्तर्भगदावेशादन्तर्भगवत्संगतत्वेन विप्रयोगास्फूर्त्या तदभाव इति भावः । **मुदेत्यस्य** विवरणे **भगवद्भक्तान्दृष्ट्वा संभाषणेनाहमपि कृतार्थो भविष्यामीत्यादेरयं** भावः । एतादृग्भावात्मकभगवद्भक्तसंभाषणेन तद्धृदयस्थभावज्ञानेन तत्सजातीयभावोदयादहमपि कृतः अर्थो येन तादृशो भविष्यामीति भावः ।

**युवामित्यस्य** विवरणे **स्वतन्त्रभक्त्यपेक्षयेति** । नवधाभक्तिवत्तत्रोच्यते

१०-४३-३० यतस्तत्करणेन भगवान्प्रसन्नो भूत्वा स्वीयत्वं मनुते । अस्याः प्रमेयत्वं तु भगवान्स्वेच्छया स्वयं तद्वशे भवति । तेनास्या रसालत्वमिति भावः ।

**नारायणेऽखिलगुरावित्यत्र । नारायणशब्दोत्र पुरुषोत्तमवाचीति** । अत्र व्रजीयभगवत्स्वरूपनिरूपणप्रस्ताव इत्यर्थः । अन्यथा देवोत्तमता तु श्रीनन्दज्ञातैवेति पुनः कथनमननुरूपं स्यात् । तथा चायमर्थः । नारं जीवसमूहस्तस्य अयनो मूलभूतस्तेनात्रत्यानां जीवादीनां पुरुषोत्तमात्मकत्वमेवेति भावः । अत एवोक्तं श्रीवराहेण 'अन्यैव काचित्सा सृष्टिर्विधातुर्व्यतिरेकिणी'त्यादि । **अखिलगुरावित्यस्य** विवरणे **अत** इत्यादि । **सर्वशास्त्राणामर्थरूपे पुरुषोत्तमे प्रमेयबलवति** भक्तिमार्गीयपुत्रत्वादिभावयुक्ते **यस्मात्कारणाद्भगवदिच्छानुरूपादेतादृशी** बुद्धिर्भक्तिरूपा कृतेति भावः । भगवदिच्छा चैतादृग्भक्तिप्रकटन एव स्थितान्यथा स्वस्मिन्पुत्रत्वादिधर्मान्न ज्ञापयेत् । भक्तानां च भगवज्ज्ञापितभजनकरण एवोत्तमत्वमिति भावः ।

**एतौ हीत्यत्र । एक एवेत्यादि** । सदानन्दत्वेन भगवानेव ज्ञातो न तु रमण-

१०-४३-३१ कारणरूपः । संकर्षणोऽपि ज्ञातस्तदभावे च न पूर्णतातस्तं पुरुषोत्तमावेशिनं रमणकारणात्मकं ज्ञापयितुमित्यर्थः । भगवत्तुल्यता च सम्बन्धे दूरीकार्या, यतस्तत्रावेशानन्तरभाविलीलयैव निरोधः सिध्यति नान्यथा । अत एव तामसप्रकरणस्थद्वादशाऽध्याये भगवल्लीलौपयिकवृक्षाणां केवलभगवदनाविष्टबलदेवनमस्कारे बाधकमुक्तम् । **बीजयोनीत्यस्य** विवरणे **अत्र भगवानेवेत्यादि** । अत्र लीलासृष्टौ तदर्थैकप्रयोजनाय लीलाकरणार्थमलौकिकरसभोगार्थं तथा बलदेवादिसर्वसामग्रीरूपो जात इत्यर्थः । **ब्रह्मवादे** तु भक्तिमार्गीयसृष्टिसिद्धान्ते **तदेव** लीलात्मकं **ब्रह्म सर्वशक्तियुतं** गोपीजनवेष्टितं **क्रमेणैवाधिकारं** सम्पाद्य रसदानक्रमेणैव प्रकटो भविष्यामीति विचार्य प्रथमसृष्टौ रसात्मकरमणेच्छारूपायां 'स एकाकी न रमते स द्वितीयमैच्छ'दित्यादिश्रुत्युक्तायां तादृशभक्तसमूहमुत्पाद्य **क्षयवृद्ध्यनपेक्षं** कालातीतं विकल्पेन तादृशं लौकिकादिरसभोगार्थं कालादिधर्मयुक्तं 'जहुर्गुणमयं देह'मित्यादिरूपं पश्चाल्लोके तदतिरिक्तं **बहुप्रकारसिद्ध्यर्थं** केषांचिद्भाग्यवतां स्वप्राप्त्यर्थमेकैकस्य स्वामिनीरूपस्य जीवरूपस्य वा बहुधोपयोगाय बहुधा रमणार्थं स्वस्येति शेषः **शक्तिसमूहं** व्रजदेवीनां समूहं सात्विकादिभावेन **विभज्य बीजयोन्यादि-**

भावेन स्वस्वरूपात्मकान्यपि परिकल्प्य स्थापितवानिति भावः । उभयता लीलात्मकप्रकारेण भक्तिमार्गीयभक्तविचारितमार्गप्रकारेण, पश्चाद्भगवद्रमणेच्छानन्तरं प्रकारद्वयं स्वरसभोगार्थप्रकारो जीवरसदानप्रकारश्चैतद् द्वयमिति भावः । अनुभवसिद्धत्वात् भक्तानामिति शेषः । तथात्रापि लौकिकसृष्टौ मोक्षसृष्ट्यादिचतुर्विधपुरुषार्थान्धर्मादिरूपान् साधयितुं सर्वस्यापि जीवसमूहस्य सर्वं मोक्षादिचतुष्कं भक्तिफलं वा मा भवतु इति स्वशक्तिं स्वामिनीरूपां विभज्य भिन्नां स्वरमणस्थले वृन्दावने स्थापयित्वा मोक्षभक्त्योः स्वयं बीजं योनिश्च रामः । मोक्षो भगवद्दत्त एव भवति तत्साधनरूपं ज्ञानं च वेदात्मकबलदेवेन भवति, तेनोभयोस्तथात्वम्, भक्तौ च स्वयं बीजं रसार्थकस्वरूपसम्पादेक रमणार्थस्वरूपसम्पादके रमणार्थकभावोत्पादकश्च राम इति भावः। सृष्ट्यादौ लीलासृष्टौ स्वयं योनिः कात्यायन्यात्मकस्वरूप इत्यर्थः । रामश्च तादृग्रमणात्मभावोत्पादकबीजरूपः कोशलेन्द्रवत् । अतः कारणादुभावपि पुरुषोत्तमावेशिनौ सर्वलोकहितार्थं सर्वलोकानां हितार्थं मुक्तिभक्तिरसदानार्थमवतीर्णौ, यत उभावपि भक्तिरसदानार्थमवतीर्णावत एकस्यैव हितार्थत्वेन ग्रहणे कृते कोऽपि पुरुषार्थो भक्तिरसात्मको न सिध्येत्, यतः सङ्कर्षणस्तामसो रमणात्मकस्ततस्तामसगुणं विना विप्रयोगरसाभावे पूर्णरससिद्धिर्न भवेदिति भावः । अत एव सर्वत्र भक्तिमार्गेऽभ्युदयफलेषु रसमार्गीयरसात्मकभावोदयेषु, रामस्य प्राधान्यं रमणसामग्रीसम्पादकत्वात् । अत एव तामसप्रकरणस्थद्वादशाध्याये भगवद्रमणार्थं वृन्दावनीयवृक्षादीनां स्वरमणसिद्ध्यर्थं भगवता बलदेवनमस्कार एवोक्तः । भगवतः सहभावमात्रम्, स्वावेशसिद्ध्यर्थमिति भावः । क्वचिल्लौकिके रामस्य प्राधान्यम्, न भगवतः सहभावत्वमिति भावः । प्रथमनिर्देशेन स्वरमणेच्छारूपशक्तिसृष्टिप्राकट्येन साक्षान्महती शक्तिः कात्यायनीरूपा भद्रकालीरूपा च । कृष्ण एवेति कृष्णरूपैवेति । न क्वापि सहभावो निरूपितः रामस्येति शेषः । निःश्रेयसे तु रामस्य भगवतः सहभाव इति भावः । साधारण्ये द्वयोर्यत्र तुल्यतया निरूपणं तत्र सर्वत्रैव विमर्शो विचारः कर्तव्य आवेशादिभावेनेत्यर्थः ।

यस्मिन्नित्यस्य निरूपणे 'मानसे रूप' इत्युक्तं रूपं मानसरूपं,इत्यस्यायं भावः । मनसो दोषाधिक्येन यत्र कुत्रचित्तादात्म्यस्फूर्तिर्भवति तथा भगवद्रूपे कृपयावि-
१०-४३-३२ र्भूतिरपि ब्रह्मप्राप्तिर्भवतीतिभावः । अत एवाग्रेप्युद्धवावस्थानत्याद्युक्तमाचार्यैः 'सात्वतां पति'रित्यत्र । निर्हृत्य कर्माशयमित्यस्य विवरणे बीजात्मकमित्यारभ्य स्वरूपेणैव यातीत्यन्तम् । अस्य जीवस्य पुष्टिमार्गीयत्वात् केनचिदपराधेन मर्यादामार्गीयभक्तदेहजबीजजसंघातप्राप्तौ सति तन्निवर्तनेन तत्र पूर्वं स्वदेहाभिमानस्थित्या तत्परित्यागमपूर्वकं मृतमिव तद्भवति । देहानामपि नित्यत्वादिवेत्युक्तम् । ज्वलनोग्निर्यथा

मृतकं प्रज्वाल्य स्वस्वरूपात्मक एव स्वयं भवति तथापराधकारणभूतमपि संघातं तदनुपभोगेनैव दग्ध्वा उत्तरत्र गमने साक्षात्स्वरूपसम्बन्धे साधनान्तरं पुनर्भावात्मकस्वरूपभजनरूपमप्यनपेक्ष्य सर्वोत्कृष्टां गतिं स्वरूपेणैव गच्छतीति भावः । तद्योग्यत्वेनेति शेषः । अन्यथा पूर्वसंघातत्यागपूर्वकान्यस्वरूपकथनं प्राप्तौ नोक्तं स्यात् । **परां गतिमित्यस्य** विवरणे, **तत्रापीत्यादि** । **सायुज्यार्थं** यथा **जीवभावेन गमनानन्तरं** तत्र तद्भावनाशपूर्वकं सायुज्यं भवति, तथा न भविष्यति, **किन्तु ब्रह्ममयः** भगवद्रमणयोग्यभगवदात्मकभगवद्भावरूपो भूत्वा भक्तिमार्गानुसारेण प्राप्नोतीत्यर्थः । अयमेवार्थस्तत्रापि **भगवद्धर्माणामपि सर्वेषां स्फूर्तिर्भवतीत्यर्कवर्णे** इत्यस्याभासेन निरूपितम् । **अर्कवर्ण** इत्यस्यार्थनिरूपणे । **तस्मादित्यारभ्य माहात्म्यमुक्त**मित्यन्तम् । **यावान्पुरुषार्थस्तापात्मकत्व**मिति यावत् । **स क्रमेण** यावज्ज्ञानादिभिः भगवत्स्वरूपात्मकादिभिरेकोनविंशाध्यायोक्तगोपालाधिकरणरूपैर्भवति, तावत्तस्मिन्समये भगवत्स्वरूपावेशेन तत्सङ्गाभिलाषयास्मिन् जन्मनि पूर्वं तद्भावजतापेन तथाभूत्वा प्राप्नोतीति भावः । अयमेव तापोऽर्कवर्णकथनेन निरूपितः । गोप्यत्वात् स्पष्टतया नोक्तः ।

**अखिलात्महेता**वित्यस्य विवृतौ **अखिलाना**मित्यारभ्य **सिध्यतीत्यन्तम्** ।
**सर्वेषामात्मा भवति,** तेन सर्वेषां हितकर्तृत्वं स्वत एव सिद्धम् ।
१०-४३-३३ 'सर्वस्यान्नंभवती'ति सर्वेषां भोक्तेत्यर्थः । स्वभोगार्थमेव सर्वं सृष्टवान् ।
'क्रीडाभाण्डमिदं विश्व'मित्याद्यत एव निरूपितं तेन स्वभोगार्थमस्मान् सृष्टवानिति ज्ञात्वा यैर्मनो निहितं तेषां न किञ्चिदवशिष्यत इति भावः ।

**नारायण** इत्यस्याभासे **विकृतेपि हेतु**रित्यादि । ननु भगवानेव हेतुः । स एव च
सर्वेषामात्मा, तदा विकृतप्रतीतौ को हेतुरित्याशङ्क्याहुः **नारायण** इति ।
१०-४३-३३ अयं पुरुषो नारायणः । अयमेव पुरुषः पुरुषोत्तमः । स्वयं पुरुषरूप एव भोगार्थं नारायणः नराणां अयनरूपः, स्वक्रीडार्थमेव नरसमूहकर्तेत्यर्थः । यथा रासे । अत्र पुलिंगनिर्देशस्तु पुञ्जीवाभिप्रायेण । **कारणमर्त्यमूर्तावित्यत्र** । **किञ्चेत्यादि** । उद्धारार्थं साक्षात्सम्बन्धार्थं मर्यादामार्गीयमुक्तिमन्त्रोद्धारार्थं पञ्चविंशाध्यायोक्तन्यायेन **कपटवेशं** तद्रसदानार्थं तदनुकूलतज्जातीयस्वस्वरूपप्राकट्यं कृतवान्, 'बर्हापीडेति' श्लोकोक्तन्यायेन, अन्यथास्यैश्वर्यसहितस्वरूपरसदानेन भक्तेषु रसोत्पत्तिर्न स्यात्तथाच स्वस्मिंस्तत्स्वरूपानुकूलजीवात्मशरीरादिभावप्राकट्येन फलप्रकरणीयप्रथमाध्यायोक्तपञ्चात्मकस्वरूपनिरूपक 'यथेन्द्रियादिरूपत्व'मित्यादिश्लोकोक्तन्यायेन प्राकट्यकरणाज्जीवेषु फलावश्यकत्वं द्योतितमिति भावः । स्वस्यापि तद्भोगजनितरसावाप्त्यर्थमिति भावः । **महात्मन्नित्यस्याभासे पुष्टौ** वा **वैकुण्ठेष्विति** वैकुण्ठेषु रमणस्थलेषु **पक्ष्यादिरूपत्वं** स्वकर्णितेन रसोद्बोधः । तन्न्यायेन तस्य परम्परया रसोपयोगित्वम्, न तु साक्षात्, भवत्सु तु साक्षाद्योग्यतेति । **महात्मन्नित्यस्य**

विवृतौ **अनेनेत्यादि** । इयमेवावस्था उद्धवस्य भगवद्दर्शनात् तत्र पितृचरणानां मातृचरणानां च नित्यस्वानुभूतभगवत्स्थित्यैव सुखितत्वात् उद्धवोक्तज्ञानाप्रयोजकत्वम् । तेन एतदवस्थाया एव पुरुषार्थत्वमिति भावः । उद्धवस्तु तत्र नित्यस्थित्यज्ञानात् भावरूपत्वमेव मन्यत इति तत्समयस्यावस्थात्वकथनमिति भावः ।

**सात्वतां पतिरित्यत्र यादवाना**मित्यारभ्य **तथा समागमिष्यती**त्यादेरयं भावः । यादवानां पतित्वात्तत्र स्थित्वा रक्षणमावश्यकं, भगवद्भक्तानां चात्र-
१०-४३-३४ त्यानां पतिर्भर्ता, तेनात्र गमनमप्यावश्यकं, तस्मादप्यनुरोधात्तत्र येन स्वरूपेण स्थितिरुचिता तेन तत्र स्थित्वा नानुज्ञाप्य पुरुषोत्तमस्वरूपेण मार्गानुरोधाद्यत्किंचिद्वि-प्रयोगानुभवं विना रसानुभवाभावात्तथा गुप्ततया आगमिष्यतीति भावः । **यद्वा** । भक्तानां व्रजवधूनां पतिस्तस्मात्तन्मार्गानुरोधाद्गुप्ततयैवागमिष्यतीति भावः । अयमेवार्थोऽस्मत्प्रभुचरणै-रागमिष्यतीत्यस्य विवरणे 'नन्दं द्रष्टुं समागत एव भगवान्परं यथा न गोपिकाप्रतीति'रित्य-नेनोद्दीपितः ।

**कृष्ण इत्यस्य** विवरणे **फलरूपः सर्वनिरपेक्ष** इति । फलरूपत्वा-
१०-४३-३५ त्तदपेक्षा सर्वेषां भवति न तु तस्य काप्यपेक्षा । यतः स्वयमेव सर्वफल-रूपस्तथाभूतोपि यद्भवत्सु स्वस्याकाङ्क्षित्वं प्रकटीकृत्य भवन्तंप्रति निकट आगत्य तदा यदाह तत्सत्यमेव करोति । अन्यथा तदकरणे किमर्थमेतावत्कथनम् । तत्सुखार्थ-मन्यथोक्तमिति चेन्न, **सर्वनिरपेक्ष**स्य तत्सुखे प्रयोजनाभावादयमेवार्थोऽस्मदाचार्यैरनेन **हेतु-वादे प्रयोजनाभाव** इत्यनेन निर्णीतः । **सत्यं करोती**त्यस्य विवरणे **वर्तमानप्रयोगेणे-त्यादि** । एतादृग्भक्तदर्शनेनोद्धवस्यापि मनो खिन्नमिव जातं यदेतादृग्भक्तार्तिं भगवान्कथं सहत इति, तदा भगवता स्वदर्शनं कारितं तेन तथेति भावः । उद्धवेन तु मथुरातो भग-वदागमनमेव ज्ञायते न तु व्रजनित्यस्थितिरित्यागमनकथनमिति भावः । ननु तदज्ञाने कथं दर्शनमिति चेत् । उच्यते । प्रमाणाद्यनुक्तं श्रीमन्नन्दादिप्रमेयभक्तिदर्शनेनैतादृगार्तावपि भगवदनागमनज्ञानोदितस्वभक्त्याधिक्यनिराकरणार्थमेतदाधिक्यज्ञानार्थं च तथेति भावः । अत एवैतदाधिक्यज्ञानानन्तरं वदिष्यति 'एताः परं तनुभृत' इत्येतस्मिन्पद्ये । 'वाञ्छन्ति यद्भवभियो मुनयो वयं चे'त्यनेन सर्वेषां स्वस्य च तत्तदाकांक्षित्वमिति भावः ।

**मा खिद्यत**मित्यस्याभासे **ननु यथेदानी**मित्यादिकथनस्यायमाशयः ।
१०-४३-३६ श्रीनन्दबुद्ध्या श्रीमदुद्धवानां दर्शनं न भवतीति तथोक्तमिति भावः ।

**यथा भ्रमरिके**ति विवरणे **यथा वे**त्यारभ्य **इत्यर्थ** इत्यन्तम् । श्रीमदुद्धवस्य श्रीनन्दस्वास्थ्यदर्शनेन भक्तत्वान्यथाशङ्कमानस्य नाशो मा भूदिति
१०-४३-४१ भगवता पितृचरणसन्निधौ स्वदर्शनं कारितं तत्स्वरूपं पितृचरणैर्न ज्ञायते भगवता प्रमेयबलेनैवैतद्रक्षणं क्रियत इति श्रीमदुद्धवैस्तथाऽगादि । आचार्यैरपि श्रीमदुद्धव-

हार्दमभिप्रेत्य समाहितम् । अयमेवार्थः श्रीमदाचार्यैस्तदिच्छया क्वचिदुपलभ्यते क्वचिन्नेत्यनेन तथा च साक्षात्कारस्तु तदिच्छया भविष्यतीत्यनेनापि निरूपितः ।

गोप्यः समुत्थायेत्यत्र । न तु रात्रावेव निमित्तवशादुत्थानमित्यादेरयं भावः । उद्धवागमनज्ञानेन तथेति भावः । यद्वा भगवान् तासां निकटे नास्तीति
१०-४३-४४
निमित्तवशाद् दध्यादिनिमित्तवशाद्वा भगवद्रमणाज्ञानार्थमन्येषां वेति भावः । निरूप्य दीपानित्यत्र । तासां सम्पत्तिरधिकेति हरेर्निवासात्मगुणैरेतत्प्रकारेण पूर्वं या निरूपिता साधिकेति भावः । तेन भगवतोत्र नित्यस्थितिर्ज्ञापिता, अन्यथा तदभावे तद्ध्रासः स्यान्नतु तदाधिक्यम्, तेन बाहुल्येन साधिका निरूपितेति भावः । दीपबहुवचनवाच्यार्थनिरूपणे भगवत इत्यादि । तेन भगवानप्येतासामुत्थानानन्तरमुत्थायाग्रे वनगमने प्रियाविप्रयोगजक्लेशभरेणामंगलतोभयत्रापि मा भवत्विति मङ्गलारार्त्रिकं कारयित्वा वनं गत इति भावः । अनेनापि नित्यस्थितिरेव निरूपितेति भावः । वास्त्वर्चनार्थनिरूपणे भगवानत्रेति भगवद्विप्रयोगस्यातितीक्ष्णत्वेन क्षणवियोगेपि तापाधिक्याद्भगवत्स्थितिस्थलपूजनं तापापनोदार्थं प्रेमस्वरूपस्य तथात्वादिति भावः । भक्त्या प्रेम्णेति भावः । अत एव स्नेहो भक्तिरिति निरूप्यते । विकल्पत्वकथनेन भगवानत्र स्थित इति पूजनं व्रजवरवधूनां कुलधर्म एव । काश्चिद्भक्त्या वा सत्यादिगुणवत्यः पूजयन्तीति भावः । भगवानत्रेति पदमुभयत्रार्थप्रकाशकत्वेन देहलीदीपभावमनुहरति दधिमथनव्यंजितार्थनिरूपणे अनेनेत्यारभ्यातिथ्यं निरूपितमित्यन्तम् । अनेन दधिमन्थनेन तासां विप्रयोगाभावो ज्ञापितोन्यथा भगवद्विप्रयोगस्यातितीक्ष्णत्वेन सर्वस्मृतिनिरासकत्वात्तदसम्भावना स्यात्तेन तासां दुःखज्ञानेनोद्धवस्य खेदः स्याद्यतस्तदागमनं तत्सुखार्थं, तस्य च प्रभुवियोगदुःखेतिकठिनत्वात्सङ्गमातिरेकेण तदसम्भवाद्दधिमथनेन भगवन्नित्यस्थित्या सुखचारित्र्यज्ञानादातिथ्यं निरूपितमिति भावः । यतः सुखार्थमेवातिथ्यकरणं तज्जननेन तत्कृतेरातिथ्यमिति भावः । अयमेवार्थोऽग्रिमश्लोकावतारिकायां यद्यपीत्यादिना श्रीमदाचार्यैर्व्यक्तीकृतः ।

ता दीपदीप्तैरित्यत्र । स्वरूपापेक्षयेत्यादि । अत्रेदमुद्भाति । भगवद्विप्रयोगे स्वरूपकान्तेरभावान्मणीनां साधिका दृश्यते, तस्या अप्याधिक्यं भगवत्कण्ठ-
१०-४३-४५
स्थितमणिमालात्वात् । यथा भगवान्गोचारणसमये तासां स्वरूपात्मिकां मणिमालां बिभर्ति, तथा स्वविप्रयोगजतापाधिक्यशान्त्यर्थं स्वमालां स्वरूपात्मिकां दत्वा गोचारणार्थं गच्छति, तद्दत्तद्धारणजनितकान्त्या भगवद्योग्यतेति भावः । तद्दाने भगवतस्तदभिलाषो ज्ञाप्यते । अत एव भगवानपि तद्वियोगासहिष्णुस्तत्स्वरूपात्मिकां मणिमालां स्वयमपि बिभर्तीति श्रीमद्व्रजभाग्योदयभावाभिर्द्वात्रिंशाध्याये 'मणिधरः क्वचिदागणयन् गा' इत्यनेन पद्येन निरूपितम् । अत्रैव द्वितीयार्थनिरूपणे भगवद्गुणगानयोग्यता वेत्यस्यायं भावः । गुणगानस्य विप्रयोगे जीवनहेतुत्वाद्भगवदनाकाङ्क्षायां तत्करणानुचित-

त्वात्तथाभूतप्रेमवतीनां तेन स्वमणिमालादानेन स्वाकाङ्क्षा ज्ञाप्यते भगवता, तेन तद्दानयोग्यतेति भावः । **कङ्कणानां** स्रग्भावनिरूपणे **स्थूले**त्यादि । भगवद्विप्रयोगसमये दिवसे सौन्दर्यं सूक्ष्मेषु यथा तथा न स्थूलेष्विति स्वस्यानागरीत्वज्ञापनार्थमिति भावः । भगवद्वनगमनोद्यमक्षण एव तथा **क्षामत्वं** तेन तासां प्रेमाधिक्यमुत्तमत्वं च ज्ञापितमिति भावः । अत एव केनचिद्रसज्ञेनोक्तं 'यामीत्युक्ते'त्याद्येन 'भङ्गं समीयु'रित्यन्तेन पद्येन ।

**उद्गायतीनामित्यत्र** । गानतात्पर्योक्तौ **कार्ये**त्यारभ्य **लोकपरित्याग** इत्यन्तम् ।

१०-४३-४६ ऊर्ध्वगानोत्थध्वनिर्दिवं क्रीडाभावं भगवत्क्रीडास्थलं वनमस्पृशदिति कार्यम् । विप्रयोगे भगवदाकांक्षाज्ञानाद्भगवदर्थकजीवनार्थं गुणगानं तत्कारणमिति भावः । कुलवधूनां लज्जात्यागेनोर्ध्वगानं लोकविद्विष्टमेवं सत्यपि यद् गानं तत् कारणाधिक्यात् । भगवदर्थकजीवनस्थापनार्थं लोकपरित्यागः कृत इति भावः । अग्रे **तथा सती**त्यादिकथनं लोकमपेक्ष्येति भावः । गुणगानध्वनेर्दिवस्पर्शनतात्पर्यनिरूपणे । **भगवद्गुणा अपी**त्यादि । दिविधातोः क्रीडावाचकत्वात् क्रीडामस्पृशत् । अत्रायं भावः । यत्र भगवान् वने क्रीडति तत्र प्राप्त इत्यर्थः । यद्वा दिवं क्रीडाभावमेवास्पृशन्न तु विप्रयोगादिभावमिति भावः । भगवद्गुणगानं तु सर्वैरेव क्रियते, परमेतासां मुखं प्राप्य यथा क्रीडादिरूपत्वं गुणानां जातं न तथान्यत्रेत्यर्थः । अत्रायं भावः । एता भगवद्विप्रयोगसमये स्वकृतक्रीडादिरूपमेव गानं कुर्वन्ति, नत्वन्यगुणगानं, तेन तत्प्रकारकगुणगानं त्वेतासां मुखेनेति भावः । अत एवैता विप्रयोगे तथैव गायन्ति गोपिकागीतादिषु प्रेमामृते च 'सुरतवर्धनं' 'कृष्ण कृष्णे'त्यादि च । अत एव तासां महत्त्वज्ञानेनोद्धवोपि तत्पादरेणुयोग्यं जन्म स्यादित्यादिप्रार्थनां करिष्यति । अन्यथा भगवत्स्तुतस्य तस्य भगवद्दास्यप्राप्तस्य कथं तत्प्रार्थनमिति भावः ।

**सूर्यस्य** भगवत्त्वोक्तिनिरूपणे **तद्दिनसूर्य** इत्यारभ्य **परमपुरुषार्थदायी**त्यन्तम् ।

१०-४३-४७ तद्दिन एव गोपिकानामुद्धवदर्शनेन विप्रयोगस्फूर्त्या भगवत्स्मारकत्वात्तथेति भावः । तत्स्मारकत्वेन भगवत्कथनस्यायं भावः । भगवानेव विप्रयोगानुभवार्थं सूर्ये तथात्वं प्रकटीकृतवानित्यर्थः । उद्धवस्य च परमपुरुषार्थात्मकं व्रजवरवल्लभानां दर्शनं कारितवानिति भावः । अत एव परमत्वमिति भावः । एतद्दर्शनस्य पुरुषार्थरूपत्वमग्रे श्रीमदुद्धवैः स्वप्रार्थनया निरूपणीयमत एव ।

**व्रजस्त्रीव्रजगोपीशविलासरसनित्यता ।**
**यथामति विनिर्णीता तेन तुष्यतु मत्प्रभुः ॥ १ ॥**
**श्रीवल्लभपदाम्भोजमिलिन्दालकवृन्दकः ।**
**प्रार्थयामि सदा मेस्तु त्वयि भावस्तथाविधः ॥ २ ॥**
**श्रीविट्ठलपदाम्भोजमिलिन्दायितचेतसाम् ।**
**कदा लुठिष्ये मुदिता सततं पादरेणुषु ॥ ३ ॥**

३४-३९

यद्भावाद्गोपिकाधीशरतिः स्यात्प्रेमसंयुता ।
व्रजस्त्रीपादरेणुश्च सदा मह्यं प्रसीदतु ॥ ४ ॥
इति श्रीगोपिकाधीशवल्लभाचार्यगुंफिता ।
त्रिचत्वारिंशकाध्यायविवृतिर्विवृता मया ॥ ५ ॥
उद्धवागमनोद्भूतो व्रजनित्यस्थितौ प्रभोः ।
अनेनैव प्रकारेण छेत्तव्यः संशयो बुधैः ॥ ६ ॥
आतृणस्तम्बपर्यन्तं श्रुत्युक्ता व्रजनित्यता ।
निर्णीतास्मत्प्राणनाथैर्निश्चिन्ताः स्मो वयं ततः ॥ ७ ॥
स्वरूपरसमाधुर्यैः शिशिरीकुरुतेनिशम् ।
सव्रजो गोकुलाधीशो मामकं हृदयाम्बुजम् ॥ ८ ॥

---

श्रीवल्लभनन्दनः प्राणेशः प्रभुः सदा जीयात् ।

श्रीश्यामलात्मजश्रीव्रजराजकृता भागवतदशमपूर्वार्धराजसप्रकरणान्तर्गतत्रिचत्वारिंशाध्यायसुबोधिनीविवृतिः सम्पूर्णा ॥



श्रीकृष्णाय नमः ।

श्रीगोपीजनवल्लभाय नमः ।

हरिकृष्णपाहाडकृता

# भ्रमरगीतटीपिका ।

स्वमुखान्मूर्तिमुद्धृत्य स्वस्वरूपं निरूपितम् ।
मयि हीने प्रसीदन्तु तावुभौ पुरुषोत्तमौ ॥ १ ॥
नत्वा श्रीवल्लभाचार्यान् प्रभून् श्रीविट्ठलेश्वरान् ।
तद्वंश्यान् बालकान् सर्वान् गुरून् श्रीगोकुलेश्वरान्[1] ॥ २ ॥
श्रीमदाचार्यवाक्यानि दुर्बोधान्येव सर्वथा ।
तथापि तत्प्रसादेन चिन्तयामि यथामति ॥ ३ ॥

अथ श्रीभ्रमरगीतसुबोधिन्यादिषु क्वचित् क्वचित् बोधसौकर्यार्थं प्रकीर्णटीपिका लिख्यते । तत्र त्रिचत्वारिंशाध्यायकारिकार्थव्याख्याने गोस्वामिश्रीवल्लभानां लेखे ।

**विभेदकथनार्थमिति** । पूर्वं बहिः स्थित्वा निरोधं कृतवान्, अधुना अन्तः स्थित्वा निरोधं करोतीति विभेदकथनार्थमित्यर्थः । नन्वेवं तर्हि युगल-
१०-४३-० गीतादौ अन्तःस्थित्वा निरोधं केन रूपेण कृतवान्, इत्याकाङ्क्षायामाह **गुणगानादावित्यारभ्योक्त** इत्यन्तेन । **एवकारउक्त** इति । पूर्वं गुणगाने बहिःस्थितव्यूहविशिष्ट एवान्तःस्थित्वा निरोधं कृतवानित्येवकार उक्त इत्यर्थः । **अधुनेत्यारभ्य भेदेत्यन्त**स्यैवमन्वयः कर्तव्यः । तत्र **केवल** इति । केवलो भक्तहृदयस्थितः । अधुना अन्तःप्रकटो जात इति योज्यम् । **न तु बहिरिति** बहिःस्थितो वासुदेवव्यूहविशिष्टोधुना अन्तःप्रविष्ट इति भेद इत्यर्थः । **बहिःस्थितानामिति** सरिच्छैलादीनामित्यर्थः । **नत्वनुभावकत्वमिति** । सरितादीनां व्यूहविशिष्टस्य पूर्ववद्धृद्यनुभवकारयितृत्वं नेत्यर्थः । अत एवोक्तं **न तु बहिःस्थितोन्तः प्रविष्ट** इति । **कुन्त्यादीनामिति** । तदुक्तं प्रथमस्कन्धसुबोधिन्याम् 'गोप्याददे' इत्यत्र । 'कदाचिदहं गता गोकुले त्वां द्रष्टुम्, तस्मिन् समये' इत्यादिना । नन्वध्यायान्तरे गोपिकानां स्वतन्त्रतया निरोधकथने कोभिप्राय इत्याशङ्कायामाहुः **बाललीलायामित्यादिना** । **एतस्येति** । विकलत्वास्त्रास्थ्यादीनां निरोधाङ्गत्वादित्यर्थः । **पूर्वं तदकथनमिति** । तामसप्रकरणे राजसभावाभावादेतत्प्रकरणस्थनिरोधाकथनमित्यर्थः ।

---

१. गोकुलेश्वरानिति गोस्वामिश्रीमथुरानाथात्मजगोस्वामिश्रीगोकुलनाथानित्यर्थः ।

**गोस्वामिश्रीपुरुषोत्तमानां प्रकाशे** । **तेनोक्त**मित्यस्याभासे । **एवं सती**ति ।
अस्मिन् राजसप्रकरणे एतेषां विशेषेण निरोधनिरूपणे सतीत्यर्थः ।
१०-४३-० **अस्ये**ति । प्रकरणस्येत्यर्थः । नन्वत्राध्यायद्वयेन तामसानां निरोधकरण-लीला प्रसिद्धा, अतः कथमस्या लीलाया राजसत्वमित्याशङ्कायामाह **राजसस्वरूपेणे**त्यादिना । तथाच । 'गोपाये स्वात्मयोगेन सोयं मे व्रत आहित' इति वाक्ये पुष्टावङ्गीकृतानां स्वरूपेणैव मया रक्षा कार्या इति भगवता पूर्वमुक्तम्, अधुना तु तेषां 'आयास्य इति दौत्यकै'रिति राजसस्वरूपेण दूतद्वारा उक्तत्वेन राजसत्वमित्यर्थः । **तत्समर्थना**दिति । उद्धवप्रेषणादपि पूर्वोक्तराजसत्वसमर्थनादस्या लीलाया राजसत्वमित्यर्थः । **वचनोद्देश्यत्वेन चे**ति । उपदेशद्वारा हृद्यहमागमिष्ये, न तु प्रत्यक्षतया इति परोक्षतया कथनं राजसत्वमित्यर्थः । मूले **सम्** इत्युपसर्गस्यार्थमाह **पूर्वधर्मानपाया**दिति । पूर्वं यथा दूतद्वारा आयास्ये इत्युक्तम्, तथाधुनाप्युद्धवद्वारा समागत इति पूर्वधर्मस्य अत्यागाद्राजसत्वं सम्यगेव सिद्धमित्यर्थः । एवमत्र राजसप्रकरणे तामसानां कथा न संगच्छते इति शङ्कायाः परिहारस्तेनोक्तं च समर्थितं राजसत्वं च संसिद्धमित्यस्यार्थकथनेन उक्तः । अतःपरं स्वरूपेण रक्षणीयानां दूतद्वारा राजसभावेन समाधानं किमर्थमित्याशङ्कायाः परिहारस्तु 'गुणोत्कर्षश्चरूपित' इत्यनेनोक्तः । तत्र **गुणस्ये**त्यादिना अर्थत्रय्युक्ता तत्र **भगवदीयकृपाया** इति । भगवत्कृपाया उत्कर्ष इत्यर्थः । उत्कर्षमेवाह **तदीयप्रेम्णः** इति । 'ता मन्मनस्का मत्प्राणा' इति भगवद्वाक्यात्तदीयप्राणा इत्यर्थः । तृतीयार्थः **तेषामित्यादिना** । **उत्कर्ष** इति । तेषां तामसानां राजसप्रकरणे द्वितीयदलदानेनोत्कर्षोतिशयश्च निरूपित इत्यर्थः । तथाच । यदोद्धवद्वारा राजसभावेनैतासां समाधानं न कारयेत्, स्वयमेव कुर्यात्, तदैतासां पूर्वोक्तो गुणोत्कर्षो लोकप्रसिद्धो न भवेदित्यतो 'गोपाये स्वात्मयोगेन सोयं मे व्रत' इत्यादिना पूर्वोक्ता शङ्का परिहृता ज्ञेयेति । अथ दशमस्कन्धस्य त्रिचत्वारिंशाध्यायस्य सुबोधिन्यां गोस्वामि**श्रीहरिरायैः कृतायां दीपिकायां संयोग** इति । बहिरिति शेषः । तदा स्वयं बहिः स्थित एव लीलाभिर्निरोधनं कृतवानित्यर्थः । **वियोगे स्वरूपस्थित्यापी**ति गोचारणादिगमनेन वियोगे 'रेमिरेऽहस्सु तच्चित्ता' इत्यादिना युगलगीतादौ आन्तर्लीलाभिः स्वरूपस्थित्यापि निरोधनमुक्तमिति योज्यम् । **स्वरूपस्थित्यैव त**दिति । द्वितीयाध्याये 'ज्ञात्वात्मानमधोक्षज' मित्यत्रोक्तस्वरूपस्थित्यैव निरोध इत्यर्थः । **किं निरोधन**मिति निरोधस्तु पृथक् स्थित्या भवेदिति भावः । **स्वस्थित्ये**ति स्वामिनीषु रसात्मकं स्वस्वरूपं स्थितम्, तत्स्वरूपमात्रे भगवता स्वामिनीनामासक्तिकरणमित्यर्थः । **बहिष्ठे**ति । यन्मथुरायां स्थितं तस्मिन् निरपेक्षणकरणमित्यर्थः । **अत्रे**ति । आन्तरनिरोधे इत्यर्थः । **त**दिति । निरोध इति भावः । **अत्रे**ति । अस्मिन् विप्रयोग इत्यर्थः । **किं कैवल्य**मिति । केवलस्य भावः कैवल्यं केवल-

त्वं किमित्यर्थः । **सर्वत्रेति** । युगलगीतादिषु वर्णितस्य विप्रयोगस्यापीत्यर्थः । अत्रत्यवियोगस्य केवलत्वं दर्शयति **स्वरूपेत्यादिना** । तत्र **स्वरूपं** भगवत्स्वरूपम् । **लीला** रासादिः । **तत्सामग्री** वृन्दावनादिः । **आन्तरानुभवहेतुत्वेनेति** । तेषां स्वरूपादीनामान्तरैव स्मरणहेतुत्वेनेत्यर्थः । **विप्रयोगभावात्मक**मिति । अतोस्मिन् वियोगे स्वरूपादीनां केवलवियोगभावात्मकत्वं 'न तु रेमिरेऽहस्सु तच्चित्ता' इति युगलगीतादिवदान्तररमणहेतुत्वमिति भावः । **अत एवेति** । यत आन्तरस्मरणे स्वरूपादीनां स्मारकत्वमुक्तमत एवेत्यर्थः । **लीलापदार्थानामिति** । सरितादीनामित्यर्थः । **तेषां पदार्थानामिति** । भगवत्स्वरूपादिपदार्थानामित्यर्थः । **भावात्मकत्वेन** इति । स्मरणमात्रकत्वे इत्यर्थः । **तेषामिति** । भगवत्स्वरूपादिपदार्थानाम् । **तदात्मकत्वेनेति** वियोगात्मकत्वेनेत्यर्थः । **सु० विनिरूप्यत** इत्यस्यायमर्थः, यद्यप्यत्र स्वस्थित्यैव निरोधनादित्यस्यार्थः स्वामिनीनां हृदि स्थित्वा भगवान् निरोधं कृतवानित्युक्तम्, तथाप्यस्मिन्नध्याये यशोदानन्दयोः चकाराद्गोपानां च निरोधः पूर्वं बहिःस्थित्वोक्तोप्यधुना विनिरूप्यते इति विशेषेण निरूप्यते इति योज्यम् । **गोपिकानां वाच्य** इति अग्रिमाध्याये अन्तःस्थित्या गोपिकानां निरोधो विशेषेण वाच्य इति योज्यम् । तथा च । नन्दादीनां धर्मविशिष्टेन निरोधः कृतो, गोपिकानां तु केवलधर्मिरूपेण निरोधः कृत इति विशेषः । **तेनोक्तं** चेत्यत्र **ह० दी० परोक्ष** इति । गोपीनामधुना भगवति परोक्षेपीत्यर्थः । **लीलानिरुद्धत्वमपीति** । पूर्वं गोपिकानां तामसप्रकरणे संयोगवियोगलीलाभिर्निरुद्धत्वं यदुक्तम्, तदप्यधुना अन्तर्बाह्यवियोगानुभावनेन समर्थितं दृढं जातमित्यर्थः । **विक्षेपवद्भावसम्पत्त्येति** विकलत्वास्वास्थ्यादिभावसम्पत्त्येत्यर्थः । **भगवत्समत्वेति** । अमृतादिपदेन भगवत्समत्वमित्यर्थः । **एतत्कथयेति** । यदनुचरितलीला इत्यादिकथयेत्यर्थः ।

**वृष्णीनां प्रवर** इत्यस्याभासे । **तेषामेव च सम्बन्धः पुत्रत्वादिरूपः स्थापित** इत्युक्तम्, तदर्थो ह० दी० 'ज्ञातीन् व' इत्यादिनोक्तः, तत्र **स्थापित**
१०–४३–१ इति । पुत्रत्वादिरूपः सम्बन्धः भगवता स्थापित इत्यर्थः । तत्र **वसुदेवादिष्वित्यादिना** शङ्कामुद्भाव्य **समाधानायेत्यादिना** परिहृता । जन्मप्रकरण**टिप्पण्यामिति** । 'आविवेशांशभागेने'त्यत्र टिप्पण्यामित्यर्थः । नन्दगृहे प्रादुर्भूतस्यैव पुरुषोत्तमस्य सर्वतः पाणिपादान्तत्वेन वसुदेवगृहे प्रादुर्भाव उच्यत इति योज्यम् । ननु पुरुषोत्तमस्य लीलामात्रैककृते लीलार्थं पुत्रत्वस्वीकारो नन्दगृहे एवेति पूर्वमुक्तम्, तदा वसुदेवगृहे किमर्थमाविर्भाव इत्याशङ्कायामाह **तदा कार्यमस्तीति** । तदा वासुदेवादिव्यूहरूपेण मोक्षादिदानकार्यमस्तीत्यर्थः । तदपि टिप्पण्यां तत्रैवोक्तं द्रष्टव्यम् । अग्रे **स्थापित** इत्यादिना पुनरप्या-

शङ्कामुद्भाव्य परिहरति । तत्र **अत्र स्थित्येति** । गोकुले स्थित्येत्यर्थः । **तत्सम्बन्ध** इति । वसुदेवानीतस्वरूपे पुत्रत्वेन नन्दादीनां सम्बन्ध इत्यर्थः । **एतत्सम्बन्धो वेति** । साक्षात्पुरुषोत्तमे वा नन्दादीनां पुत्रत्वेन सम्बन्धो वेत्यर्थः । **तेन रूपेणेति** । वसुदेवानीतप्रद्युम्नादिव्यूहविशिष्टरूपेणेत्यर्थः । **सु० वृष्णीनामित्यस्याभासे** । **तत्र मध्ये विद्याग्रहणेनेति** । गुरुसान्दीपनीतः विद्याग्रहणेनेति लोकप्रसिद्धोर्थः । अग्रे **विद्यातः** इत्यस्यार्थो **ह०दी०** उक्तो ज्ञेयः । **व्याख्याने वृष्णीनामित्यत्र** । ननु त्रिविधानां सन्देशकथनार्थं प्रेषणे कथमुद्धवस्य स्वरूपयोग्यतेत्याशङ्कापरिहारार्थं **वृष्णीनां प्रवर** इति पदस्यार्थत्रयमुक्ता। **कुलीनः स्वगोत्रजः महानिति** । तत्र महानिति प्रवरपदस्यार्थो ज्ञेयः । तत्र **कुलीनः सर्वकर्मसु प्रशस्त** इति । ज्ञानोपदेशसन्देशादिकथनसर्वकर्मसु कुलीनः प्रशस्त इत्यर्थः । **तत्र** यथा यशोदानन्दयोः कुलीनत्वं तथोद्धवस्यापि वृष्णित्वात् कुलीनत्वम्, अतस्तयोरुपदेशार्थं तदग्रे प्रेषणे उद्धवस्य **स्वरूपयोग्यता** निरूपिता इति भावः । **स्वगोत्रज** इति । यथोद्धवो भगवद्गोत्रजस्तथा गोपा नन्दगोत्रियाः, अतो गोपा मित्रभूतास्तदग्रे गोप्यसन्देशकथने योग्यत्वमिति भावः । **महानिति** । विरहव्यासानां व्रजवधूनां 'मधुप कितव' इत्यादि वक्रोक्तिरूपाणां वाक्यानां श्रवणेनापि क्षोभाभावात् महानित्यर्थः । अत एवाग्रे 'विरहेण महाभागा महान् मेऽनुग्रहः कृत' इति स्वयमेव वदिष्यतीति । अतो गोपिकानामग्रे सन्देशार्थकथने उद्धवस्य प्रेषणे योग्यता निरूपितेत्यर्थः । **मन्त्री**पदस्यार्थः 'स हि मन्त्रं न प्रकाशयती'त्युक्तः, तदर्थो **व. ले. नित्ययोगे मत्वर्थीय** इति प्रत्ययस्यार्थो नित्यं तेनैव सह मन्त्रस्य योग इति ज्ञेयः । **बहिर्न प्रकाशयतीति** मत्रि गुप्तपरिभाषणे इति धात्वर्थो ज्ञेयः । **कृष्णस्य दयित** इत्यस्याभासार्थकथने **तदनुचित**मित्यादेरयमर्थः । विप्रयोगे यथा नायिका प्रलापदैन्यादिकं करोति, तथा नायकोपि करोतीति रसमर्यादा । तथा भगवदुक्तसंदेशे उद्धवस्य तदज्ञानाद्भगवति तदनुचितं मत्वा यदि न वदेत् तदा गुह्यार्थे प्रेषणमयुक्तमित्याशङ्कायाः समाधानं त्वत्यन्तप्रीतिविषयत्वादुद्धवे नैष दोष इति ज्ञातव्यम् । एतदर्थः **सखे**ति पदस्यार्थकथने **समानशीले**त्यादिनोक्तः । तदर्थः **ह० दी०** उक्तो द्रष्टव्यः । **सु० एतादृशो भवतीति** प्रीतिविषयो भवतीत्यर्थः । **तथात्वे** इति । गुरुत्वे इत्यर्थः । **तथापी**त्यादेरयमर्थः । यथा वैदिकशास्त्रे नीतिज्ञश्चेद्देशकालप्रकरणादिनिरपेक्षतया वदेत्तदा यथार्थमपि भाषितं फलाय न भवेत्, तथात्राप्यनीतिज्ञश्चेदित्यादि योज्यम् । **परम्परयेति** । आनन्दहेतुस्तु बन्धोरागमनं भवति । तदागमनख्यापकोप्युत्सवहेतुर्भवतीत्युक्तम् । **अयं तु साक्षादिति** । मह उद्धव उत्सव इतिकोशे नामनिरुक्त्या अयं तु साक्षादुत्सवात्मक इत्यर्थः । **एनं दृष्ट्वैव जानन्तीति** । 'नोद्धवोण्वपि मन्न्यून' इति भगवद्वाक्याद्भक्ता एनं दृष्ट्वैव भगवद्रूपं जानन्तीत्यर्थः । **स्वतोपि छाययेति** । अत्रायमर्थः । 'यो यच्छ्रद्धः स

एव स' इति वाक्यात् 'नोद्धवोण्वपि मन्न्यून' इति विशेषवाक्याच्चोद्धवे भगवच्छायात्वं सिद्धम्। तेन तद्बुद्धेरपि भगवद्बुद्धिछायात्वमपि सिद्धम्। तथा **गोकुलवासिनामग्रे** 'कृष्णलीलाकथा गायन् रमयामास गोकुल'मित्यादिना स्वयमपि दुःखं दूरीकरिष्यति इति ज्ञेयम्।

**गच्छोद्धव** इत्यत्र। **तदुपपादितमिति**। 'स पिता सा च जननी यौ पुष्णीतां स्वपुत्रव'दिति पूर्वमुपपादितम्। अथवा। पूर्वपीठिकायां **व. ले. साक्षा-**
१०-४३-३
**दित्यादिनोक्तं** द्रष्टव्यम्। **आत्मेति**। 'ता मन्मनस्का' इत्यत्रास्मच्छब्दोक्तगोपिकानामात्मेत्यर्थः। **स्वरूपबलमिति**। मूले भगवतः प्रमेयबलत्वेन कथने तासां स्वरूपबलमेव विशेष इत्यर्थः।

**ता मन्मनस्का** इत्यत्र। **स्वरूपमाहेति** पु.प्र. **नियोगात्मकप्रमाणवाक्योप-ष्टम्भायेति**। पूर्वश्लोके 'गोपीनां मद्वियोगाधिं मत्सन्देशैर्विमोचये'ति
१०-४३-४
भगवन्नियोगात्मकं प्रमाणं वाक्यं तत्रोपष्टम्भाय 'ता मन्मनस्का' इत्यादि भगवद्वाक्ये गोपिकानां स्वरूपमाहेत्यर्थः। **आत्मेति**। 'ता मन्मनस्का' इत्यादि भगवद्वाक्ये गोपिकानां स्वरूपमाहेत्यर्थः। नन्वेवं यथैतासां त्वमात्मा, तथा सर्वेषां त्वमात्मा तदा सर्वेषामात्मत्वेपि किमर्थं तेषां सर्वेषामनादर इत्याशङ्क्याह **सु. प्राणिनामित्यादिना**। तेषामनादरे हेतुमाह **किंत्वित्यादिना**। **तदाहेति**। तत्र दृष्टान्तार्थं गोपिकानां देहेन्द्रियाण्युत्पत्तिशिष्टानि भगवत्पराण्याहेत्यर्थः। **त्यक्तो लोकधर्मो वैदिकश्च यैरिति**। त्यक्तो लौकिकपूर्वमीमांसारूपो वैदिकधर्मो यैश्चेति योज्यम्। **चकारात् सर्वे लौकिक-धर्मा वेदाश्चेति**। त्यक्ताः सर्वे केवललौकिकधर्मा अथ चोत्तरमीमांसारूपा वेदधर्माश्च यैरिति योज्यम्। तदेवोक्तं **व. ले. तथा** चेत्यादिना।

**मयि ता** इत्यत्र। नन्वेवं विरहे सत्यप्यन्तर्गृहगतावत् कथं न मरणमित्याशङ्क्याह **अचिकित्स्यदोषादिति**। तथा चैतासां भगवदिच्छया द्वितीयदलानु-
१०-४३-५
भवार्थमलौकिकसामर्थ्यान्न मरणमिति। एतत् सर्वं 'अलब्धरासाः कल्याण्यो मापुर्मद्वीर्यचिन्तया' इत्यत्र सुबोधिन्यां 'दुरितं दृष्ट एवोपक्षीण'मित्युक्तम्। तदर्थो **व. ले.** द्रष्टव्यः।

**धारयन्तीत्यत्र**। **बह्वयो मृता** इत्यस्यार्थो **ह. दी. भगवदित्यादिनोक्तः**, तत्र **तत्प्रविष्ट** इति। रसात्मको भगवान् प्रविष्ट इत्यर्थः। **तदानीमिति**।
१० ४३-६
वरदानसमये इत्यर्थः। **भेदेन दर्शनं दत्तमिति**। 'श्रुतयो यत्र शेरत' इति वाक्यात् पूर्वं श्रुतयो भगवति अभेदेन शयनं कुर्वन्तीति, तदा तु वरदानार्थं भेदेन

दर्शनं दत्तमित्यर्थः । **तथेति** । स्वयं नन्दग्रहे भेदेन प्रकटो जात इति योज्यम् । **तथैव** श्रुतयोपि गोपगृहेषु भेदेन प्रकटा जाता इति ज्ञेयम् । पश्चान्निरोधरूपे **सिद्धे कार्ये** सति गोपीरूपा श्रुतयः आधिदैविकश्रुतिषु प्रविष्टाः । **तासामिति** । आधिदैविकश्रुतीनां भगवति प्रवेश इत्यभिप्रेत्य श्रीमदाचार्यवर्यैस्तथोक्तमिति **बह्वयो मृता** इत्युक्तमित्यर्थः । **कात्यायनीप्रवेशादिरूपा** इति । अग्निकुमाराणां प्रथमं कात्यायनीप्रवेशस्तद्द्वारा भगवति प्रवेश इत्यर्थः । एवं श्रीहरिरायचरणैः श्रुतीनामग्निकुमाराणां च भगवति प्रवेश इति निर्णयः कृतः । तत्रायमाशयः । **कथञ्चन** पदस्यार्थकथने एतासां प्रमेयबलेन प्राणधारणमुक्तम्, देहस्य तु गुणमयाभावात् भगवति विद्यमाने च अन्यथात्वशङ्कैव नास्तीति न कापि शङ्का कार्येति भावः । तर्हि निरोधरूपे सिद्धे कार्ये भगवति प्रवेशः कथमुक्त इत्याशङ्कायाः परिहारस्तु लीलास्थानां तु प्रतिक्षणं भगवति लयो भवति, ततो भजनानन्दं दातुं पुनरुद्धरणं भगवान् करोतीति तदेवोक्तं युगलगीतसुबोधिन्यां 'भगवान् यद् गोकुलं गोष्ठे समानयति तत् कृपया, अन्यथा एकस्यां लीलायां व्यापृता गावो मुच्येरन्, तथा गोपिकाः, परं कृपयैव भजनानन्दानुभवार्थं तथा करोति, अत्र हेतुः यदगध्र इति । यद्यस्मात् कारणात् अगं पर्वतं धारयतीति । यदि भजनानन्दं न दद्यात् तदा गोवर्धनोद्धरणं न कुर्यादिति' ।

**धारयन्ती**त्यत्र । **बह्वयो मृता** इत्यत्र । **मरणमेवोचित**मिति । मद्विरहे तासां मरणमेवोचितमित्यर्थः । तर्हि जीवने कोपपत्तिरित्याशङ्कायां **कथञ्चन**पदेन जीवने याऽप्रसिद्धोपपत्तिरुक्ता, तां पूर्वश्लोकेऽस्मच्छब्दोक्तप्रमेयबलत्वेन उक्ता, तामत्र पुनः श्रीमदाचार्यचरणा उद्घाटयन्ति **प्रमेयबलेने**त्यादिना । तदेवोक्तं पूर्वश्लोके सुबोधिन्यां 'मय्येव सति जीवन्ती'ति । तदर्थस्तु **पु. प्र.** एतेनाहमेव प्राणो यासामित्यादिनोक्तोद्रष्टव्यो नान्यप्रकारेण विचारणीय इति ।

**प्राप्त** इत्यत्र । **सु. विशेषाकारेण कालस्य तथात्वादि**त्युक्तम् । तदर्थः **पु०प्र०।** तत्र भगवदागमनकालः स इत्युक्तम् । ननु तदानीं भगवदागमनं केन
१०-४३-८ प्रकारेणेत्याकाङ्क्षायामत्रायमर्थः । विद्वन्मण्डने नित्यलीलायां **छान्दोग्ये पठ्यते** इत्यारभ्य 'अग्रे भगवतः पुरं लीलास्थानं श्रीगोकुलमथुराद्युच्यते' इत्युक्तम् । तदग्रे श्रीगोकुलस्थभक्तहृदकमलस्य दहरत्वमुक्तम्, तेन भक्तानां विशेषाकारेण हृद्येव भगवदागमनप्रकारो लक्ष्यते । तदेवोक्तं 'वृष्णीनां प्रवरो मन्त्री'त्यस्य पूर्वपीठिकायां **व. ले.** अत्रायमभिसन्धिरित्यादिना । एतदेवात्रोक्तं **अत एव** इत्यादिना । **प्राप्त** इत्यत्र **ह. दी. विहरणं तदेति** । तस्मिन् समये **अग्निहोत्रिणामग्नेरस्तसमया**च्छादनकाल इत्यर्थः ।

**गायन्तीभिश्चेत्यत्र। सु. शुभानीत्यस्यार्थकथने त्यक्त्वा गतइति**। भगवांस्त्य-
क्त्वा गत इत्यपि कर्म भवतीति वियोगावस्थायां तदपि गायन्ति, अत
१०-४३-११ एव कविभिरपि गीतानि भवन्ति। तथापि तत्कर्मगानं स्वस्य हितकरं
न भवति तद्व्यावृत्त्यर्थं वेति तत्कर्मव्यावृत्त्यर्थं शुभानि कर्माणि बालचरित्रादीनि गायन्ती-
त्युक्तमिति वार्थः।

**अग्न्यर्कातिथीत्यस्याभासे। प्रवृत्तिस्वभावमिति**। अत्रायमर्थः। अग्न्यर्का-
तिथ्यादीनामर्चनं प्रवृत्तिस्वभावमेव ज्ञानम्। 'भक्तानां गृहमेव विशिष्यते'
१०-४३-१२ इति वाक्यात्, पुष्टिमार्गीयभक्तानां प्रवृत्तिस्वभावमेव ज्ञानमुपयोगी-
त्यर्थः। तदेवोक्तं **पु. प्र.** भक्त्युपयोगीत्यर्थः। अग्न्यर्कातिथीत्यत्र **सु. धर्मप्रस्ताव** इति।
अग्न्यर्कातिथीनां पूजनप्रस्तावे इत्यर्थः। **आधारत्वेन निरूपित**मिति। गृहाणां धर्मा-
धारत्वेन सुन्दरता निरूपिता इत्यर्थः। तथा च। 'अधना अपि ते धन्याः साधवो गृह-
मेधिनः। यद्गृहास्तीर्थवर्याम्बुतृणभूमीश्वरावराः। व्यालालयद्रुमा वै तेप्यरिक्ताखिलसम्पदः।
यद्गृहास्तीर्थपादीयपादतीर्थविवर्जिता,' इति वाक्यात् व्रजस्य गृहा सुन्दराइत्यर्थः।

**तमागत**मित्यत्र। **व. ले०। तेनेति**। प्रीतियुक्तेनेत्यर्थः। **उक्तन्यायेनेति** फलं
१०-४३-१४ च पुरुषार्थत्वादित्युक्तन्यायेनेत्यर्थः। **पुंप्रीति**रिति। नन्दप्रीतिरित्यर्थः।

**कच्चिदङ्गेत्यत्र। सु. अनेनेति**। अपत्याद्यैर्युक्त इति कथनेनेत्यर्थः। **पु. प्र.
तस्येति**। विरोधस्येत्यर्थः। **इतीति**। इति सुबोधिन्युक्तपरमानन्द-
१०-४३-१६ पदस्य वार्थः। तेन विरोधस्य परिहारः। **सु. चिन्तेति**। वसुदेवस्य
सर्वचिन्ताव्यावृत्त्यर्थमित्यर्थः। **कच्चिदङ्गेत्यत्र अन्यतोपि समागता पुत्रादयश्चेति**।
वसुदेवस्याष्टादश भार्यास्ताः सर्वा अपि देशान्तरात् समागताः, यथा रोहिण्यां गदो जात-
स्तथान्यतोपि समागताः पुत्रादयश्चेत्यपि पृष्टमित्यर्थः। एवं प्रश्नेन नन्दस्य शुद्धत्वमाह
**स्वस्येत्यादिना। पु. प्र. तस्येति**। निरोधस्येत्यर्थः। **इतीति**। इत्याशङ्क्याहेत्यर्थः।
**बाललीलेति**। सुबोधिन्युक्तपरमानन्दः प्रापित इत्यस्यार्थो बाललीलासुखानुभावनेनेति
वार्थ इत्यर्थः। **चिन्तेति**। वसुदेवस्य सर्वचिन्ताव्यावृत्त्यर्थः इत्यर्थः।

**दिष्ट्येत्यत्र। सु. आमयरूप इत्यशक्य इति च। इन्द्रादीनामप्यशक्य इति**
कंसनामनिरुक्तेरर्थः कुतो ज्ञेयः। तदेवोक्तं 'महामयस्तु कंसः स्यादि'ति
१०-४३-१७ विश्वकोशे। तदेवोक्तं **ह. दी. कंसशब्दस्येत्यादिना**। तत्र पादोपरि-
गतरोगस्तु महामय इत्यस्यार्थो ज्ञेयः। ततोऽस्य छेदनेनैव निवृत्तिः, नत्वोषधीभिः, अतः

कंसस्यापि भगवता छेदनं कृतं, तद्दिष्ट्या भद्रं जातमित्यर्थः । अतोत्र भगवति प्रातीतिको दोषोपि परिहृत इति भावः । **तदर्थमाहे**ति । प्रातीतिकदोषपरिहारार्थमाहेत्यर्थः ।

**अपि स्मरतीत्यस्याभासे । व. ले. पूर्वोक्तेने**ति । दिष्ट्या कंसो हत इति पूर्वश्लोकोक्तदोषाभावरूपः स एव गुणातीतरूप इति दशभिरित्यर्थः ।

१०-४३-१८ **अपि स्मरतीत्यत्र सु. चिन्तात्रे**ति । अत्र मात्रादिसुहृदां स्मरणसंस्कारोद्बोधिका चिन्ता हेतुरस्तीति । अपि स्मरतीति सम्भावनया सापि निरूपिता तदेवोक्तं पु. प्र. **सम्बन्धस्ये**त्यादिना । अतो युक्तमुक्तं मातरमित्यादिपदैः सम्बन्धानाहेति । **सु. विशेषलीलाधारे**ति । रहस्यलीलाधारेत्यर्थः ।

**अप्यायास्यतीत्यत्र । गुणभाव** इति । यशोदादीनां लालनादिगुणभाव इत्यर्थः ।

**सुस्मितेक्षण**मित्यस्यार्थकथने **सु. नित्यं निरीक्षितमि**ति । ननु

१०-४३-१९ कृपादिसहितनिरीक्षणस्य नित्यत्वं कथमित्याकाङ्क्षायां **व. ले. वक्त्रमध्ये** इत्यादेरयमर्थः । भगवद्वक्त्रस्य नित्यत्वान्निरीक्षणस्यापि नित्यत्वं ज्ञेयम् । **सु. कामितमिवेति** । नन्दस्य प्रेमाधिक्याद्भगवन्निरीक्षणं कामितमिव जातं, अत एव 'तर्हि द्रक्ष्याम तद्वक्त्र' मित्याद्युक्तमित्यर्थः ।

**स्मरतामित्यत्र । सु. उभयथापि गमन**मिति । प्रेम्णा गमनं स्वसुखार्थं वा

१०-४३-२१ गमनमत उभयथापि गमनं बाधितमित्यर्थः ।

**मन्ये कृष्णं च रामं चे**त्यत्र । **चकारद्वय**मिति । रामो मुकुन्दः **सर्वदेवगण-**

१०-४३-२३ **समुच्चयरूपो**पीति ज्ञापनार्थे चकारद्वयमित्यर्थः ।

**कंसं नागायुत** इत्यत्र । **सात्त्विकी**ति । वसुदेवादीनां रक्षानिरूपणरूपा सात्त्विकी लीला, सा 'कंसं' इति श्लोके निरूपिता । **राजसी**ति । सहजधनु-

१०-४३-२४ र्भङ्गेन सामर्थ्योद्बोधिका लीला सा 'तालत्रये'त्यत्र निरूपिता । **तामसी**ति । बाललीलादौ प्रतिबन्धकर्तॄणां प्रलम्बादीनां क्रोधेन बलदेवादिरूपेण मारणरूपा तामसी लीला सा क्रमेण निरूपिता इति श्लोकत्रयेण निरूपिता इत्यर्थः ।

**तालत्रयमित्यत्र । प्रकारान्तरेणे**ति । पूर्वोक्तमन्त्रादिसामर्थ्यप्रकाराभावेनेति

१०-४३-२५ भावः ।

**तयोरित्थमित्यत्र । पु. प्र. उपसर्जनत्वेने**ति । यद्यपि राधामाधवयोरितिवदुपसर्जनत्वेन यशोदापदस्य पूर्वनिपातोपेक्षितोस्ति, तथापि वरयाचनस्य नन्द-

१०-४३-२९ कृतत्वात् । **अभ्यर्हितत्वबोधनाये**ति । नन्दस्य पूज्यत्वबोधनायेत्यर्थः ।

**तथोक्त**मिति। नन्दस्य मुख्यत्वात् पूर्वं नन्दनामोक्तम्। ननु 'माता पितृशताधिका' इति वाक्यात् कथं यशोदाया न विशेष इत्याशङ्कयाह **सु. सहज** इत्यादिना।

**एतावित्यत्र। मूले। एतौ हि विश्वस्य च बीजयोनी रामो मुकुन्द** इत्युक्तम्।

१०-४३-३१ तत्र बीजस्य समवायित्वे विप्रतिपत्तिः **पु. प्र. नन्वित्यादिना**शङ्कय सुबोधिन्यां परिहृता। तत्र **बीजस्य समवायित्वे** इति। बीजं तु सूक्ष्मं, तस्यैव समवायित्वे इत्यर्थः। **कार्यस्येति**। कार्यरूपवृक्षस्येत्यर्थः। **तदपेक्षयेति**। बीजापेक्षयेत्यर्थः। **गुरुत्वेत्यादि**। वृक्षस्य गुरुत्वपरिमाणादाधिक्यं न स्यादित्याशङ्का। **सु. तत्रेत्यादिना** समाधानम्। **तत्रेति** बीजे। **सजातीयत्वमिति**। बीजसजातीयत्वमापद्यमाना भूम्यवयवाः बीजं पुष्णन्ति इत्यर्थः। **ततो वर्धते** इति। भगवत्सामर्थ्येन वर्धते इत्यर्थः। **पु. प्र. उक्तदोषाभावादिति**। आशङ्कोक्तदोषाभावादित्यर्थः। **तावन्मात्रस्येति**। सूक्ष्ममात्रस्य बीजस्येत्यर्थः। एवं सति गुरुत्वपरिमाणाद्याधिक्यं न स्यादित्याशङ्कायां चोक्तदोषो भगवत्सामर्थ्येन परिहृतो ज्ञेयः। अतो **न समवायित्वक्षति**रित्यर्थः। एवं बीजस्य समवायित्वे विप्रतिपत्तिःपरिहृता। तथा योनेर्निमित्तत्वेपि विप्रतिपत्तिः **पु. प्र. नन्वित्यादिना**शङ्कय **सु. सजातीयैवेत्यादिना** समाधानेन परिहरन्ति। **पु. प्र. सिद्धाविति**। बीजस्य कार्यमहत्वादिसिद्धौ इत्यर्थः। **पु. प्र. योनेर्निमित्तत्वमिति**। उभयोर्बीजसमवायित्वे योनेर्निमित्तत्वं मूलोक्तं न स्याद् इत्यपेक्षायां **प्रकारं बोधयितुमिति**, उभयोः प्रकारं बोधयितुमित्यर्थः **दृष्टानुरोधेनेति। सुबोधिन्यां विजातीयायां नोत्पद्यते** इत्यादिनोभयोर्निमित्तकारणत्वं समर्थयन्तीत्यर्थः। **सु. सजातीयैवेति**। बीजसजातीया योनिरपि मृग्यत इत्यर्थः। **विजातीयायां नोत्पद्यते** इति। पश्वादिषु योनिषु विजातीयेन बीजेन सजातीयं फलं नोत्पद्यत इत्यर्थः। तदर्थः **पु. प्र. विलक्षणं वा स्यादिति**। योनिबीजविलक्षणं अश्वतरादि वा स्यादित्यर्थः। **सु. तदिति**। तस्माद्बीजयोन्यात्मकमुभयमित्यर्थः। **दृष्टं कारणमिति**। लोकवेदप्रसिद्धकारणमित्यर्थः। **पु. प्र. उभयोरपीति**। रामकृष्णयोर्बीजयोनित्वे **विप्रतिपत्तिर्न कार्येत्यर्थः। तेन तथेतीति**। जलान्नादीनां न मुख्यं कारणत्वमित्यर्थः। **सशरीरस्येति**। बीजसहितशरीरस्येत्यर्थः। **पोषकत्वमिति**। जलान्नादेः पोषकत्वमित्यर्थः। **उभयोरिति**। रामकृष्णयोः समवायित्वमेवाङ्गीकार्यम्, न तु निमित्तत्वमङ्गीकार्यं इत्याशङ्का। तत्समाधानं **सुबोधिन्यां**। तत्र **यद्येकप्रकारेण भवेतामिति**। केवलसमवायित्वेन विश्वोत्पत्तिकारणं भवेतामित्यर्थः। **वृद्धिह्रासावित्यादे**रयमर्थः। 'स आत्मानमेवाकुरुत' इति 'स एतावानास' इत्यादिश्रुत्युक्त्या ब्रह्मणि समवायित्वेन वृद्धिह्रासौ न सङ्गच्छेयाताम्। तथा जगतः सत्कार्यत्वादाविर्भावतिरोभावावपि न सङ्गच्छेयातामित्यर्थः। सिद्धार्थमाहुः

**तत** इत्यादिना । पु. प्र. । पुनराशङ्कते **नन्वित्यादिना** । तत्र । **उक्तकार्यार्थ**मिति । विश्वोत्पत्त्यर्थमित्यर्थः । **रूपभेद** इति । समवायिनिमित्तात्मकरूपभेदो न युक्त इत्यर्थः । **कार्यान्तरादपी**ति । जलान्नादेरपीत्यर्थः । **सु. उभयो**रिति । योनिबीजयोः **साधका अन्येपि** जलान्नादयो **मृग्यन्ते** इत्यर्थः । पु. प्र. **आदौ सहकार्य**भावे **मानाभावा**दित्युक्तं, तत्र हेतुमाह **योनिसामर्थ्येन** इत्यादिना । तत्र **स्वरूपोत्कर्षस्य सिद्धेरुक्ता**मिति । **रामो मुकुन्दः विश्वस्य योनी** इति मूले उक्तम्, अतो योनिसामर्थ्येनापि स्वरूपोत्कर्षस्य सिद्धिरुक्ता, अतो योनेः सहकार्यत्वमायातम्, अतः सहकार्यभावे मानाभावः सिद्ध इति भावः । **न साधीय** इति । योनेः स्वरूपोत्कर्षत्वं यत्पूर्वोक्तम्, तन्न साधीय इत्यर्थः । पु. प्र. **तदनपेक्ष**मिति । क्षयवृद्ध्यनपेक्षं वा विश्वपुरुषमुत्पाद्येत्यर्थः । **सु. बहुधोपयोगाये**ति । भोगमोक्षोपयोगायेत्यर्थः । **शक्तिसमूह**मिति । बुद्धीन्द्रियमनःप्राणानित्यत्रोक्तशक्तिसमूहं विभज्येत्यर्थः । पु. प्र. **तथायमपी**ति । यथा कल्पान्तरे सृष्टिभेदेन 'वडवेतराभवत्' इत्यादिश्रुतिषु पाठभेदो न दोषावहः, तथा कल्पान्तरसृष्टिभेदेनात्रापि कदाचित् प्रकृतिपुरुषद्वारा सृष्टिर्भवति । कदाचिदे 'तस्मादात्मन आकाशः सम्भूत' इति श्रुत्युक्तप्रकारोपि न दोषावह इति भावः । **सु. विशेष** इति । वैदिकभगवदीयसाङ्ख्ये ब्रह्म प्रथमं प्रकृतिपुरुषरूपेण भवति । ब्रह्मवादे तु तदेव सर्वशक्तियुक्तं आकाशादिक्रमेण भवतीति ब्रह्मवादे विशेष इत्यर्थः । पु. प्र. **युक्तिभिरनुचिन्तन**मेवाह **तथा**चेत्यादिना । तत्र **प्रतिज्ञादृष्टान्तानुपरोधस्ये**ति । **एतौ हि विश्वस्य च बीजयोनी**ति प्रतिज्ञापुरुषप्रधानेति दृष्टान्तं तदनुपरोधस्येत्यर्थः । **पश्चादि**ति । 'आसीज्ज्ञानमथो ह्यर्थ' इत्यत्रोक्तस्वरूपैक्यात् पश्चादित्यर्थः । **प्रकारद्वयस्य क्रमस्य** चेति । प्रकृतिपुरुषरूपेण सृष्टिक्रमेण साक्षात् स्वरूपतः सृष्टिक्रमेण चेत्यर्थः । **उभयत्र प्राप्ता**विति । श्रौतस्मार्तप्राप्तौ इत्यर्थः । तत्र स्मार्तानङ्गीकारे 'स्मृत्यनवकाशदोषप्रसङ्गः' स्यादित्यर्थः । **अङ्गीकारे** चेति । स्मृत्यङ्गीकारे चेत्यर्थः । **अनुभवानुग्रह** इति । अनुभवसिद्धत्वादिति सुबोधिन्युक्तस्यार्थो ज्ञेयः । **सु. इति मन्तव्य**मित्युक्तम् । तत्र मानने मानमाह **अनुभवसिद्धत्वा**दिति । स्मृतिरूपेणापि मन्वादीनां वेदानुभवसिद्धत्वादित्यर्थः । अतो पुराणोक्तसृष्टिप्रकारे न दौर्बल्याद्विरोधो नापि वज्रालिप्तो दोषः शङ्कनीय इतिभावः । एवं विप्रतिपत्तिपरिहारपूर्वकं बीजयोनित्वमुक्त्वा अग्रे रामो मुकुन्द इति पदस्य रमयतीति रामः, मोक्षं ददातीति मुकुन्द इति नामनिरुक्तेरर्थः **सु. त**थेत्यारभ्य **निरूपयतीत्य**न्तेनोक्तो ज्ञेयः । नन्वत्र पूर्णपुरुषोत्तमस्य रामस्य मुकुन्दस्य च बीजयोनित्वोक्त्या प्रकृतिपुरुषत्वमुक्तं भवति, तदुक्तौ कोभिप्राय इत्याकाङ्क्षायां अत्रेदं प्रतिभाति । श्रीमद्भागवतस्य सारस्वतीयकथायां निर्विवादः । तत्सृष्टौ बहुधा उत्तमाधिकारिणो जीवाः, तेषां मोक्षाभ्युदयदानार्थं अवतीर्णौ,

अतो न शंकालेशोपीति भावः। **पु. प्र. अत्रोत्कर्षमात्रस्येति** । अस्मिन् श्लोके स्वरूपोत्कर्षमात्रस्य बोधनीयत्वादित्यर्थः। **सु. तथात्रापीति**। यथा ब्रह्मवादे एकैकस्य बहुधोपयोगाय सृष्टिरुक्ता, तथात्रापि वैदिकसांख्यसिद्धान्ते श्रीभागवते मोक्षसृष्ट्यादिचतुर्विधपुरुषार्थान् साधयितुमवतीर्णावितिसम्बन्धः। **पु. प्र. तानिति**। चतुर्विधपुरुषार्थानित्यर्थः। **सृष्टीति**। सृष्टिरत्र त्रिवर्गः। इदमेवोक्तं **व. ले. सृष्टिरभ्युदयः**। अभ्युदयस्याप्यर्थस्त्रिवर्ग इत्यर्थः। **काम** इति। मोक्षादिसाधयितुकामो रामो मुकुन्दोवतीर्ण इति योज्यम्। नन्वत्र त्रिवर्गकथने सृष्टिपददाने कोभिप्राय इत्याशङ्कायाम्, अत्र सृष्टिभवनानन्तरं त्रिवर्गपुरुषार्था भवन्ति तस्मादत्र सृष्टिपददानमुक्तम्, अत एव मोक्षसृष्ट्याद्युक्तम्। नन्वेवं सति सर्वेषां सर्वे पुरुषार्था भविष्यन्तीत्याशङ्कायां **सु० सर्वस्यापीत्यादि**। **स्वशक्तिमिति**। स्वसामर्थ्यमित्यर्थः। **व. ले. विपरीतक्रम** इति। मूले रामो मुकुन्दो बीजयोनीत्युक्तम्। अत्र स्वयं बीजं योनिश्च इति विपरीतक्रम उक्त इत्यर्थः। **पु. प्र. तस्येति**। हितार्थमवतीर्णस्य रामस्य शास्त्राभिप्रेतत्वे गमकमाहेत्यर्थः। **निरूपणाभावेपीति**। कृष्णे सहभावनिरूपणाभावेपि। **उन्नेय** इति। साक्षान्महती शक्तिः कृष्ण एवेत्याचार्याणामुक्त्या कृष्णसहभावाभावः। **अक्रूरप्रसङ्ग** इति। 'आयास्ये भवतो गेहमहमार्यसमन्वित' इत्यत्र रामस्य सहभावो द्रष्टव्य इत्यर्थः। **रिङ्गणलीलादाविति**। 'तावङ्घ्रियुग्ममनुकृष्य सरीसृपन्ता'वित्यत्र कृष्णरामयोस्तुल्यतया निरूपणं द्रष्टव्यम्। **एष्याम** इति। 'ज्ञातीन् वो द्रष्टुमेष्याम' इति बहुवचनस्येत्यर्थः। **एकत्वविवक्षायामिति**। तथा रामो मुकुन्देति द्विवचनविवक्षायामपि इत्यर्थः। **अनुशासनेनेति**। नन्दं प्रति भगवतोक्तबहुवचनानुशासनसिद्धत्वेनेत्यर्थस्तथा। **एकस्येति**। रामस्य वा मुकुन्दस्य वा आगमनेपीत्यर्थः। **वाक्यसत्यत्वसिद्धेरिति**। भगवत एकरूपेणैव वाक्यसत्यत्वसिद्धेर्भक्त्या प्रादुर्भूते द्विरूपता किमर्थेत्यर्थः। **सु. दृष्टान्तमिव वदन्निति**। यथा पुरुषप्रधाने सृष्ट्यर्थं द्विरूपता, तथा राममुकुन्दयोरपि मोक्षाभ्युदयफलदानाद्द्विरूपतां निर्दिशतीत्यर्थः। तदेवोक्तम्। **पु. प्र. तथा** चेत्यादिना। **द्विरूपता** इति। पुरुषप्रधानरूपता इत्यर्थः। **द्विविधफलदानार्थं सेति**। मोक्षाभ्युदयफलदानार्थं द्विरूपता इत्यर्थः। अतो द्विरूपता युक्तैवोक्तेति भावः। **तदेव विशदयन्तीति**। द्विविधं फलं विशदयन्तीत्यर्थः। **सु. अनयोरिति**। रामकृष्णयोः मोक्षाभ्युदयफलदातृत्वेन पुरुषप्रधानाद्विशेषमाहेत्यर्थः। **एतत्प्रयोजनकाविति**। बीजयोनित्वेन प्रपञ्चप्रयोजनकावेतावधुनाविर्भूताविति शङ्का स्यादित्यर्थः।

**यस्मिन् जन** इत्यत्र। **सु. परः सहस्रं भगवद्धर्माः सन्तीति**। यद्यपि

१०-४३-३२ श्रुत्यादिषु पूर्वसिद्धा भगवद्धर्मा सहस्रशः सन्तीत्यर्थः । ते चोक्ताश्चतुर्थे शिक्षापत्रे । 'प्रभोर्धर्माः श्रुतौ प्रोक्तास्तथा भागवतेपि च । अप्राकृताः स्वरूपैकनिष्ठा भिन्ना न रूपत' इत्यादिना द्रष्टव्याः । ननु 'क्षणं समावेश्य मन' इत्यस्यार्थकथने 'मानसे रूप' इत्युक्तौ कोभिप्राय इत्याकाङ्क्षायामाह **साधनान्तरे**त्यादिना । **तदपि रूपमिति** । भगवतः कृपयाविर्भूतं मानसरूपमित्यर्थः । इतीति । इति हेतो**र्विशुद्ध**मित्युक्तमित्यर्थः । **विशुद्ध**मित्यस्याभासे । **व. ले. कामना सम्भवतीति** । मनसोशुद्धत्वे कामना सम्भवतीति शेष इत्यर्थः । **सु.** ननु कामनायां को दोष इत्याशङ्कायामाह **कामनाया**मित्यादिना । **ज्ञानेपि सिद्धे** इति । मनसो निष्कामत्वे सति ज्ञानमार्गेपि परां गतिं यातीति फले सिद्धे इत्यर्थः । **येनान्यथासिद्धं स्या**दिति । येन ज्ञानमार्गीयसाधनेन भगवद्धर्ममाहात्म्याभावः स्यादित्यर्थः । **निर्हृत्ये**ति लिङ्गशरीरं दग्ध्वा परां गतिं यातीति योज्यम् । लिङ्गशरीरस्य मरणमाह **स्वाभिमाने**त्यारभ्य **तदि**त्यन्तेन मरणमुक्तमित्यर्थः । तस्य ज्वालनमाह **ज्वालनमिवे**ति । यथा मृतस्य ज्वालनं करोति, तथा मूले निर्हृत्येति पदेन लिङ्गशरीरस्य ज्वालनमुक्तमित्यर्थः । **दग्ध्वे**ति । दग्ध्वा परां गतिं यातीति योज्यमित्यर्थः । साधनान्तरमित्यर्थः । **स्वरूपेणैव यातीति** । ब्रह्ममयस्वरूपेणैव यातीत्यर्थः । तदेवोक्तं **तत्रापी**त्यादिना । **ब्रह्ममय** इत्यस्याभासार्थकथने । **न सायुज्यार्थं जीवभावेन गमनमित्यस्यायमर्थः**, यथा 'वैश्वानरं याति विहायसा गत' इति द्वितीयस्कन्धे क्रममुक्तौ सायुज्यार्थं जीवभावेन गमनमुक्तम्, तथाऽत्र गतौ जीवभावेन गमनं नेत्यर्थः । नन्वेवं ब्रह्ममयत्वे भेदाभावाद्भगवत्स्वरूपस्यापि स्फूर्तिर्न भविष्यतीत्याशङ्कायामाह **तत्रापी**त्यादिना । **अर्कवर्ण** इति । यथा अर्कस्य ध्याने 'ध्येयः सदा सवितृमण्डलमध्यवर्ती नारायणः सरसिजासनसन्निविष्टः । केयूरवान् मकरकुण्डलवान् किरीटी, हारी हिरण्मयवपुर्धृतशङ्खचक्र' इति साकारत्वमुक्तम् । 'त्वं पर्यटनर्क इव त्रिलोकीमंतश्चरो वायुरिवात्मसाक्षी' इत्यादिना सर्वस्यापि **स्फूर्तिरुक्ता**, तथा अस्यापि भगवद्धर्माणां स्फूर्तिर्भविष्यतीत्यर्थः । एवं श्लोकार्थमुक्त्वा 'ननु यदा' इत्यादिना पूर्वमाशङ्क्य भगवद्धर्माणामन्यथासिद्धिः यदुक्ता तत्परिहारमाह **तस्मा**दित्यादिना ।

**तस्मिन् भवन्ता**वित्यस्यार्थकथने तस्मिन् रूपे **भावं विधत्तां युवयोः किं कृत्यमवशिष्ट**मिति सम्बन्धः । अत्र यशोदानन्दयोः फलोत्कर्षः 'अखिलात्महेता' वित्यादिविशेषणैर्यदुक्तः स कैमुतिकन्यायेन **सु. यादृशं हि उपास्य**मित्यादिनोक्तः । **यादृश**मिति । यादृशं रूपं उपास्यं चिन्त्यं ध्येयमिति । **मूले तस्मि**न्निति पदस्यार्थ आर्थिकः प्रतिभाति । **तदर्थः पु. प्र. उपासीते**तीत्यादिनोक्तः । **तत्र विधि**-

१०-४३-३३

प्राप्तमित्युक्त्या उपास्यरूपस्य **मर्यादामार्गीया** भक्तिरुक्तेति लक्ष्यते। सा भक्तिरेकादशे सप्तविंशाध्याये 'प्रतिष्ठया सार्वभौमं सद्मना भुवनत्रयम्, पूजादिना ब्रह्मलोकं त्रिभिर्मत्साम्यतामिया'दित्यत्रोक्ता। **लौकिक्याः चिन्तायाः विषय**मित्युक्त्या चिन्त्यरूपस्य कर्ममार्गीयत्वमुक्तम्। तत्र यथा लौकिक्या चिन्तयानिवृत्त्यर्थं अदित्यादिचिन्तनं कृतम्, तदुक्तं अष्टमस्कन्धस्य सप्तदशाध्याये 'चिन्तयन्त्येकया बुद्ध्या महापुरुषमीश्वर'मिति योगशास्त्र इत्युक्त्या योगमार्गीयध्यानविषयरूपमुक्तमिति लक्ष्यते। तदेवोक्तं कपिलवाक्ये 'संचिन्तयेद्भगवतश्चरणारविन्द'मित्यादिना। **सु० तादृश एव भवतीति।** तदर्थः **ह० दी०** 'यो यच्छ्रद्धः स एव स' इत्यादिनोक्तो द्रष्टव्यः। **पु. प्र.** नन्वेवमुपासकादीनां फलप्राप्तिरुक्ता, तत्र यशोदानन्दयोः फलप्राप्तौ को विशेष इत्याशङ्कायामाह **अवान्तरभेदेति।** यशोदानन्दयोः साक्षात्पुरुषोत्तमात्मकताफलप्राप्तिरन्येषां तु विभूतिरूपताफलप्राप्तिरित्यवान्तरभेद इत्यर्थः। तदेवोक्तं **ह. दी. उपासके**त्यादिना। **इति फलमिति।** भवांश्च सर्वफलरूप इति सुबोधिन्युक्तस्यार्थो ज्ञेयः। **सु. अतइति।** अतः सर्वस्य **नावशिष्यते** इति वक्तुं हेतुत्वमाहेति योज्यम्। तथा च उपासकादीनां भगवत्प्रत्युक्त्या नावशिष्यत इति वक्तुं सर्वस्य हितकर्तृत्वमाहेत्यर्थः। हितकर्तृत्वं तु **अखिलात्महेता**वित्यस्यार्थः। अखिलानामात्मा हेतुश्चेति तत्पुरुषकर्मधारयसमासेनोक्तः। तस्य सिद्धार्थमाह सर्वस्यात्मा इत्यादिना। एतत्सर्वस्याप्यर्थः **ह. दी० सर्वमस्यान्न**मित्यस्य व्याख्याने सिंहावलोकनेनोक्तो द्रष्टव्यः। **सु. फलं सिध्यतीति।** उपासकादीनामुक्तरीत्या भगवत्प्राप्तिरूपं फलं सिध्यतीत्यर्थः। **विकृतेपीति।** अत्रायमर्थः। यथा उपासकादीनां भगवानात्मा हेतुश्चेति अखिलात्महेताविति पदस्य समासेनोक्तः, तथात्रापि विराट्कारणरूपाणां ब्रह्मादीनां **हेतुरात्मे**ति पदव्यत्यासेनोक्त इति ज्ञेयः। **विकृते**पदस्यार्थः **पु. प्र. फलमिति।** विकृते इति पदेनोक्तविराटब्रह्मादीनामात्माहेतुश्चेति भगवान् फलमित्यर्थो ज्ञेयः। **तस्मिन् भवन्ता**वित्यत्र। **ह० दी०। पूर्वमिति।** 'युवां श्लाघ्यतमा'विति श्लोके नारायणपदस्य पुरुषोत्तमत्वं पूर्वमुक्तमित्यर्थः। **लोकस्ये**त्यस्याभासे। **नन्वि**त्यादेरयमर्थः। सर्वेषां भक्तानां फलसिद्धिर्भवतु नाम, तेनास्माकं का फलसिद्धिर्जाता। ननु युष्माकं कथं न फलसिद्धिरित्याशङ्कयाह **भिन्नत्वादिति।** अस्माकं तु भगवता त्यक्तत्वाद्भक्तिमार्गीयभक्ताद्भिन्नत्वादित्यर्थः। भक्तिमार्गीयभक्ताद्भिन्नत्वं तु विरहेण श्रीनन्देनाशङ्कितमिति ज्ञेयम्, तत्परिहारस्तु **सु. लोकस्ये**ति प्रमाणवाक्येन कृतः। तथा च। यूयं तु दासानां मध्ये मुख्यदासाः तदेवोक्तं **नितरां भावं विधत्ता**मिति। अतो न भिन्नत्वशङ्केति भावः। **व. ले. लोकस्ये**त्यस्याभासे। **सर्वविलक्षणाना**मिति। अत्रायमर्थः। सेवां कारयित्वा सर्वेषामुद्धारार्थमाविर्भूतो भगवानस्माकं त्वधुना त्यक्तत्वान्न सेवा भवतीति श्रीनन्देन विलक्षणत्वमाशङ्कि-

तम् । वस्तुतस्तु भगवता विप्रयोगफलसिद्ध्यर्थं दूरे स्थितिः कृता, तेन नन्दस्य सर्वाधिक्यं ज्ञेयम् । **रसत्वव्यावृत्त्यर्थमि**त्यस्यार्थकथने **पु. प्र.** रसत्वस्य विषये समे एव सिद्धे इति योज्यम् । तत्र रसत्वस्येति 'मन्ये कृष्णं च रामं च प्राप्ताविह सुरोत्तमा' विति नन्दवाक्येन 'ततो नो जायते शङ्का व्रजनाथ तवात्मजे' इति गोपवाक्येन च देवत्वभावलक्षणरसत्वस्य विषये भगवति गोपानां नन्दस्य च देवत्वबुद्धेः समे एव सिद्धेः इत्यर्थः । तत्र नन्दस्य विशेषमाह **प्रकृते** इत्यादिना । **देवत्वस्यासमत्वात् प्रतीतत्वेने**ति । नन्दस्य तु पुत्रभावसहितदेवत्वस्यासमत्वात् प्रतीतत्वेनेत्यर्थः । **तदभावे**ति । नन्दस्य तु भगवति केवलदेवत्वाभाव इत्यर्थः । **तद्व्यावृत्ति**रिति । नन्दस्य रसत्वव्यावृत्तिरित्यर्थः । **व. ले.** रसभावयोर्विभेदमाह **चर्वणाया**मित्यादिना । चर्वणायामिति । अन्नादिचर्वणायामित्यर्थः । तथा च संयोगकाले गोवर्धनोद्धरणादिना नन्दादीनां माहात्म्यज्ञानं स तु आस्वाद्यो रसः सर्वदा तथाविध इति । संयोगविप्रयोगकाले पुत्रत्वबुद्धिर्भाव इत्यर्थः । ननु पुत्रे भावपदस्य कथं संभव इत्याशङ्कायां प्रमाणमाह **रतिर्देवादी**त्यादिना । अत्र **आदिशब्देन** मुनिगुरुनृपपुत्रादयो गृहीताः । तत्र 'ऋषयो मनवो देवा मनुपुत्रा महौजसः कलाः सर्वे हरेरेव सप्रजापतयस्तथा' इतिप्रथमस्कंधतृतीयाध्यायवाक्ये एतेषां भगवत्कलात्वोक्त्या यथा तत्र मनुष्यत्वप्रतीतिर्न कर्तव्येत्युक्तम्, 'एवं साक्षाद्भगवति ज्ञानदीपप्रदे गुरौ मर्त्यासद्धीः श्रुतं तस्य सर्वं कुञ्जरशौचव'दिति वाक्याद्गुरुष्वपि मनुष्यबुद्धिर्न कर्तव्या, तथा पुन्नाम्नो नरकात् त्रायते इति निरुक्त्या नरकात् त्राणात् सत्पुत्रेपि सद्बुद्धिः कर्तव्येति भावः । तदा पुरुषोत्तमरूपे पुत्रे भावकर्त्रोर्युवयोः कृत्यं किं वावशिष्टमिति ज्ञेयम् । **इत्युक्ते**रिति । मुन्यादिविषये रतिभाव इत्युक्तेरित्यर्थः । **नासम्भव** इति । अतः पुत्रे भावपदस्य नासम्भव इति भावः । **ह. दी.** । **दर्शनादिने**ति रूयादीनां दर्शने रसो भवतीति दृष्टान्त उक्तः । तस्य दार्ष्टान्तस्तु गोपादीनां गोवर्धनोद्धरणादिचरित्रं दृष्ट्वा देवोत्तम इति व्यभिचारिभावलक्षणो रसो भवतीति भावः । **परोक्षेपी**ति । अधुना परोक्षेपीत्यर्थः । **पूर्वस्थिते**ति । संयोगावस्थायां स्थितभावादधुना तापात्मकाऽधिक**भावदर्शनात्स्थायिभाव** एवेति भावः । **तथा च तत्रे**ति । भगवतीत्यर्थः । **अनुमानाभ्या**मिति । अनुमानं तु गोवर्धनोद्धरणादिचरित्रदर्शनेनायं देवोत्तम इति नन्दस्य या बुद्धिः सा दूरे इत्यर्थः । **अन्यवाक्यै**रिति । गर्गादिवाक्यैरित्यर्थः । **नान्ये**ति । न देवादिज्ञानं रसरूपाकृतिरित्यर्थः ।

१०-४३-३४ **आगमिष्यती**त्यत्र । **पु. प्र.** **लौकिकभाषात्वा**दिति । केषाञ्चिन्मते लौकिकभाषात्वादित्यर्थः । **सु. शास्त्रार्थत** इति । 'अन्तर्हृदि स भूताना'मित्यादि अग्रे वक्ष्यमाणशास्त्रार्थत इत्यर्थः । सिद्धान्तपक्षस्तु **भगवद्वाक्येत्यारभ्यागम्यत** इत्यन्तेन श्रीमदाचार्यचरणैरुक्तो ज्ञेयः । तत्र **भगवद्वाक्यानुरोधेने**ति ।

भगवद्वाक्यं तु 'ज्ञातीन् वो द्रष्टुमेष्याम', इति तदनुरोधेन भगवद्वाक्यानुरोधेन द्वारावतीस्थ-भगवदीयानां 'कुरून् मधून् वाथ सुहृद्दिदृक्षये'ति प्रथमस्कन्धवाक्याच्च। **पित्रोरितीति**। 'पित्रोर्नः प्रीतिमावहे'त्यत्रैवोद्धवं प्रति **विशेषवचनाच्चे**त्यर्थः। तथा च। अहमपि नन्दस्य प्रीत्यर्थमागमिष्यामीति गूढाभिप्रायेणोक्तविशेषवचनं ज्ञेयम्। अत एव प्रीतिमावहेत्यस्यार्थः पूर्वं सु. 'यथैव प्रीतिर्भवत्यस्मदागमनेनेव तथा प्रीतिमावहे'त्युक्तम्। अत एवात्रैवोक्तं **नन्दं द्रष्टुं समागत एव भगवानि**ति। नन्वेवं नन्दं द्रष्टुं समागत एव तदा 'गतांश्चिरायिता-ञ्छत्रुपक्षक्षपणचेतस' इति कुरुक्षेत्रप्रसङ्गे गोपिकाः प्रति भगवता यदुक्तं तद्वाक्यविरोधाभावः कथमित्याशङ्का तत्परिहारस्तु **व. ले. वाक्ये**त्यादिना कृतः। **तत्र स्वामिनीः प्रतीति**। स्वामिनीः प्रत्युक्तम्, न तु नन्दं प्रति, अतो 'गतांश्चिरायिता'निति गोपिकाः प्रति यदुक्तं तद्वाक्यविरोधाभाव इत्यर्थः। नन्वेवं वाक्यविरोधाभावो भवतु नाम, परन्तु स्वामिनीनां दर्शनं कुतो न दत्तमित्याशङ्कायामाह **अत्र हरिधना** इत्यादिना। हरिधना इति गोस्वामिश्री**हरिराया** इत्यर्थः। शङ्काविरोधपरिहारस्तु **वियोगो द्विविध** इत्यारभ्य **व्याख्यातवन्त** इत्यन्तः कृतो ज्ञेयः। **धर्मिरूप** इति। स्वामिनीनां सदा हृदिस्थो रसरूपभावात्मा पुरुषोत्तमात्मको धर्मिरूपः, 'ततस्ताः कृष्णसन्देशै'रित्यत्र सुबोधिन्युक्त-विस्मृतकण्ठचामीकरन्यायरूपो वियोग इत्यर्थः। **धर्मरूप** इति। अत्र वासुदेवव्यूहविशिष्ट-संयोगात्मकपुरुषोत्तमस्य धर्मरूपवियोगो नन्दस्येत्यर्थः। **स्वरूपरक्षार्थ**मिति। नन्दस्य स्वरूपरक्षार्थमित्यर्थः। **संयोगात्मकस्ये**ति। संयोगात्मको यः पूर्वं वासुदेवव्यूहविशिष्टो धर्मिरूपो नन्दगृहे आविर्भूतः, तस्यै**वागमनमावश्यक**मित्यर्थः। नन्वेवं यदि नन्दस्याग्रे धर्मिरूपस्यागमनं तदा यथा गोपिकानां हृद्याविर्भावेन दर्शनं जातम्, तथा नन्दस्यापि हृद्याविर्भावेन धर्मिरूपस्य दर्शनं किमर्थं नेत्याशङ्कायामाह **अन्यथे**त्यादिना। तथा च नन्दस्य धर्मरूपो वियोगो दत्तः, अतो हृद्याविर्भावेनाधिकतापो भवेत्, न तु सुखमिति भावः। तर्हि केवलं धर्मत एवागत इति वक्तव्यमित्याह **स्वरूपत एव समागत** इति धर्मिरूपत एव समागत इत्यर्थः। **अतो न दर्शन**मिति। नन्दस्य हृदि धर्मिरूपस्य न दर्शनमित्यर्थः। **अतः स्वामिनीप्रतीत्याऽनागमन**मिति। स्वामिनीप्रतीत्या व्रजे भगवतो-ऽनागमनमित्यर्थः। तदेवोक्तं **सु० न गोपिकाप्रतीतिः। ह. दी. उभयरूपत्वे-ने**ति। धर्मधर्म्यात्मकत्वेनेत्यर्थः। **तद्रूपस्ये**ति आनन्दरूपस्येत्यर्थः। **पूर्वरूपेणे**ति वासुदेव-व्यूहविशिष्टधर्मिरूपनन्दगृहप्रकटितपूर्वरूपेणेत्यर्थः। **समागमनार्थिके**ति। यादृशो नन्दस्य वियोगस्तादृशं दर्शनं दत्तवानित्यर्थः। **समीचीनैवे**ति। नन्दं द्रष्टुं समागत एव भगवान् परं स्वाधिकारानुसारेण दर्शनं दत्तवानित्यर्थापत्त्याचार्याणामर्थोक्तिः समीचीनै-

वेति भावः । **सु० आर्थिकेति** । भगवद्वाक्यानुरोधेनेत्यादिनोक्त आर्थिक इत्यर्थः । **येन प्रकारेणेति** । गुप्ततया गमनप्रकारेणेत्यर्थः । **पु. प्र. यथा न जानन्ती** । प्रत्यक्षतया मथुरातः आगत इति न जानन्तीत्यर्थः । **तथेति** । तथा गुप्ततया गमने हेतुमाहेत्यर्थः । **एतद्भावकथनेनेति** । गुप्ततया गमनभावकथनेनेत्यर्थः । **तेष्विति** । नन्दयादवादिषु इत्यर्थः । **सु. एवमागमने चेति** । गुप्ततयागमने चेत्यर्थः । **तथेति** । गुप्ततया समागमिष्यतीति भावः । **एवमुच्यते इति** । 'आगमिष्यत्यदीर्घेण कालेने'त्युच्यते इत्यर्थः ।

**हत्वेत्यत्र । सु. व्याजेनैवेति** । नन्वेवं भगवान् सत्यं करोतीति सत्यं तथापि कंसं व्याजेन कथं मारितवान्, कथं वा गोपिकासु 'आयास्ये' इत्युक्त्वा
१०-४३-३५ नागतवानित्याशङ्कापरिहाराय श्रीमदाचार्यचरणैः **कंसो व्याजेनेत्यारभ्य नान्यथेत्यन्तेनार्थिकोऽर्थ उक्तः** । तत्र **व्याजेनेति** मञ्चात्पातनक्रीडया मारणीयो न तु मम पित्रोः पाशान्मोचनं कुरु, नो चेत्त्वां मारयिष्यामीति पूर्वं ज्ञापयित्वा क्षात्रधर्मे स्थित्वा मारणीयः । ननु सामर्थ्ये विद्यमानेपि व्याजेन मारणे कोऽभिप्राय इत्याशङ्कापरिहारायोक्तं मूलश्लोके 'प्रतीपं सर्वसात्वता'मिति । तथा ज्ञापने कृते वसुदेवादीन् पूर्वमेव हन्यात्, अतो युक्तमुक्तं व्याजेनैव मारणीय इति । ननु 'आयास्य इति दौत्यकै'रिति गोपिकाः प्रति परोक्षवादकथने कोभिप्राय इत्याशङ्क्याह **तावत्पर्यन्तं वदतीत्यादि** । कंसमारणपर्यन्तं वदतीत्यर्थः । तथा च गोपिकाः प्रति परोक्षकथाकथनाभावे गोपिकास्तु 'निवारयामः समुपेत्य माधवम्, किन्नोऽकरिष्यन् कुलवृद्धबान्धवा' इति बन्धं कुर्युस्तदा कंसस्य शीघ्रं वधो न भविष्यतीति परोक्षवादेन कथनमुक्तमित्यर्थः । **समागमनकथेति**। 'आयास्य इति दौत्यकै'रिति समागमनकथेत्यर्थः। **शास्त्रार्थत्वेनेति**। 'भवतीनां वियोगो मे न ही'त्यादिशास्त्रार्थत्वेनेत्यर्थः। **पु. प्र. न स्यादिति**। अक्लिष्टकर्मा न स्यादित्यर्थः। **व. ले. प्रातिकूल्यकरणे इति**। भगवतः प्रातिकूल्यकरणे इत्यर्थः । **सु.** एवं पूर्वमन्यथाकृतं तथा नाधुना कर्तव्यमित्यत्र ज्ञापकमाह **तत्रेत्यादिना** । तत्राप्यनुरोधाद् युष्मात् प्रत्यागत्य यदाह भगवान् तत्सत्यमेव करोतीति पूर्वेणैवान्वयः कर्तव्यः । **फलरूप इति** । स्वयं फलरूपः सर्वेषां च फलरूप इत्यर्थः । **सर्वनिरपेक्ष इति** । गोपिकासु नन्दादिषु च निरपेक्ष इत्यर्थः । **अनेनेति** । सर्वनिरपेक्षत्वेनेत्यर्थः । ननु गोपिकासु पूर्वं हेतुवादकथने अन्नाकथने च कोभिप्राय इत्याशङ्कायामाह **हेतुवाद इत्यादिना** । **हेतुवाद इति** किञ्चित् कार्यं हेतुकृत्य तथाकथनं हेतुवादकथनमित्यर्थः । तथा च पूर्वं कापट्येन कंसवधलक्षणं कार्यं स्थितम्, अधुना हेतुवादे प्रयोजनाभाव इत्यर्थः । **उक्त इति** । सत्यं करोतीति उक्त इत्यर्थः ।

**मा खिद्यतमित्यस्याभासे । न दृश्यत इति** । नन्दस्य दर्शनं दत्वा तिरोहितो जात

१०-४३-३६ इति लक्ष्यते, अतो न दृश्यत इत्युक्तमित्यर्थः । **प्रतीत्या** इति । प्रत्यक्षदर्शनं जातमिति प्रतीत्या इत्यर्थः । **अनुमानेन** चेति । अन्ये हि भगवतः स्थाने दर्शनार्थं गच्छन्ति ब्रह्मादयः, स भगवान् भवद्गृहे लीलार्थमागत इति पूर्वयोर्दर्शने कः सन्देह इत्यनुमानेनेत्यर्थः । ननु 'ज्ञातीन् वो द्रष्टुमेष्याम' इति पूर्वमुक्तम्, 'एतौ ही'त्यत्र सुबोधिन्यां भक्त्या प्रादुर्भूतावित्युक्तम्, अत्र 'द्रक्ष्यथः कृष्णमन्तिके' इति एकवचनं कथमुक्तमित्याशङ्का, तत्परिहारस्तु ह. दी. **लौकिके**त्यादिनोक्तो ज्ञेयः । तथा चात्रापि रामेण सहागत इति लक्ष्यते । **एष्याम** इति बहुवचनमपि उद्धवेन सहागमनेनोपपन्नं जातमिति ज्ञेयम् । **सु. भूतानामिति** । भूतानामन्तर्हृदये वर्तते इति पूर्वोक्तं योज्यम् । **अन्यथेति** । आनन्दरूपस्य भगवतः स्थित्यभावे कथं ते प्राणिनो जाता भवेयुरित्यर्थः । **आधारेति** । आधारो हृदयाकाशानन्दरूपो भगवानित्यर्थः । **अन्नादीति** । अन्नादयः पृथिव्यादयः इत्यर्थः । एतत्सर्वस्यार्थः पु. प्र. **नन्वित्यारभ्य** को **ह्येवान्यादित्यादि**श्रुत्यर्थेन प्रकाशितो भवतीत्यर्थः । तत्र **तदिति** । भगवानित्यर्थः । **प्राणित्वाभाव** इति जीवनाभावः कथमित्यर्थः । **अन्यादिति** । अन् प्राणने इति धातुपाठे । जीवयेदित्यर्थः । इदं जीवनं तु 'तरवः किं न जीवन्ती'तिवत् व्यर्थं जीवनमुक्तम् । अग्रे '**कः प्राण्यादि**'ति उपसर्गदानात् साधनेन जीवनं सफलं जीवनमुक्तमिति लक्ष्यते । कः प्राण्यादिति को जीवयेदित्यर्थः । **आकाशानन्द** इति । हृदयाकाशानन्दरूपो भगवानित्यर्थः । **प्राणन**मिति जीवनमित्यर्थः । **तच्चेति** । तच्च प्राणनमन्नमयं हीत्यादिश्रुत्या पृथिव्यादीनां सम्भावितं, तत्परिहारस्तु **आनन्द** इत्यारभ्य **तथे**त्यन्तेन कृतः । **तत्र** तन्मध्ये । **अन्नमयमिति** पृथिवीमयमित्यर्थः । **सु.** आदिपदस्यार्थमाहुः अन्नादिना । **अन्नादिक्रियाधीनमिति** पृथिव्यादिक्रियाधीनमित्यर्थः, पृथिव्यादयोत्र शरीरगता ज्ञेयाः । पु. प्र. **तासामिति** । अन्नादीनामित्यर्थः । **तथेति** । हृद्याकाश आनन्दस्थित्यैव प्राणनं युक्तमित्यर्थः । **मुख्यप्राणेति** । मुख्यप्राणः सूत्रात्मा इत्यर्थः । **तथोक्तत्वादिति** । मुख्यप्राणस्यापि मनआदीनां पोषकत्वस्योक्तत्वादित्यर्थः । **तदानन्देति** । भगवदानन्दस्थित्यैवेत्यर्थः । **तदिति** । पोषकत्वं कथं निश्चेतुं शक्यत इत्यर्थः । **उक्तश्रुतेरिति** । को ह्येवान्यादिति उक्तश्रुतेरित्यर्थः । **सु. सूत्रापेक्षयापीति** । मुख्यप्राणापेक्षयापीत्यर्थः । **वर्तत**इति । आनन्द आधारत्वेन सर्वत्रैव वर्तते इत्यर्थः । एवं **सु.** सूत्रापेक्षया आनन्दस्य आधारत्वोक्त्या आशङ्कोक्तमुख्यप्राणस्याधारता परिहृता, सैवाधारता पु. प्र. **तथा च श्रुत्यन्तर** इत्यादिना युक्तिपूर्वकं परिहृता । तत्र मुख्यप्राणस्य कथं मुख्यताभाव इत्याशङ्कायामाह अद्भिरित्यादिना । तदेव दर्शयति अणोरित्यादिना । अणोरपुष्टस्येति । अणोः सूक्ष्मप्राणस्याद्भिरपुष्टस्य कार्यासाधकत्वं चेत्यर्थः । सिद्धार्थमाह । **तेनेत्यादिना** । **तेनेति** । अद्भिः पोषणकथनेनेत्यर्थः । **स-**

**व्यापारस्येति** । अब्व्यापारसहितस्य मुख्यप्राणस्यैव जीवने निमित्तता कृतेत्यर्थः । तर्हि पोषकत्वादपां मुख्यव्यापारत्वमायास्यतीत्याशङ्कायामाह । **व्यापारस्त्वित्यादिना** । **तदपेक्षयापीति** । जलापेक्षयापीत्यर्थः । **सु. प्रतीत्यर्थमिति** । योगिनां हृदि प्रतीत्यर्थमित्यर्थः । तदेवोक्तं 'केचित् स्वदेहान्तर्हृदयावकाशे प्रादेशमात्रं पुरुषं वसन्त'मिति । **विशेष इति** । मूले अन्तर्हृदीति विशेष उक्त इत्यर्थः । **आसन्य इति** । आसन्यो मुख्यप्राण इत्यर्थः । नन्वेवं भूरुहाणां वह्न्यात्मकतोक्ता, तथा घटादयोपि भूरुहास्तत्र को विशेष इत्याशङ्कायामाह । **भूरुहत्वेत्यादिना** । अन्यदपि विशेषमाह **उत्पत्तावपीत्यादिना** । **स्वसमानानिति** । पृथ्वीसमानानंशान्न भूरुहा गृह्णन्तीत्यर्थः । ननु भूरुहे वह्निजलयोरेकत्र स्थितौ जलेन वह्नेः कथं न नाशस्तत्र किं व्यवधानमित्याशङ्कायां **उभयोरित्यादिना** । **सूक्ष्मा इति** । वृक्षे पृथिव्यवयवाः सूक्ष्मा इत्यर्थः । तत्र किं मानमित्याशङ्कायामाह । **उभयोरिति** । वह्निजलयोरित्यर्थः । **यावद्भस्मेति** । यावन्मात्रं भस्म तावन्मात्राः पृथ्व्यंशा भूरुहे इत्यर्थः । **भूयानंशस्तेजस एवेति** । भूरुहे भूयानंशस्तेजस एवेत्यर्थः । एवं दृष्टान्ते पृथिव्यादीनां तारतम्येन स्थितिरुक्ता, तथा दार्ष्टान्तेपि भूतानां देहे जलादीनां स्थितिमाह **जलस्थानीय इत्यादिना** । **जीवेति** । जीवः सच्चिदात्मकः, अतः पृथिव्यंशस्थानीयो जीव इत्युक्त इत्यर्थः । तत्र तेजआत्मकः तेजोरूपः भूयानंशो भगवान् किं करोतीत्याशङ्कायामाह । **सर्वत्रेत्यादिना** । **चेतनेष्विति** । जीवासन्यादिष्वित्यर्थः । मा खिद्यत इत्यत्र । **हृ. टी. उत्पत्तिस्थितिप्रलयरूपाणां क्रियाणामिति** । अन्नप्राणयोरुत्पत्तिक्रियावत्त्वम् । एवं विज्ञानस्यापि प्रलयक्रियावत्त्वं, चतुर्विधप्रलयकथने 'नित्यो नैमित्तिकश्चापि तथा प्राकृतिको लयः । आत्यन्तिकश्चे'ति द्वादशस्कन्धे चोक्तो ज्ञेयः ।

**न मातेत्यत्र** । **पु. प्र. तथा चेति** । परः परस्य संबन्धी च भगवतो नेत्यर्थः ।
१०-४३-३८ **सु. पूर्ववदिति** । यथा मायादयो भगवतो नेत्येवकारेण निर्धारितं तथा देहादयोपि नेत्येवकारेण पूर्ववत् निर्धारितमित्यर्थः ।

**न चास्येत्यत्र** । पु. प्र.**धर्मेति** । धर्मात्मकक्रीडेत्यर्थः । **भवनमिति** । देवतिर्यगादिरूपेण भवनमित्यर्थः।
१०-४३-३९ **सु. नोद्देश्यमिति** । क्रीडातिरिक्तं न किञ्चिदुद्देश्यमित्यर्थः । **स्वयमेवेति** । भगवतो क्रीडाभावः साधूनां परित्राणाय **स्वयमेव समर्थो भवतीत्यर्थः** । तत्र दृष्टान्तावाह **यथेत्यादिना** ।

**सत्त्वमित्यस्याभासे पु. प्र. समाधानमिति** क्रीडार्थप्रादुर्भाव इति समाधानमित्यर्थः ।
**तादृशस्येति** । अक्रियस्य अजस्य । गुणैः सर्गादिलीलेत्यर्थः ।
१०-४३-४० **इयमपीति** । जन्मादिलीलेत्यर्थः । **सु. तेषामिति** । गुणानां लीलार्थतोपि विशेषप्रयोजनमाहेत्यर्थः । **वल्लभानां लेखे** । **मतान्तरे** त्वित्यारभ्य **नित्या**

**एवे**त्यन्तस्य एवमन्वयः कर्तव्यः **अविद्यमानधर्मस्वीकारासंभवाद्**भगवति प्राकृतगुणनिषेधे कृते सति मुख्यमते भगवति क्रीडार्थं पुत्रत्वादिधर्मः स्वीकृत इति तन्निषेधो न युक्त इति **किन्तु** इत्यारभ्य **नित्या एवे**त्यन्तोक्ता धर्मा मुख्यमते मन्तव्या इति योज्यम्, तर्हि 'न माते'त्यादि किमर्थमुक्तमित्याशङ्क्याह **तेष्वि**त्यादिना । मूले **अज** इत्यस्यार्थकथने **यथे**ति पदस्य यथा स्वयमजः स्वरूपतो न जायते तथा तैः सृजत्यवति हन्तीति पूर्वेणान्वयः कर्तव्यः । **स्वरूपतो** न जायते इति । मतान्तरे शुद्धः स्वरूपः कार्यरूपेण न जायत इत्यर्थः । कार्यरूपेण जाते को दोष इत्याशङ्क्याह **अन्यथे**त्यादिना । **कार्यरूपेणे**ति । प्रपञ्च-कार्यरूपेणेत्यर्थः । **आवश्यक**मिति । जननमावश्यकमित्यर्थः । ततो नाजत्वं स्यादिति भावः ।

**यथा भ्रमरिके**त्यस्याभासे । आत्मसृष्ट्यभाव इति मतान्तरे शुद्धात्मसृष्ट्यभावे इत्यर्थः । **गुणैरेव सर्गे** इति गुणैरेव सर्गे सतीत्यर्थः । तथा च भगवतः
१०-४३-४१
सर्गादिषु या लीला सा गुणैरेव लीला न स्वरूपत इत्यर्थः । **विषय** इति । भ्रमणकर्तुः पुरुषस्यान्यथाबुद्धि'र्भ्राम्यतीव महीयत' इत्यर्थः । **कर्त्तरी**ति । अहङ्कारस्य भ्रम-स्तत्रात्मा **कर्तैवाहंधियास्मृत** इति जीवात्मनि भ्रमो यदुक्तः तद्दार्ष्टान्ते असामञ्जस्यं स्यादित्यर्थः । **प्रासङ्गिकत्वेने**ति । प्रसङ्गाज्जीवपरत्वेन व्याख्यानयोजनं तदसङ्गतमित्यर्थः । **पु. प्र.** । **मतान्तरीयव्याख्याने इति** । प्रासङ्गिकत्वेन जीवपरत्वमतान्तरीयव्याख्यानं तस्मिन् अस्वरसमित्यर्थः । **आत्मसृष्ट्यभावपक्षे इति** । **सु. यथा स्वयमज**इत्यारभ्य **सर्गे** इत्यन्तेन मतान्तरे आत्मसृष्ट्यभावपक्षेण गुणैः सृष्ट्युक्त्या यद् भगवति जननदोषः परि-हृतः, तन्मतान्तरीयपक्षं सिद्धान्ते **भगवा**नित्यादिना परिहरन्तीत्यर्थः । **गुणक्रिये**ति । प्राकृतगुणक्रियाविशिष्टनिषेध एवेत्यर्थः । **न तादृग्रूपते**ति । अप्राकृतनित्यस्वरूपगुणक्रिया-रूपताया निषेधो नेत्यर्थः । **यद्येव**मिति । यदि नित्यस्वरूपगुणक्रियारूपोस्तीत्यर्थः । **सु. क्रमेणे**ति । बाल्यपौगण्डादिलीलासहितः सर्वदैव वर्तते परं भगवदिच्छया देशकालपरि-च्छेदेन पुरुषाणां दृष्ट्या क्रमेण गृहीतो भवतीत्यर्थः । ननु केषांचिद् दृष्ट्या प्राकृतरूपो गृहीतो भवति, केषांचिदप्राकृतरूपो गृहीतो भवतीत्यत्र को हेतुरित्यत्राह **तत्रे**त्यादिना । **स्वधर्म**-मिति । स्वस्य प्राकृतधर्मं तत्र भगवति योजयतीत्यर्थः । **प्राकृते**ति । अस्मदादिदृष्टिः प्राकृतेति सर्वलीलासहितं रूपं न पश्यति, भगवदनुग्रहेण तु दिव्यचक्षुषा पश्यति तदेवोक्तं भगवद्गीतायां 'दिव्यं ददामि ते चक्षुः पश्य मे योगमैश्वर'मिति । **तत्र तत्रे**ति । गोकुलमथुरादिदेश इत्यर्थः । **तथा तथे**ति । बाल्यपौगण्डादिरूपेण कल्पयतीत्यर्थः । **पु. प्र. तत्तद्देशे**ति । गोकुलादिदेशकालविशिष्टरूपेण कल्पयतीत्यर्थः । **स्वधर्मक्रम** इति । स्वधर्मक्रमो देशकालादिपरिच्छिन्नजीवधर्मरूपप्राकृतक्रम इत्यर्थः । **देशादी**ति । अस्मिन् देशे भगवानस्ति, अस्मिन् देशे नास्तीति देशादिवैशिष्ट्यरूपा धर्मा भगवति न युक्ता

इत्यर्थः । द्वितीयदृष्टान्ते । **सु. चित्ते कर्तरीति** । चित्तस्य अहङ्कारप्रेरकत्वेन कर्तृत्वे सतीत्यर्थः । **आत्मेति** । जीवात्मा कर्तृवद् दृष्ट इत्यर्थः । कथं कर्तृत्वं तत्राह **तदध्यासा-दिति** । अहङ्काराध्यासादित्यर्थः । **स्वसंबन्धारोपादिति** । भगवति नन्दादिभावितपुत्र-त्वादिसंबन्धारोपादित्यर्थः । तथा च दृष्टान्ते यथा अहङ्कारस्य कर्तृत्वं जीवात्मनि प्रतीयते तथा दार्ष्टान्ते नन्दादिभावितपुत्रादिभावा भगवति प्रतीयन्त इत्यर्थः । अतो 'न माता न पिता तस्ये'त्यादि सुष्ठूक्तम् । पु. प्र. **प्रतीतमिति** । वास्तवं स्वरूपं प्रतीतमित्यर्थः । **पूर्वदृष्टान्तेनेति** । भगवानित्यादिना पूर्वदृष्टान्तेन प्रतीतिव्युत्पत्तिरुक्तेत्यर्थः । **द्वितीयेनेति** । द्वितीयदृष्टान्तेन व्युत्पत्तिः स्फुटैवोक्तेत्यर्थः । **सु. तत्पदार्थेष्विति** । नन्दादिष्वित्यर्थः । ननु पूर्णो व्यापकः परिच्छिन्नदृष्ट्या केन प्रकारेण परिच्छिन्नो दृश्यते इत्याकाङ्क्षायां दृष्टान्तमाह । **सूर्यवदित्यादिना** । **सम्बद्ध इति** । यथा सूर्यः सर्वसंबद्धः परं नानादेशस्थानां जनानां परिच्छिन्नदृष्ट्या समीपस्थवृक्षोपरि दृश्यते तथा नन्दादीनां पूर्णो व्यापको भगवान् परि-च्छिन्नदृष्ट्या पुत्रादिरूपेण दृश्यते । **स्वधर्मारोपेणेति** । स्वस्य प्राकृतधर्मारोपेणेत्यर्थः । **तथा मन्येत** इति पूर्णव्यापके भगवति प्राकृतपुत्रत्वं मन्येत इत्यर्थः । पु. प्र. । **कथं धर्मभ्रमो भवेदिति** नन्दादीनां स्वप्राकृतधर्मः भगवति कथं भवेदित्यर्थः । **तथेतीति** । वस्तुतो दृश्यतेपि नेत्यर्थः । **तर्हीति** । यदि दृश्यतेपि न, तर्हि यथा शुक्तिकाया दर्शनाभावे रजतदर्शनभ्रमाभावो भवति तथा ब्रह्मणि दृश्यत्वाभावे नन्दादीनां सुतरां धर्मभ्रमायोगो भविष्यतीत्यर्थः । **पूर्वप्रतीतिरिति** । तत्र तत्र परिदृश्यमानमित्यादिना या पूर्वोक्ता प्रतीतिः तस्यापि विरोधो भविष्यतीत्यर्थः । **सु. अत इति** । अदृश्ये भ्रमाभाव इति या शङ्का तत्परिहारार्थहेतोरित्यर्थः । तर्हि दृश्यमानं स्वरूपं कीदृशमित्यत आह **पूर्ण एव परमा-नन्द** इति । तर्हि तादृशं स्वरूपं सर्वत्र कथं न प्रतीयते कथं वा प्राकृतं मन्यते इत्याशङ्काया-माह । **परिच्छेदकदृष्ट्येति** । रूपं तु यादृशमुक्तं, तादृशमेव वर्तते, परं तदिच्छया क्वचि-दुपलभ्यते क्वचिन्नेति । नन्वेवंविधेच्छा किमर्थं कृतेत्याशङ्का 'अन्यथा विचित्रा लीला न भवेदिति' तेन परिहरणीया । यथा दामोदरलीलायां प्राकृतदृष्ट्या यशोदया बन्धनं कृतम्, परं पूर्णत्वान्न जातं तदुक्तं तत्रैव, 'न चान्तर्न बहिर्यस्य न पूर्वं नापि चापरम्, पूर्वापरं बहि-श्चान्तर्जगतो यो जगच्च यः, तं मत्वात्मजमव्यक्तं मर्त्यलिङ्गमधोक्षजं, गोपिकोलूखले दाम्ना बबन्ध प्राकृतं यथे'ति इच्छाप्यत्र सर्वे मां पश्यन्तु इति श्रुत्युक्ता सामान्या ज्ञेया । तेन सर्वेषां यथाधिकारं दर्शनं, अन्यथा सर्वेषां मुक्तिः स्यात्, अतो सुष्ठूक्तं परिच्छेदकदृष्ट्या तदिच्छया क्वचिदुपलभ्यते क्वचिन्नेति । तदेवोक्तं पु. प्र. **न भ्रमायोग** इति नन्दादीनां न भ्रमाभाव इत्यर्थः । तदेव **सुबोधिन्यां** विवृतं **यथेदानीमित्यादिना** ।

**युवयोरित्यत्र** । पु. प्र. । ब्रह्मवादेत्यस्यायमर्थः । उपनिषदि स आत्मानं स्वय-

१०-४३-४२ मकुरुतेत्युपक्रमेण यो ब्रह्मवाद उक्तः, तदनुसारेण श्रीमदाचार्यचरणैः **सुबोधिन्यां** सर्वात्मा स्वयं आधिदैविकप्रकारेण वेत्युक्तमिति ज्ञेयम् । **पु. प्र. साधारणेयं श्रुतिरिति** । को ह्येवान्यादिति श्रुतिः साधारणा ज्ञेया । नन्वेवं ब्रह्मवादनिरूपणेन सर्वेषां भगवान् पुत्रादिरूपो भवतु नाम, परं **सुबोधिन्यां** द्वितीयपक्षे पुत्रादीनामाधिदैविकरूपो भगवान् कथं ज्ञेय इत्याशङ्कायामाह **स्थितिरित्यादिना**। श्रुत्युक्तानन्दस्य सर्वेषां हृदये स्थितिश्रावणेन द्वितीयस्याधिदैविकप्रकारस्यापि सङ्ग्रहो जात इति ज्ञेयः । **सु.** ननु सर्वेषां पिता कथमित्याशङ्क्याह । **सङ्घातस्तु बीजमिति** । सर्वेषां सङ्घातरूपो भगवानित्युक्तमतः पितृसङ्घातरूपेण बीजरूपतोक्ता, अतः सर्वेषां पितृरूपोपि भवतीत्यर्थः । **माता योनिरिति** । तथा मातृसङ्घातरूपेग मातृरूपोपि भगवानित्यर्थः ।

**दृष्टं श्रुतमित्यत्र** । **तथात्वमिति** । आत्मजादित्वमित्यर्थः । **पु. प्र. वेदेनेति** । 'पुरुष एवेदं सर्वं यद्भूतं यच्च भव्य'मित्यादिवेदेन बोधयतीत्यर्थः । **सु. न**
१०-४३-४३
**मन्तव्यमिति** । परिच्छिन्नपुत्रत्वं न मन्तव्यमित्यर्थः । **तावदेव गृहीतमिति** परिछिन्नदृष्ट्या पुत्रत्वं पूर्वं तावदेव गृहीतं तन्न मन्तव्यमिति पूर्वेणान्वयः कर्तव्य इत्यर्थः । किन्तु मूले 'सर्वेषामात्मजो ह्यात्मे' त्यादिनोक्तं सर्वरूपत्वं मन्तव्यमिति भावः । **अन्यथा बुद्धिरिति** । पुत्रोऽस्माकमेव न सर्वेषामिति पूर्वं यान्यथाबुद्धिर्न **वक्तव्येत्यर्थः** । **काल-परिच्छिन्नमिति** । भूतभविष्यद्वर्तमानकाले परिच्छिन्नं यद्वस्तु तद्भगवानेवेत्यर्थः । ननु तत्त-त्काले भगवतः संभवे सति अस्मदादिवद्भगवत्यपि परिच्छिन्नदोषो भविष्यति इत्याशङ्का-यामाहुः **अनेने**त्यादिना विरुद्धसर्वधर्माश्रय इत्यपि गुडजिह्वा । वस्तुतस्तु भूत-भविष्यद्वर्तमानकाले तद्गततद्वस्तुसहित सर्वदैव वर्तते इति विद्वन्मण्डने आविर्भावतिरो-भावनिरूपणे श्रीमत्प्रभुचरणैर्विस्तृतोक्तं द्रष्टव्यम् । **परिच्छिन्नेपीति** । कालपरिच्छिन्नेपी-त्यर्थः । **भेदवानिति** । स्थावरजङ्गमभेदवानित्यर्थः । **चतुर्धेति** । दृष्टं श्रुतमित्येकम् । भूतभवद्भविष्यदिति द्वितीयम् । स्थास्नुश्चरिष्णुरिति तृतीयम् । महदल्पकमिति चतुर्थम् । एवं चतुर्धा इत्यर्थः । **चतुर्मूर्तिरिति** । 'दृष्टं श्रुत'मित्यादिनोक्ता चतुर्मूर्तिः स्वयमेवेत्यर्थः । **केनाप्यंशेनेति** । दृष्टश्रुतादिकेनाप्यंशेनेत्यर्थः । **विभक्तमपीति** । ब्रह्मभावपक्षे अच्युतविभक्तमपि न भवतीत्यर्थः । **भिन्नमपीति** वक्ष्यमाणाधिदैविकप्रकारेणाच्युतभिन्नत्वेन प्रतीतमपि न भिन्नं भवतीत्यर्थः । ननु तर्ह्याधिदैवादिप्रकारेण भवनत्वकथने कोभिप्राय इत्याशङ्कायामाह **नन्दस्येत्यादिना** । **पु. प्र.** । **उपदेशेति** । प्रथमाधिकारत्वादुपदेशान-न्तरं पश्चात् सर्वात्मत्वज्ञानं भविष्यतीति । उत्तमाधिकारिणां तु नोपदेशापेक्षा, तदुक्तं एकादशस्कन्धे 'सर्वभूतेषु यः पश्येद्भगवद्भावमात्मनः, भूतानि भगवत्यात्मन्येष भागवतोत्तम' इति । **सुबोधिन्यां भूत आधिदैविक** इत्यस्यार्थः **पु. प्र.** भूतेत्यादिना । तत्र **सर्व-**

मिति । दृष्टश्रुतादिसर्वमित्यर्थः । **पूर्वमेवे**ति । सृष्टिभवनात्पूर्वं भगवदात्मकत्वेन स्वतःसिद्ध इत्यर्थः । आधिदैविकस्वरूपमाह **स च देवेष्वि**त्यादिना । **विद्यमानतया विद्यमानत्वादि**ति । सर्वदैव विद्यमानत्वादधुनापि विद्यमानतया देवेषु नियामकतया च यदक्षरं जातं तदाधिदैविकमुच्यते इति योज्यम् । **आधिदैविक** इति । अन्तर्यामिरूप आधिदैविक इत्यर्थः । नन्वेवं मूले परमार्थभूत इत्युक्तं तदर्थं आधिदैविकमात्रो भवति । तत्राध्यात्मिकाधिभूतस्वरूपम् 'कार्यकारणकर्तृत्वे हेतुः प्रकृतिरुच्यते । पुरुषः सुखदुःखानां भोक्तृत्वे हेतुरुच्यत' इति । ब्रह्मवादस्यार्थकथनाकथने कोभिप्राय इत्याकाङ्क्षायामाहुः । **एतस्ये**त्यादिना । **एतस्ये**ति । आधिदैविकप्रकारस्येत्यर्थः । **इतरापेक्षये**ति । अध्यात्माधिभूतापेक्षयेत्यर्थः । नन्वेवं तर्ह्याध्यात्मिकरूपस्यार्थत्वमपि कथमित्याशङ्कायामाह । **घृतद्रवत्ववदुत्पन्न** इति । यथा नवनीते घृतमुत्पद्यमानं प्रसृतं भवति तथाधिदैविके भगवत्युत्पद्यमानो जीवरूप आध्यात्मिकोर्थः प्रसृतो भवतीत्यर्थः । आध्यात्मिकपदस्य निरुक्त्यार्थत्वमाह **स चात्मनी**त्यादिना । तदुक्तं **गीतायां** 'अक्षरं ब्रह्म परमं स्वभावोध्यात्ममुच्यत' इति । ननु भौतिकरूपोपि भगवान् भवतीति कथं तस्यानर्थत्वमित्याशङ्कायामाह **भूतेष्वि**त्यादिना । **आध्यात्मिकत्वेने**ति । देहस्य जीवात्मकत्वेनाङ्गीकारादनर्थः । **कस्या अपि श्रुते**रिति । 'सर्वे वेदा यत्पदमामनन्ती'ति श्रुत्या आधिदैविकादिनिरूपिकाणां सर्वासां श्रुतीनामुपचरितार्थत्वम् । आधिभौतिकादिनिरूपिकाणां श्रुतीनां विरोधश्च न भवतीत्यर्थः । **तदर्थ**मिति । श्रुतीनां निर्णयार्थम् । **विचारारम्भ** इति । अथातो ब्रह्मजिज्ञासेत्यादिना विचारारम्भ इत्यर्थः । **नेतरेष्वि**ति । जैमिन्यादिविचारितेषु सफलो न भवतीत्यर्थः । तदेवाह **तत्रे**त्यादिना । **इदङ्कारे**ति । इन्द्रियाधिष्ठातॄणां देवानामयमधिष्ठातेति इदङ्कारमात्रविरोधीत्यर्थः । **अपकर्षपी**ति । सर्वं खल्विदं ब्रह्मेति ब्रह्मवादात् परिच्छिन्नकथनेनाधिदैविकवादस्यापकर्षपीत्यर्थः । ब्रह्मवादस्योत्कर्षमाह । **सर्वस्ये**त्यारभ्य **उत्कर्ष** इत्यन्तेन । **सत्यत्वे**ति । 'सत्यं चानृतं चे'ति श्रुतीनां सत्यत्वबोधिकानामित्यर्थः । **आत्मत्वे**ति इदं सर्वमित्यादिः । आत्मत्वं ब्रह्मत्वबोधिकानां श्रुतीनामित्यर्थः । **वादान्तरेभ्य** इति । आधिदैविकादिवादान्तरेभ्यः सत्यं चानृतं चेत्यादिश्रुतीनां विरोधादित्यर्थः । **उत्कर्ष** इति । ब्रह्मवादोत्कर्षस्य इत्यर्थः । **विचारितत्वाच्चे**ति । पूर्वमीमांसायां सङ्कर्षणकाण्डे जैमिनिनोपासनादिविचारे ब्रह्मवादोत्कर्षस्य विचारितत्वात् ब्रह्मवादस्योत्कर्ष इति योज्यम् । एवमाधिदैविकवादस्य किंचिदपकृष्टत्वं पूर्वमुक्त्वा ततोप्याध्यात्मिकरूपभेदवादस्यापकृष्टत्वं वक्तुमाह । **भेदवादे चे**त्यादिना । **तासा**मिति । आध्यात्मिकवादनिरूपिकाणां श्रुतीनामित्यर्थः । **वास्तव्याङ्गीकारेणे**ति । वस्तुरूपो भगवान् तस्य सम्बन्धिनो जीवा इत्यङ्गीकारेणेत्यर्थः । **सत्यश्रुती**ति । सत्यं चानृतं चेति श्रुतेः जीवानां ब्रह्मात्मकत्वकथनेनाविरोधेपीत्यर्थः । **अन्यासा**मिति इदं सर्वमित्यादीनां विरोधादि-

त्यर्थः । ननु भेदवादस्य कथमाध्यात्मिकत्वमित्याशङ्क्य भेदवाद एवाध्यात्मिकवाद इति अध्यात्मपदस्य निरुक्त्या अध्यात्मस्वरूपमाह **भेदस्येत्यादिना** । **आत्मनीति** परमात्मनि घृतद्रवत्ववदुत्पन्नस्य भेदरूपजीवस्याध्यात्मिकत्वमित्यर्थः । **आरोपाच्चेति** । आत्मनि जीवस्यारोपाच्चाध्यामिकत्वमिति योज्यम् । भौतिकवादस्यापकर्षमाह । **मायावादेत्यादिना** । **प्रदर्शितानामिति** । सत्यं चानृतं चेत्यादिब्रह्मवादे प्रदर्शितानां सर्वासामेव श्रुतीनां विरोधादित्यर्थः । **एतमेवापकर्षमिति** । मायावादाख्यभौतिकापकर्षमित्यर्थः । **आधिदैविको य** इति । पूर्वमीमांसासिद्धः प्रकृतिपुरुषात्मकः सर्वमूलभूतो य आधिभौतिको वादः सोत्र मायावादे आधिदैविकानर्थरूपवाद इति योज्यम् । कथमस्य वादस्यानर्थरूपत्वमित्याशङ्क्याह **मायाधीनकर्तृत्वस्येति** । तदुक्तं तृतीयस्कन्धे कपिलोपाख्याने । **मायिकदेहादिमत्त्वस्येति** । विराड्देहस्य समष्टिरूपस्य मायिकदेहादिमत्त्वमित्यर्थः । **तदवच्छिन्नस्येति** । मायावच्छिन्नस्याङ्गीकारेणानुगत इति भौतिकानर्थरूप इति योज्यम् । तथा च यथा मूले परमार्थभूत इति पदस्यार्थकथनेन पूर्वमीमांसासिद्धवैदिकाधिदैविकवाद उक्तस्तस्यैवोत्कृष्टत्वं बोधयितुं प्रसङ्गादाध्यात्मिकाधिभौतिकवादावप्युक्तौ । तथात्रापि सुबोधिन्युक्ताधिदैविकइतिपदस्यार्थकथनेन साङ्ख्यीयमायावादस्याधिदैविकवाद उक्तः । स च पूर्वोक्तवादे य आधिभौतिको वाद उक्तः सोत्राधिदैविको ज्ञेयः । तथा च वैदिकाधिदैविकरूपः परमात्मा ज्ञेयः । आध्यात्मिको जीवरूप आधिभौतिकः प्रकृतिपुरुषरूपो ज्ञेयः । मायावादे तु स एवाधिदैविको ज्ञेयः, विराड्रूप आध्यात्मिकः । अस्मदादिदेहरूपो भौतिकानर्थरूपो ज्ञेय इत्यर्थः । **तर्हि मुक्तेरभावादिति** । यथा देहात्मवादिनामन्येषां न मुक्तिस्तथा नन्दस्यापि भगवति गोपत्वबुद्ध्या मुक्तिर्न भविष्यतीत्याशङ्क्याह **मुक्तिरित्यादिना** । ननु 'भक्तिः स्यात् परमा लोके ययाञ्जो दुर्गतिं तरे'दिति नन्दप्रार्थनया ब्रह्मणाऽ'स्त्वित्युक्त' इति ब्रह्मणो वाक्यात् परमभक्तिमतो नन्दस्य कथं प्रथमाधिकार इत्याशङ्कायाः परिहारस्तु नन्दस्य भगवद्विरहरूपः शोकोस्ति, तन्निवृत्तिस्तु ज्ञानेन भवति तदर्थं नन्दस्य प्रथमाधिकारित्वम् । भक्तिमार्गे तु नन्दस्य सर्वोत्तमत्वं लोकवेदप्रसिद्धमिति निगर्वः ।

**एवं निशेत्यत्र** । **निमित्तवशादिति** । उद्धवागमननिमित्तम् । दधिमथनादिनिमित्तं
वा । तदर्थं रात्रावेव उत्थानमित्यर्थः । **निरूप्य दीपानिति** । 'हरे-
१०-४३-४४ र्निवासात्मगुणै रमाक्रीडमभून्नृपे'तिवाक्यात् **तासां सम्पत्तिरधिका**
**निरूपितेत्यर्थः** । तेनात्र भगवतो नित्यस्थितिर्ज्ञापितेतिभावः । **सूचितमिति** । मङ्गलारात्रिकामित्युपलक्षणम् । मङ्गलभोगो भगवतः शृङ्गारग्वालभोगराजभोगादिसर्वामपि सेवां नित्यमेव वैष्णवत्वाद्व्रजभक्ताः कुर्वन्तीति लक्ष्यते । अत एव तदनुसारेण श्रीमदाचार्यचरणा

अपि सेवां कुर्वन्तीति लक्ष्यत इत्यर्थः । **ख्यापनार्थमिति** । स्त्रीणां स्वधर्मख्यापनार्थमित्यर्थः । **स्थित इति** । भगवानत्र स्थित इति भक्त्या वा स्थानपूजनमित्यर्थः । **व. ले.** । **प्रायश्चित्तपाते इति** । यज्ञादिकर्मणि प्रायश्चित्तपाते अन्या दुग्ध्वा होतव्यमिति वैदिको दोहस्त्रिवारामित्यर्थः । **सु. सुखचरितेनेति** । दधिमथनसर्वाङ्गसौष्ठवमाभरणानामुत्तमत्त्वं च गोपिकानां सुखचरितेनोद्धवे तुष्यति सति ताभिः कृतमातिथ्यं निरूपितमित्यर्थः । यतः सुखमेवातिथ्यकरणं तज्जननेन तत्करणमिति भावः ।

**ता दीपदीप्तैरित्यस्याभासे** । **स्वरूपस्थित्यैवेति** । 'धारयन्त्यतिकृच्छ्रेण प्रायः प्राणान् कथञ्चने'ति भगवत उक्त्या तासां गोपिकानां स्वरूपस्थित्यैव
१०-४३-४५ यद्यपि संतुष्टो भवत्युद्धव इत्यर्थः । नन्वेवं अप्राकृतस्वरूपवतीनां तैर्मणिभिः किमर्थमधिका शोभोक्ता इत्याकाङ्क्षायामाह **भगवद्योग्यतेत्यादि** । 'मणिधरः क्वचिदागणयन् गा'इति युगलगीतोक्तमत्रेदं तत्त्वम् । यथैतासां वियोगे तासां स्वरूपात्मिकां मणिमालां भगवान् बिभर्ति, तथैता अपि वियोगे भगवद्दत्तां भगवदात्मिकां मणिमालां बिभ्रतीति तासां स्वरूपापेक्षयाप्यधिका कान्तिः, तेन भगवता सह संयोगे योग्यता निरूपितेत्यर्थः । **भगवद्गुणगानयोग्यतेति** । भगवन्मालायाः कीर्तिमत्त्वात्तद्धारणेन गुणगानेपि वा योग्यता निरूपितेत्यर्थः । **वल्गुभानां ले. मूले** । रज्जूविकर्षदित्यस्यार्थः **सु.** रज्जूनां विकर्षयुक्तौ यौ भुजाविति समास उक्तः स व्याकरणे न भवतीति छान्दस इत्युक्तः । **सु.** ननु कङ्कणानां स्रक्त्वं कथमित्याशङ्कायामाहुः **स्थूल** इत्यादिना । तथा च । आभीरनागरीणां स्थूलकङ्कण-परिधानं लोकप्रसिद्धमतस्तानि स्रग्वच्छिथिलानि भवन्तीति भावः । द्वितीयेर्थे गोपिकानां भगवद्विरहात् क्षामत्वम्, अतः कङ्कणानां स्रक्त्वं बोधितमित्यर्थः । एवं गोपिकानां क्षामत्वेपि वस्तुसामर्थ्येन शोभातिशयानिवृत्तिश्चलन्नितम्बेत्यादिनोक्ता ज्ञेया । **व. ले. प्रथमपक्षे इति** । कुण्डले चेत्यन्ते प्रथमपक्षे इत्यर्थः । **मत्वर्थीयार्थकथनमिति** । एते धर्मा यासां सन्तीति मत्वर्थीयार्थकथनमित्यर्थः । **न तु बहुव्रीहिरिति** । एते धर्मा यासां ता इति कथनं नेत्यर्थः । तथा च चलन्नितम्बेत्यादिधर्मवत्यो गोपिका इत्यर्थः । सिद्धार्थमाह **चलदित्यारभ्य** प्रथमपक्षे इत्यन्तोक्तस्यैव सिद्धार्थो ज्ञेयः । **द्वितीये त्विति** । द्वितीयपक्षे **हारेत्यन्तं** मत्व-र्थीयो ज्ञेयः । **कुण्डलयोरित्यर्थकथनमिति** । कुण्डलयोः पृथगर्थकथनमित्यर्थः । तदेवाह । **विग्रहस्त्वित्यादिना** । तथा च **सु.** चलन्नितम्ब इत्यारभ्य यासामित्यन्तं मत्वर्थीयः प्रथमपक्षे ज्ञेयः । द्वितीयपक्षे हारा इत्यन्तं मत्वर्थीयो ज्ञेयः । केवलकुण्डलयोरर्थमाह **कुण्डलयोर्वेत्यादिना** । **सामान्यतस्त्विति** । चलत्कुण्डले इति पूर्वोक्तार्थकथने चलत्कुण्डल-योर्या त्विट् सा कपोले यासां इति वार्थः । **ताभ्यां कृत्वा अरुणा** इति । कुण्डलकान्त्या अरुणानना इत्यर्थः । कपोलयोर्वा अरुणा इति । कपोलयोर्या अरुणा कान्तिस्तयाऽरुणा-नना इत्यर्थः ।

उद्गायतीनामित्यत्र । प्रशस्तान्यङ्गानि यासामिति अङ्गनापदस्य निरुक्तिः । अनङ्गस्य अङ्गं नयन्ति प्रापयन्तीति अङ्गना इति । तेन तासां अङ्गानां
१०-४३-४६ शोभातिशयस्य प्राशस्त्यमुक्तम् । ता यद्यरविंदलोचनपरा न भवेयुस्तदैतासामङ्गानां प्राशस्त्यं व्यर्थं स्यादिति भावः । **व. ले.** । **शतृप्रत्यय** इति यद्यप्यत्र मूलश्लोके शतृप्रत्ययो नास्ति तथापि उद्गायतीति गृहीतविशेषणन्यायेन शतृप्रत्ययसूचिता यावद्दधिमथनप्रवृत्तिः तावदूर्ध्वताविशिष्टगानस्य वर्तमानतां शतृप्रत्ययो बोधयतीति ऊर्ध्वताया अपि तावत्पर्यन्तं प्रवृत्तिरिति योज्यम् । **मानसीसेवा त्विति** । मानसीसेवा तु विप्रयोगे अन्तरेव भगवदानन्दानुभवजनिकेत्यर्थः । तदेवोक्तं **ह. टी. तत्संबन्धेति** । वियोगे विप्रयोगात्मकस्वरूपस्यान्तरेव सम्बन्धानुभव इत्यर्थः । **क्रियाभिश्चेति** । दधिमन्थनक्रियाभिश्चेत्यर्थः । **लीला अभिनयन्तीति** । दधिमन्थनसमये अङ्गचालनक्रियाभिर्नृत्यलीलाभिनयं कुर्वन्तीत्यर्थः । **उभाभ्यामिति** । गानदधिमन्थनक्रियाभ्यामित्यर्थः । **यादृगेतद्रूपमिति** । भगवद्गुणानामपि गोपिकानां गवां च सापेक्षतारूपमित्यर्थः । **सर्वान् गुणगानकर्तॄनिति** । भगवदीयानित्यर्थः । **तन्महत्त्वमाहुरिति** । गोपिकानां गवां च महत्त्वमाहुरित्यर्थः । ननु **सु.** भगवानिव भगवद्गुणा अपि **तत्सापेक्षा** इति । गोपिकानां गवां च सापेक्षा इति । तासां महत्त्वं सूचितमित्युक्तं तत्किमित्याशङ्कापरिहारायोक्तं भगवदीयानां गुणानामित्यादिना । तत्र **ह. टी. भगवदीयानां गुणानामित्या**रभ्य **सर्वत्रगाने** इत्यन्तस्यैवमन्वयः कर्तव्यः । तत्र सर्वत्र गाने अन्येषां **गुणगानकर्तॄणामत्यनुगृहीतानां** **गोविन्ददास**प्रभृतीनामित्यर्थः । **भगवदीयानां गुणानामिति** । भगवद्गुणानामित्यर्थः । **संबन्ध्यपि ध्वनिरिति** । भगवद्गुणगानसम्बन्ध्यपि ध्वनिरूपं यद्वस्तु तद्गोपिकानामिति । **स्वामिनीनां** सम्बन्धिध्वनिरूपं यद्वस्तु कर्म तत्सापेक्षतेति योज्यम् । **गवां चेति** । तथा गवां संबन्धि यद्दधिमन्थनरूपं च कर्म तदपि अन्येषां गानकर्तॄणामपेक्षत इत्यर्थः । तदेव **व. ले.** भगवदीयगुणानामित्यादिनोक्तं द्रष्टव्यम् ।

**भगवत्युदिते सूर्ये** इत्यस्याभासे । एवमित्यादिग्रन्थस्यार्थोऽथवा एवं प्रतिभाति । तत्र **तासां जिज्ञासापर्यन्तमिति** । गोपिका हि उद्धवस्य
१०-४३-४७ रथं दृष्ट्वा किं करिष्यतीति जिज्ञासा उत्पन्ना तावत्पर्यन्तं नन्दगृहे भगवान्निलीय स्थित इत्यर्थः । अन्यथा भगवत्युदित इति नोक्तं स्यादित्यर्थः । नन्वत्र रात्रौ तासां जिज्ञासापर्यन्तं निलीय भगवान् स्थित इत्युक्तम्, तद्दिने सूर्यस्य भगवत्त्वं च उक्तं, उद्धवस्य प्रातःकृत्यं वाच्यार्थं नोक्तं, तत्र कोभिप्राय इत्याकाङ्क्षायामाह **वाच्यार्थ** इत्यादिना । अत्र वाच्यार्था कथाऽनुपयुक्ताऽतः सा नोच्यत इति योज्यम् । **प्रातःकृत्यमिति** । अतो वाच्यार्थरूपं उद्धवस्य प्रातःकृत्यं नोक्तमिर्थः । एतासां तु

विप्रयोगे भगवान् परोक्षभजनं करोतीति 'मया परोक्षं भजता तिरोहित'मित्यादिनोक्तं फलप्रकरणे द्रष्टव्यम् । **उद्धवस्य** चेति । उद्धवस्य तद्दिने व्रजरत्नानां दर्शनादिकं कारयिष्यतीति सूर्यस्य परमपुरुषार्थदायित्वं स्पष्टमित्यर्थः । नन्वत्र नन्दस्य द्वारि एवंविधा अनेकरथा आयान्ति, रथाग्रे रक्षका अपि बहवः सन्ति तानपृष्ट्वा कथमेतावतीं जिज्ञासां कृतवत्य इत्याशङ्क्याह । **मुख्यतया** इति । अत्र गोपानां गृहे स्त्रीणां प्राधान्यं लोकप्रसिद्धम् । अतः स्त्रीत्वात् कौतुकस्वभावेन रथस्य जिज्ञासां कृतवत्यः । अत एवोक्तम् । किं बहुना, **सर्वे वृत्तान्तानभिज्ञा** इति । अन्यथा कुलाङ्गनानामेतावती जिज्ञासा किमर्थं कर्तव्येत्यर्थः । **पृष्टवत्यश्चे**ति । गोपिकाः परस्परं पृष्टवत्य इत्यर्थः । एवं बहुविधा जिज्ञासाः कृता इति भावः ।

१०-४३-४८ **अक्रूर आगत** इत्यत्र । **बाधकज्ञाना**दिति । गोपिकानां बाधकज्ञानाद् वेति सम्भावना इत्यर्थः । ननु युष्माकं श्रीकृष्णः कथं फलात्मको जात इत्याशङ्क्याह । **कमललोचन** इति । दीनानुकम्पीत्यर्थः । **फलसाधन** इति । अतः फलसाधनरूपः स्वयमेव जात इत्यर्थः । **ऐहिकफलरूपो** वेति । कोटिकन्दर्पसुन्दर इति ऐहिकफलरूप इत्यर्थः ।

१०-४३-४९ **किं साधयिष्यतीत्य**त्र । **स्वार्थ**मिति । कंसप्रसन्नतारूपं स्वार्थमित्यर्थः । **जनैराकृष्ट** इति । अरे यथा कंसो मृतस्तथा व्रजवासिनां दुःखदोयं भगवद्वियोगकर्ताऽक्रूरः कदा मरिष्यतीति जनैराकृष्ट इत्यर्थः । **असमर्थ** इति । पूर्वं तु पितृव्योप्यधुना सेवकोऽतः कृष्णमत्र प्रेषयितुमसमर्थः । **निःकृति**रिति । तथा कंसस्यापि जना आक्रोशं कुर्वन्ति, तन्न करिष्यन्ति तदा कंसस्य निःकृतिर्भविष्यतीत्यर्थः । **अन्ये त्वि**ति । द्वितीयेऽर्थे केचित् टीकायां एवं वदन्ति । **मृतस्य** इत्यादि । **भविष्यती**ति । पूर्वं कंसो मृतः, अधुना स्वयं मरिष्यतीत्यर्थः । नन्वेवं को मारयिष्यतीत्याकाङ्क्षायामाह । **भगवानि**त्यादिना । तथा च भगवांस्तु अस्मत्पक्षपातीयः यदाऽस्य पूर्वोक्तमभिप्रायं ज्ञास्यति तदाऽस्मद्रक्षणार्थं एनं मारयित्वा कंसस्य बलिं दास्यतीत्यर्थः । **भ्रान्तोय**मिति । अतो मरणैकत्र्यात् सन्निपातो जातः । अत एवं विचार्यात्रागत इत्युपहासमुक्तवत्य इत्याहुरित्यर्थः । **स्त्रीणामेव**मिति । मुख्यतया पूर्वोक्तानां स्त्रीणामेव हर्षाकारेणेदं वचनमिति योज्यम् । **पूर्वभाव** इति । पूर्वभावो दोषारोप इत्यर्थः । **वदन्तीनां सतीना**मिति । भाषणकाले एवोद्धवः समागत इत्यर्थः । **शापमपि दद्यु**रिति । अस्मद्दुःखदानार्थं यद्यागतो भविष्यति तदाऽस्य भद्रं न भविष्यतीति क्षणं विलम्बे शापमपि दद्युरित्यर्थः । **कृताह्निक** इति । भये सति आह्निकमपि न कुर्यादिति भावः । तर्हि प्रातःकाल एव सर्वमाह्निकं किमर्थं कृतवान्, मध्याह्ने माध्याह्निकं कर्म कुतो न कृतवानित्याशङ्क्याह **अग्रे महती**ति । अग्रे गोपिकानां वचनश्रवणज्ञानोपदेशरूपा महती व्यावृत्तिरिति । पश्चान्नावकाश इति भावः ।

नन्वेवं तर्हि क्षणं विलम्बे शापमपि दद्युरिति किमर्थमुक्तमित्याशङ्कायामाह। उद्धवत्वादेव न भयमित्यादिना । तदेव ह. टी. उत्सवरूपत्वेनेत्यादिना क्षणविलम्बेति शङ्काऽभिप्राय उक्तः। **तत्र अन्यथेति**। तासां क्षोभदर्शने अन्यथा कार्यार्थं विलम्ब उद्धवस्य नोचित इति योज्यम्।

श्रीमदाचार्यवाग्वृन्दविचारणविचक्षणाः।
असामर्थ्यं वदन्ति चेद्वाक्यगौरवशङ्कया ॥ १ ॥
सर्वथैवासमर्थोहमसामर्थ्ये वदामि किम्।
तथापि बाल्यमालक्ष्य प्रसीदन्तु सदा मयि ॥ २ ॥

इति श्रीमन्मथुराधीशसन्निधौ प्रारब्धा, श्रीमत्कल्याणरायसन्निधौ महाराजगोस्वामिश्रीप्रद्युम्नात्मजमहाराजगोस्वामिश्रीसात्वतेशस्य सहायेन श्रीवृषभानुपुरे श्रीद्वारवतीनिवासिना वालखिल्यगरुडोद्गारिज्ञातिना पाहाडश्रीविश्रामात्मजहरिकृष्णेनेयं भ्रमरगीतस्य प्रकीर्णटीपिका संपूर्णीकृता। तत्र मनसोऽनेकपथत्वाद् बुद्धिदोषाद्यत्किंचिन्न्यूनाधिकं तद्विज्ञैर्विचार्य कामानुजं विहाय लेख्यार्हं तल्लेख्यम्, यतो मया व्याकरणं नाधीतम्। अत्रार्थे केनचिदुक्तम्,

एतस्यामहमल्पबुद्धिविभवोप्येकोपि कोपि ध्रुवं
मध्ये भक्तजनस्य मत्कृतिरियं न स्यादवज्ञास्पदम्।
किंविद्याः सरघाः किमुज्ज्वलकुलाः किंपौरुषाः किंगुणा-
स्तत्किं सुंदरमादरेण रसिकैर्नो पीयते तन्मधु ॥

किञ्च देहस्यानित्यत्वं, ततो ममोपरि दयां कृत्वा सत्समागमे सद्भिः स्मर्तव्योहमिति प्रार्थये ॥

**इति श्रीभ्रमरगीतप्रथमाध्यायप्रकीर्णटीपिका समाप्ता।**

---

## चतुश्चत्वारिंशोऽध्यायः।

नत्वा श्रीवल्लभाचार्यान्प्रभून् श्रीविठ्ठलेश्वरान्।
तद्वंश्यान्बालकान् सर्वान् गुरून् श्रीगोकुलेश्वरान्[१] ॥ १ ॥
श्रीमदाचार्यवाक्यानि दुर्बोधान्येव सर्वथा।
तथापि तत्प्रसादेन चिन्तयामि यथामति ॥ २ ॥

अथ श्रीभ्रमरगीतसुबोधिन्यादिषु क्वचित् क्वचिद्बोधसौकर्यार्थं प्रकीर्णटीपिका

---

१ श्रीगोकुलेश्वरानिति गोस्वामिश्रीमथुरानाथात्मजगोस्वामिश्रीगोकुलनाथानित्यर्थः।

१०-४४-० लिख्यते । तत्र **टिप्पण्यां** कारिकायां **तत्पादरजसागत्येति** । तस्य चरणरेणुना आगत्येत्यर्थः । अत्र **रजसेति** कर्तरि तृतीया ज्ञेया । सुबोधिनीकारिकार्थलिखने टिप्पण्याम् । **उद्देश्यत्वेनेति** । ग्रामं गच्छंस्तृणं स्पृशन्निति न्यायस्यार्थः । यथा ग्रामे गमनमुद्देश्यत्वेन मुख्यं कार्यं, तथा तृणस्पर्शनं नोद्देश्यत्वेन मुख्यं कार्यं, किन्त्ववान्तरकार्यमित्यर्थः । **गोपीनां ज्ञानदेशात** इत्युद्देश्यत्वेन निरोधसिद्ध्यर्थं गोपीनां या ज्ञानोपदेशोक्तिस्तद्व्यवच्छेदार्थं एवकार इत्यर्थः । तर्हि आचार्यैश्चतुश्चत्वारिंशेति कारिकायामुक्ता या ज्ञानोपदेशोक्तिः सा ज्ञानमार्गीया तद्भिन्ना वेत्याशङ्कायां तद्भिन्नैवेति 'भवतीनां वियोगो मे'इत्यत्र टिप्पण्या'मत्रेदं प्रतिभाती'त्यादिना विशदीकृता द्रष्टव्या । वस्तुतस्तु प्रत्यक्षदर्शनाभिकाङ्क्षिणीनामेतासां सापि ज्ञानोक्तिर्नाभिप्रेतैतत्सर्वं 'मेवप्रियतमादिष्ट'मिति श्लोकस्य टिप्पण्यामेतासां त्वधुनैवेत्यादिना विवृतम् । **तादृग् ज्ञानोपदेशेति** । 'भवतीनां वियोगो मे न ही'त्यादिश्लोकोक्तज्ञानोपदेश इत्यर्थः । **एतदुक्तिरिति** । ज्ञानोपदेशोक्तिः ।

**याते कृष्ण इत्यत्र** । **अन्यथेति** । ज्ञानोपदेशं विना न निरुद्धा इति प्रायः सर्वेषां मतिर्भवेदिति योज्यम् । **पूर्वमपीति** । पूर्वं गोचारणादिगमनेष्वपि लोकवन्नैकट्याभावो न तु वस्तुत इति युगलगीते'रेमिरेहस्सु तच्चित्ता' इत्यत्र स्फुटमुक्तमिति । **एतदिति** । वियोगाभावकथनम् । **तथा मतिरिति** । न निरुद्धा इति मतिः स्यात् । **एतत्कथनमिति** । ज्ञानोपदेशकथनम् । **सा मतिरिति** । एता न **निरुद्धा** इति मतिर्भक्तानां भवित्र्येवेति ।

**सेवकेनेत्यत्र** । **ज्ञानमार्गीयेणेति** । सनकाद्यादिभिरित्यर्थः । **कथमन्यथेति** । यद्भक्तानां प्रीतिविरोधिज्ञानोपदेशकथनमन्यथाकरणं तत्कथं कुर्यात् कारयेद्वा । **उपदेशेति** । 'भवतीनां वियोगो मे न ही'ति ज्ञानोपदेशजनित इत्यर्थः । **तत्रेति** । ज्ञानोपदेशे । **तथा भूतास्विति** । ममात्मभूतासु । **ज्ञातवत्य इति** । एवं ज्ञानोपदेशेन ज्ञातवत्यः । **आत्मत्वेन, ज्ञानेनेति** । स्वस्मिन्भगवदात्मस्वरूपज्ञानेनेत्यर्थः ।

**वस्तुन इत्यत्र** । **तथात्वमिति** । अन्त्यावस्थात्वम् । **टि० दंशश्चेति** । तदुक्तम् 'दंशनं वृश्चिकैः सर्पैः सन्निपाते सुदारुणे' इति । **तेनातितीक्ष्णौषधदानं विषमाशीविषदंशश्च** । 'भवतीनां वियोगो मे' इत्यादिना ज्ञानोपदेशेन **बहिःसंवेदनमिति** । **ततो विविधरसैरिति** । 'ततस्ताः कृष्णसन्देशै'रिति विविधसन्देशैर्विविधरसैः । **अन्नदानमिति** । अग्रे 'कृष्णलीलाकथा गाय'न्निति कृष्णलीलाकथागानरूपस्वाभाविकमन्नदानमिति । **तमिति** । पूर्वमेव तं दोषं दृष्ट्वा इत्यर्थः । **उक्तरूपेति** । अतितीक्ष्णौषधादिरूप इत्यर्थः । **अत्रैवेति** । ज्वरनिवृत्त्यर्थम् । **अनूद्यत इति** । **व्यपेतविरहज्वरा** इत्यनूद्यते । **महापुरुषेति** । उद्धव इत्यर्थः । **उभयत्रेति** । श्रूयतां प्रियसन्देश इति, तत्सन्देशागतस्मृतीरिति

चोभयत्र । **उक्तरूप** इति आगतस्मृतिरूप एव । **ज्ञानोपदेशेति** । 'भवतीनां वियोग' इत्युपदेशलक्षणसन्देशेन । **तत्रोपक्रमे** इति । 'श्रूयतां प्रियसन्देश' इत्युपक्रम्य 'भवतीनां सुखावह' इत्युक्त्या तत्पूर्वं दुःखमनुक्तसिद्धमेवेति ज्ञेयम् । **अत एवेति** । ज्ञानाद्भक्तेरधिकत्वादेव । **उक्तमेवेति** । प्रयोजनमुक्तमेव ।

**बीजमित्यत्र । गोस्वामिश्रीवल्लभानां लेखे शिष्टैरितीति** । तत उद्धववाक्यैः कृतार्थत्वमुक्तं तदुद्धववाक्यानि यद्यपि 'एताः परं' इत्यादिषट्श्लोकप्रसिद्धानि, तथापि तदुद्धववाक्यात्पूर्वमुवासेत्यादिश्लोकचतुष्टये शुकवाक्येपि 'कृष्णलीलाकथा गायन्' 'कृष्णस्य वार्तये'त्युक्त्या उद्धववाक्यैरेव कृतार्थत्वं ज्ञेयम् । अग्रेपि 'अथ गोपीरनुज्ञाप्ये'त्यारभ्य 'कृष्णाय प्रणिपत्याहे'त्यन्तमपि शुकवाक्ये व्रजवासिनां सर्वेषामुद्धववाक्यैः कृतार्थत्वमुक्तमिति प्रतिभाति । अतोत्रापि शिष्टैरित्युक्तम् ।

**तं वीक्ष्य कृष्णानुचरमित्यत्र । सुबोधिन्याम्** । कृष्णानुचरमित्यस्यार्थान्तरमाहुः **अथवा न हीत्यादिना** । यथा महतां चेतः अधर्मे न पततीतिवत् गोपि-
१०-४४-१ कानां चेतः अधर्मे न पततीत्यर्थः । **तस्येति** । उद्धवस्य गोपिकाकर्तृकदर्शने शङ्कां वारयितुं कृष्णानुचरमित्युक्तमित्यर्थः । **तादृश्य इति** भगवदीयाः । **निर्दोषानन्दरूपस्येति** । कृष्णपदस्यार्थो ज्ञेयः । **षड्भिरिति** । एवं प्रथमपदे भगवदीयोयमिति ज्ञात्वा तस्मिन् भगवत्सारूप्यं दृष्ट्वा तद्वर्णयितुं पदत्रयस्याभासमवतारयन्ति **भगवत्त्वायेत्यारभ्य वक्तव्या इत्यन्तेन** । तत्रैवमन्वयः कर्तव्यः । **भगवत्त्वायेति** । उद्धवस्य भगवत्त्वायेत्यर्थः । स्त्रीणां हि कामप्राधान्यात्तदुपयोगिनः षड्गुणा वक्तव्या इति । **प्रलम्बबाहुमित्यादि**-षड्भिः पदैः भगवत्सारूप्याय उद्धवं वर्णयतीति योज्यम् । ननूद्धवस्य स्वरूपवर्णने गोपिकानां क उपयोग इत्याशङ्क्याह **स्मारकत्वेनेति** । भगवत्स्वरूपस्मारकत्वेन तस्यावयवा उपयुज्यन्ते इत्यर्थः । **क्रियाशक्तिरिति** । प्रलम्बबाहुत्वोक्त्या वीर्यरूपगुणातिशयः **सूचित** इत्यर्थः । **परिरम्भोपयोगश्चेति** । स्त्रीणां हि कामप्राधान्यात्तदुपयोगिनो गुणा अपि सूचिता इत्यर्थः । **सर्वतापहारिका ज्ञानशक्तीति** । ज्ञानिनां सर्वतापहारको द्वितीयो ज्ञानगुणो निरूपितः । स्त्रीणां सर्वतापहारिका ज्ञानशक्तिः कामोद्बोधिका च नवकञ्जलोचनेत्युक्त्या निरूपिता इत्यर्थः । **एवं क्रियाज्ञानशक्ती निरूप्येति** । भगवतो वीर्यज्ञानगुणौ निरूप्येत्यर्थः । **मायाशक्तिमिति** । ऐश्वर्यगुणं निरूपयतीत्यर्थः, भगवतो मायाशक्तिरेव ऐश्वर्यं, तत्पीताम्बरे प्रसिद्धमित्यर्थः । तत्र स्त्रीणां कामोद्बोधकं गुणमाह **अनावृतेत्यादिना** । तत्र गुप्तो हि रसो रसतामापद्यते इति प्रमाणं चेत्यर्थः । **कीर्तिमत्त्वमुक्तमिति** । ननु कीर्तेः स्त्रीणां कामोपयोगित्वं कथमित्याशङ्कापरिहाराय युगलगीते 'मदविघूर्णित' इत्यत्र **वनमालीति** पदस्यार्थकथने टिप्पण्याम्, **यद्यपीत्यारभ्य इत्याशये**-

**नोक्तमित्यन्तेनोक्तं** द्रष्टव्यम् । तेन भगवतः कीर्तिमत्त्वं स्त्रीणां कामोपयोगित्वमित्यर्थः । **श्रीर्निरूपिता** इति । वीक्ष्यालकावृतमुखमित्यत्र मुखश्रीर्वीक्ष्य दास्यो भवाम इत्यत्रोक्ता **सु०** स्त्रीणां कामोपयोगिनी द्रष्टव्या । एवं कीर्तिः श्रीर्गुणावुक्त्वा भगवतो वैराग्यगुणमुद्धवे आह **वैराग्यमिवेति** । यथा वैराग्ये सति शास्त्रीयकान्तिरुज्ज्वला सर्वाङ्गे भवति, तथा कुण्डले इत्युपलक्षणेन मणिभिर्मृष्टा सर्वाभरणकृता कान्तिरुद्धवे वैराग्यमिव निरूपिता । एवं 'मदन्यं ते न जानन्ति नाहं तेभ्यो मनागपी'ति वाक्याद् यथा भक्तानां भगवदतिरिक्तेषु वैराग्यमुक्तं, तथा भगवतोपि भक्तातिरिक्तेषु वैराग्यमुक्तम् । तेन भगवतो वैराग्योक्त्या गोपिकानां कामोपयोगी गुणो भगवति सूचित इति भावः । **सर्वत्रैवेति** । अन्यत्रापि यत्र नीलवर्णस्तत्र पीताम्बरेण शोभावर्णनमतो न केवले भगवत्येव पीताम्बरवर्णने नियमोस्ति । द्वितीयश्लोके कुतश्चेत्यस्यार्थकथने उद्धवस्य भगवदाकृतिस्वभावोक्त्या नीलवर्णो ज्ञायते । अतः पीताम्बरत्वोक्त्यापि न शङ्केति ज्ञेयम् ।

**शुचिस्मित इत्यत्र । व्याजलोभाद्यनुपहतमिति** अन्तर्लोभो बहिर्भगवदानन्दाविर्भावमिषेण स्मितं अशुचिस्मितं तद्रहितं शुचिस्मितमित्यर्थः ।

१०-४४-२

**रक्षकाश्चेति** । भगवदीयानां मनांसि कस्मिन्नपि काले नान्यत्र गच्छन्तीति कालादीनां रक्षकत्वमिति । **कथं गता** इति । उद्धवस्याग्रे गत्वा कथं वेष्टनं कृतवत्यः । **भगवच्चरणसेवकः भक्तिमार्गानुसारीति** । ननूत्तमश्लोकपदाम्बुजाश्रयमेतस्यार्थकथने भगवच्चरणसेवक इति कथनेन चारितार्थ्येपि पुनरपि भक्तिमार्गानुसारी, तत्रापि शास्त्रीय इति पदद्वयकथने कोभिप्राय इत्याकाङ्क्षायां उद्धवसमीपं गत्वा कथं वेष्टनं कृतवत्य इत्याशङ्का नापैति इति तदर्थं पदद्वयमिति ज्ञेयम् । तत्र **भक्तिमार्गानुसारीति** पदाम्बुजाश्रयमेतस्यार्थो ज्ञेयः । तत्रापि **शास्त्रीय** इति उत्तमश्लोक इत्यस्यार्थः । अत्रायमाशयः । पूर्वं भगवच्चरणसेवक इत्युक्तम् । तत्र कपिलदेवस्य वाक्ये 'भक्तियोगो बहुविधो मार्गैर्भामिनि भाव्यते । स्वभावगुणमार्गेण पुंसां भावो विभिद्यत' इत्यारभ्य 'अभिसन्धाय यद्धिंसामि'त्यादिषु स्वभावगुणमार्गेण भक्तानां तामसादिभावभेदा उक्ताः । अयमपि तादृशो भविष्यतीति शङ्कापरिहाराय भक्तिमार्गानुसारीत्युक्तम् । तदपि तत्रैवोक्तम् । 'मद्गुणश्रुतिमात्रेण मयि सर्वगुहाशये मनोगतिरविच्छिन्ना यथा गङ्गाम्भसोम्बुधा'विति । तत्रापि 'यत्पादपङ्कजपरागनिषेवतृप्ता योगप्रभावविधुताखिलकर्मबन्धाः । स्वैरं चरन्ति मुनयोपि न नह्यमानास्तस्येच्छयात्तवपुषः कुत एव बन्ध' इति भक्तिमार्गानुसारिष्वपि स्वैराचरणमाशङ्क्य परिहरन्ति । तत्रापि शास्त्रीय इति तत्रापीति भक्तिमार्गानुसारिष्वपीत्यर्थः । अत्रायमर्थः । यथा भगवानुत्तमश्लोकस्तथा 'यो यच्छ्रद्धः स एव स' इति वाक्यादयमपि तादृशः । तदेवोक्तं तृतीयस्कन्धे चतुर्थाध्याये । 'नोद्धवोण्वपि मन्न्यूनो यद्गुणैर्नार्दितः प्रभुः । अतो मद्वयुनं लोकं ग्राहयन्निह तिष्ठतु' इति । अतस्तत्परिवेष्टने न कापि शङ्केति भावः ।

**तं प्रश्रयेणेत्यत्र** । पूर्वस्मेवेति । गोपिकाभिर्भगवता वा सुसत्कृतः । **काम** एवेति कामोद्देशो भगवद्भावे न तूद्धवे इति ज्ञेयम् । **अन्यादृष्टिरिति**
१०-४४-३ अन्यादृष्टिरित्यस्यार्थः क्रूरा रूक्षा वेति ज्ञातव्यः । **रसार्थमिति** रसभावोपि भगवत्येव न तु उद्धव इति ज्ञेयम् । **तासामिति** उद्धवागमनं तासां मानमुत्पादयति । **अनेनेति** वस्तुनो निश्चयान्मानोत्पत्तिरूप एको दोष इत्यर्थः ।

**जानीम इत्यत्र** । **द्वितीय इति** । उपालम्भरूपः । द्वितीयदोषोत्पत्तिमाहेत्यर्थः । **अन्यार्थेति** । पित्रर्थागमनमित्यर्थः । न त्वस्मदर्थमिति भावः । **उप-**
१०-४४-४ **कारेति** उद्धवस्यागमनेन स्वोपकारस्वीकारे इत्यर्थः । **बीजमेतदिति** 'जानीम' इति वाक्यार्थे अन्यार्थागमनकथनमुपालम्भे बीजमिति । **तस्येति** बीजस्येत्यर्थः । **अन्यनिषेधेति** 'अन्यथा गोत्रजे' इति द्वितीयश्लोके 'स्मरणीयं न चक्ष्महे' इति अन्यनिषेधपूर्वकबीजसमर्थनमित्यर्थः । **औपाधिकत्वेनेति** भगवत औपाधिकत्वेन **स्वार्थपरत्वसाधनम् अन्येष्वर्थकृतेति** तृतीयश्लोके निरूपितम् । **उभयोरिति** श्रीकृष्णगोपिकयोः वियोगस्य समानत्वात् । **दृष्टान्तैरिति** पुम्भिःस्त्रीष्वित्यादिदशदृष्टान्तैरित्यर्थः । **तस्येति** रोगरूपदोषस्येत्यर्थः । **साध्यत्वेति** ननु सर्वत्रैव देहादिस्मरणाभावो रोगे असाध्यत्वज्ञापक इति कथमत्र देहादिस्मरणाभावेपि रोगे साध्यत्वमित्याकाङ्क्षायां बाह्यतो देहादिस्मरणाभावेपि 'इति गोप्यो हि गोविन्दे गतवाक्कायमानसा' इति षष्ठे श्लोके मूलोक्त्या गोविन्दस्य भावानुभावो रोगे साध्यत्वमुपपादयतीति भावः । **ततोपि सुसाध्यत्वायेति** 'इति गोप्य' इति श्लोकार्थकथने इतीति समाप्तौ प्रकारे चेत्युक्तम् । तत्र प्रकारार्थकथने पूर्वोक्तदोषस्य तदासक्तिः फलं, न तु नाश इति वक्तुं 'गतवाक्कायमानसा' इत्युक्तम् । यद्येवं दोषकथनेपि साध्यत्वं तदाग्रे 'गायन्त्यः प्रियकर्माणी'त्यत्र निर्दोषभावेन स्मरणपूर्वकबालकैशोरचरित्रगाने सुसाध्यत्वे का नाम शङ्का इति भावः । **प्रतिष्ठितो भवतीति** दीर्घकालिको भवतीति । **ततोऽग्रिमारम्भ इति** । 'मधुप कितवे'त्यादिना 'व्याजोक्त्या दोषगणने'तिकारिकोक्तस्तृतीयदोषारम्भः । **टिप्पण्याम् एवमिति** समित्युपसर्गसूचितस्यार्थकथने वक्रोक्तिरूपां गूढाभिसन्धिमुद्घाटयन्ति इत्यर्थः । तत्र **सुबोधिन्यामन्यथेत्यादिना** स्वामिन्या गूढाभिप्राय उद्घाटितस्तदर्थष्टिप्पण्यां **स्वयमित्यारभ्य भाव इत्यन्तेन** विवृतः, पश्चात्सु० **एवं भगवन्तमित्यारभ्य भर्त्रेत्याहुरित्यन्तस्य** टिप्पण्यां **दुःखिता अपीत्यारभ्य भाव इत्यन्तेन** विवृतो ज्ञेयः । **सुबोधिन्यां भर्त्रेति** पदतात्पर्यकथने एवमिति पूर्वपरामर्शे । पूर्वपरामर्शस्तु यदुपतेरित्यस्यार्थकथने पूर्वं गोपिकापतिरधुना यदुपतिरिति नास्मदुपकारं करिष्यतीति स्वपतित्वाभावकथनेन । एवं भगवन्तमन्यथा स्वयमेव कल्पयित्वा स्वयमेवैता नष्टा जाता इति एवं स्वयमेवेति पदमावृत्त्या योजनीयमिति । **कदाचिच्छङ्का स्यादिति** एवं कदाचित्पदस्यापीतिपदेन सह

३८-३९

सम्बन्धः कर्तव्यः । शङ्काव्यावृत्तिस्तु **भर्त्रे**तिपदेनोक्ता, तेनैतासां भर्तृभावः सदैव वर्तते । अन्यथा **भर्त्रे**तिपदोक्तिं न कुर्युः । ततो नैता नष्टाः परं भगवतोपेक्षिता इति । **प्रसङ्गादिति इहे**त्यस्यार्थकथनम् । ननु यथा एता भगवतोपेक्षिता इति कल्पनेन ममाप्यागमनं प्रसङ्गाद्वदन्तीत्याशङ्कमानमुद्धवं प्रति प्रसङ्गादागतत्वं न वदन्तीति, कार्यार्थमन्यत्र गच्छतो मध्यग्रामे गमनं प्रसङ्गादागतत्वं, तथा न वदन्ति व्रजरत्नाः । तथाकथने को दोष इत्याशङ्क्याहुः **सर्वथा मिथ्या भविष्यती**ति । तथाकथने चागमनं सर्वथा मिथ्या भविष्यतीति तदभावायोक्तमि**हैव गोकुले प्रेषित** इति । **प्रयोजनमाहु**रिति आगमनप्रयोजनमाहुरित्यर्थः । **सत्तामात्रेणे**ति पुत्रस्य स्वस्थाने स्थितिमात्रश्रवणेनापीत्यर्थः ।

**अन्यथेत्यत्र । यथे**ति । तथा आकाङ्क्षापरित्यागेऽप्याकाङ्क्ष्यपदार्थे स्नेहो गच्छतीति योज्यम् । **एव**मिति ननु 'मदन्यन्ते न जानन्ति नाहं तेभ्यो मनागपी'ति
१०-४४-५ वाक्यात्कथं भगवतो भक्तानामाकाङ्क्षापरित्याग इत्यत आहुः **एवमाकाङ्क्षे**त्यादि । **तत्रे**ति कुब्जादिभक्तेषु । **किमि**ति अन्यविषयप्राप्तावपि बन्धूनां स्नेहो न निवर्तत इति किं वाच्यमित्यर्थः । **वैदिकं बलिष्ठ**मिति 'स्वैरं चरन्ति मुनयोऽपी'ति वाक्याद्यद्यपि मुनीनां स्वैराचरणेपि न दोषोक्तिस्तथापि 'मातरं पितरं वृद्धं भार्यां साध्वीं सुतं शिशुम् । गुरुं विप्रं प्रपन्नं च कल्पोऽबिभ्रच्छ्वसन्मृतः' इत्यादिषु दोषकथनाद् वैदिकं बलिष्ठमित्युक्तं, अत एव मूले **सुदुस्त्यज** इत्युक्तम् । **नित्यविवेके**ति बन्धूनां स्नेहानुबन्धस्त्यक्तव्य इति नित्यविवेकस्मरणेपीत्यर्थः ।

**अन्येष्वर्थेत्यत्र । प्रयोजन**मिति । ननु नन्दादीनां देहसम्बन्धेन कथं स्नेहो दुस्त्याज्यः, अन्येषु देहसम्बन्धरहितेषु मैत्री प्रयोजनकृता कथं दुर्बले-
१०-४४-६ त्याकाङ्क्षायामाहुः **प्रयोजनं देहधर्म** इति तेन देहे धर्मित्वं प्रयोजने धर्मत्वमुक्तं, तेन नन्दादीनां देहसम्बन्धेन धर्मिणो बलिष्ठत्वमस्माकं देहसम्बन्धाभावाद्धर्मिणः सकाशाद् धर्मस्य दुर्बलतेति भावः । **औपाधिक** इति यथा माञ्जिष्ठादिरागा वस्त्रादिष्वौपाधिका अपि यावत्कालमपि तिष्ठन्ति तथा भगवत्स्नेह औपाधिकोपि न चिरस्थायीति तत्रापि **विडम्बनमेव** अनुकरणमेव नटवदित्युक्तम् । **अन्यथे**ति अविवाहितेनापि कामे सिद्धे वैराग्यादिना वा कामे गतेपि विवाहितेषु स्नेहो निवर्तते । **शास्त्रमपी**ति ननु 'यावज्जीवमग्निहोत्रं जुहुयादि'ति श्रुत्युक्तस्यान्यथानुपपत्त्या कथं विवाहितायास्त्यागं शास्त्रं विधत्ते, तथा सत्यग्निहोत्रं न स्यादित्याशङ्क्याह **शास्त्रमपी**त्यादि । तथा च 'यावज्जीवमग्निहोत्रमि'ति वाक्यं वैराग्यादर्वाक् कर्माधिकारे, 'यदहरेव विरजेदि'ति वैराग्याधिकारे सिद्धे चेति न कापि शङ्का ।

**निःस्वमित्यस्याभासे । सु० । सर्वत्रेति** । यथा युक्तत्वे दृष्टान्तः सुलभस्तथाऽयुक्तत्वेपि सुलभ इत्यर्थः । तदेव दर्शयन्ति **पुष्पाणामित्यारभ्य न युक्तो**
१०-४४-७ **दृष्टान्त** इत्यन्तेन । **औपाधिकानामिति** यत्र यत्रौपाधिकः सम्बन्धोस्ति तत्र तत्र स्वार्थाभावे त्यागावस्थैवेति वक्तुं दृष्टान्ताष्टकमाहुः । व्याख्याने । **ननु सुमनः**-षट्पदेषु यथा बहुत्वं साधारणत्वं चोपाधिरस्त्येव तथा निःस्वादिदृष्टान्तेष्वपि बहुत्वं साधारणत्वं चोपाधिरस्त्येव तदा बहुदृष्टान्तेन किं साधितमित्याशङ्क्याह **यद्य-पीत्यादिना**, तथा च दृष्टान्ते दूषणाभावकथने नास्मदभिप्रायोस्ति, किन्तु सन्दिग्धो-पाधित्वं साधयितुं दृष्टान्तानां कथनमिति । तत्र हेतुमाह तथापि **बहुधा दर्शनादिति** । **बहुधाशब्दो**त्र प्रायशःशब्दपर्यायइति ज्ञेयम् । तथा च काश्चिद्गणिका निःस्वं त्यजन्ति काश्चिन्न त्यजन्ति एवं काश्चित्प्रजा नृपतिं त्यजन्ति काश्चिन्न त्यजन्ति इति लोके प्रसिद्धम् । एवं ब्रह्मचारिणोपि केचिद् आचार्यं त्यजन्ति 'गुरवे विन्यसेद्देहं स्वा-ध्यायार्थं बृहद्व्रतः' इति वाक्यान्नैष्ठिका भूत्वा केचिद् न त्यजन्ति इति शास्त्रं प्रसिद्धम् । एवमग्रे ऋत्विजादिष्वपि द्रष्टव्यम् । एवं वयमपि रासक्रीडादिषु पूर्वं भगवता मदमाना-द्यस्मद्दोषेण बहुधा त्यक्ताः, पुनर्गृहीताश्च । अधुनास्मद्दोषाभावेपि त्यक्ता न पुनर्गृह्णातीति सन्दिग्धोपाधिकत्वं लक्ष्यते । ननु किमनेन दोषवार्ताकथनेनैतद्वार्ता सर्वथा निराकरणीयेति चेत्तत्राहुः **सर्वथेतीति** । एतद्वार्तानिर्णयाभावे दोषो भगवति अचिकित्सित एव स्यादिति योज्यम् । दोषस्य निर्णयार्थं न्यायोक्तमुदाहरणमाहुः 'यथा मित्रातनय' इत्यादिना । तथा च **यथा मित्राया** नवसङ्ख्याकान्पुत्रान्श्यामान् दृष्ट्वा पूर्वं सन्दिग्धोपाधिकत्वं जातं, अहो एते मित्राया दोषेण श्यामा अथवा शाकपाकेन श्यामाः तन्निर्णयार्थं **दशमोपि चेच्छ्याम** एव स्यात्तदोपाधिः शाकपाकजत्वं न भवेदेव, अन्यथा तु भविष्यत्येवेति । एवं दार्ष्टा-न्तेपि । एवं बहुत्वे साधारणत्वेपि यदि अन्ततो भगवांस्त्यक्ष्यत्येव तदा मित्राया दोषवद्भगवति दोषो भविष्यत्येव । **तदास्मासु अभावादिति** । तदास्मासु शाकपाकजोपाधिवन्नोपा-धिर्भविष्यतीति भावः । **धर्मार्थमपीति** धर्मार्थे भजनं तु पाद्मे वैशाखमाहात्म्यप्रथमाध्या-योक्तं बोध्यम् । तत्र हि वैश्यजातीयया वेश्याभूतया विचित्रैः सुरतोपचारैरदृष्टबुद्ध्या संसेवितो-तिथिस्तीर्थान्यटमानो वासुदेवनामा रेवायां वैशाखस्नानोपदेशं विधाय तया सार्धं तत्र स्नानं कुर्वन् कारयन् दयया तदवरोधे वसंस्तां स्वात्मानं चोद्धृत्य स्वयं पाण्ड्यदेशाधिपो वीरसेनाख्यो जन्मान्तरे जातः, सा च काशीपतेर्वैष्णवतमस्य दिवोदासस्य सुता दिव्यादेवी नाम्नी जातेत्युक्तम् । अत्र तु यस्मैकस्मैचिद् भजनेन धर्मार्थमपि भजनं निषिद्धम् । **तासां तावदिति** । आत्मनिवेदनादिपूर्वकं सर्वभावेन भजनादिकं व्यर्थमेवेत्यर्थः । **विदित्वेति** अर्थाभावे त्यक्ष्यतीति विदित्वापीत्यर्थः ।

**जारो भुक्त्वेत्यत्र** । **अथवेति** । ननु **सुबोधिन्यां सात्त्विकादि भावेषु तथा**
१०-४४-८ **तथा वचनमिति** दशविधानां भावाः पूर्वं प्रतिज्ञाय जारो भुक्त्वेत्यन्तेन राजसतामस्या वचनमित्येकस्या भावो दर्शितः, अवशिष्टानां नवानां भावाः टिप्पण्यां श्रीमद्गोस्वामिचरणैर्विशदीकृताः, पश्चाद्दृष्टान्ताष्टकमेवैतदवधीत्युक्तम् । तत्र दशविधानां का व्यवस्थेत्याकाङ्क्षायामत्रैवं व्यवस्था कार्या । अत्रापि **निःस्वमिति** दृष्टान्ते या तामसतामस्युक्ता तस्यास्तामसतामस्यास्तु सर्वभावापन्नाया भ्रमरकथायां स्वरूपं वक्तव्यमित्युक्तम्, तदा निःस्वमिति दृष्टान्ते पूर्वं सुमनःषट्पददृष्टान्ते राजसराजसभावो य उक्तः स भावो निरूपित इति तदेवोक्तं गोस्वामि**श्रीपुरुषोत्तमानां प्रकाशे** 'राजसराजसो निःस्वमिति दृष्टान्तो ज्ञेयः' इत्यनेन । **तथा पुम्भिः स्त्रीष्विति** सुमनःषट्पदस्येति दृष्टान्तद्वयं तदेकीकृत्य राजससात्त्विकभाव उक्तः । तदेवोक्तं राजससात्त्विकभावस्तु पुम्भिरित्यर्धेन निरूपित एवेति **भाव** इति दृष्टान्ताष्टकेपि सर्वं समञ्जसमिति ।

**इति गोप्य** इत्यस्याभासे **किं ज्ञानेनेति** । पूर्वं चतुश्चत्वारिंशाध्यायार्थकथने
१०-४४-९ सुबोधिन्याः कारिकार्थष्टिप्पण्यां विवृतोस्ति, तथा तादृग्ज्ञानोपदेशश्रवणेनातितप्ततैलपतितजलबिन्दुसदृशेनात्युत्कटभावो वर्ण्यत इति पूर्वस्माद्विशेष इत्युक्तम् । पुनरपि भगवांस्तत्र तादृशीनां तादृग्ज्ञानोपदेशेन स्वोपालम्भार्थं किमर्थं सज्जीकरोतीति केषांचिद् भ्रान्तानामाशङ्कां श्रीशुक आशङ्क्य तासां **क्लेशवशादित्यादिना** परिहरतीत्यर्थः । **इति गोप्यो हीत्यत्र** । **पूर्वोक्तदोषस्येति** । पूर्वोक्तोपालम्भरूपदोषस्येत्यर्थः । **इतीति** पूर्वोक्तप्रतिज्ञातप्रकारार्थ इति ज्ञेयः । तथा च उपालम्भरूपदोषकथनप्रकारेण 'गोविन्दे गतवाक्कायमानसा' इत्युक्तमिति । **भगवच्छास्त्र** इति तासां वाक्यानि भगवच्छास्त्ररूपाणि' तानि चेद्दोषजनकानि स्युस्तदा भगवच्छास्त्रे दोषः स्यादित्यर्थः । अथवा 'सांकेत्यामि'त्यादि, '**द्विषन्नपी**'त्यादि, 'हेलनमेव वे'त्यादि, 'भगवान् किं करिष्यती'-त्यादिहेलनकर्तृणामपि 'अशेषाघहर'मित्युक्तिरूपे 'द्विषन्नपी'ति कथनेपि शिशुपालादीनां द्वेषकर्तृणामपि सिद्धिकथनरूपेपि तत्र किमुता'धोक्षजप्रिया' इत्यत्र कैमुतिकन्यायेपि दोषः स्यादित्यर्थः ।

**गायन्त्य इत्यत्र** । **किमवशिष्यते** तासु इति । त्यागे किमवशिष्यत इत्यर्थः ।
१०-४४-१० **पूर्वोक्तविधा** इति । 'गतवाक्कायमानसा' जाता इत्यर्थः ।

**काचिदित्यस्याभासे** । **महता प्रबन्धेनेति** 'इति गोप्यो ही'त्यादिश्लोकद्वयार्थ-
१०-४४-११ कथनेन महता प्रबन्धेन साध्यत्वं श्रीशुकेन निरूपितमित्यर्थः । **व्याख्याने** । **अग्र** इति । मृगयुरित्यत्र । **गुणपक्षेऽयुक्तो हीत्यादिनोक्तं** साध्यत्वं वक्ष्यतीत्यर्थः ।

**काचिन्मधुकरमित्यत्र** । गोस्वामिश्रीपुरुषोत्तमानां प्रकाशे **भगवत** इति पुनरपि भ्रमररूपदूतप्रस्थापनात् स्वस्मिन्भगवत आसक्तिरिति भावः । **ध्यातरसेति** पूर्वं हि सा कृष्णसङ्गमं ध्यायन्तीत्यनुपदोक्तः ध्यातरस इत्यर्थः । **तथेति** गोपनेन यदि न वदेदिति । **स रस** इति एषा रसगोपनं न जानातीति स ध्यातो रसस्तां स्वाधीनक्रियावतीं रसाधीनक्रियावतीं कुर्यात् । **तथेति** ध्यातरसगोपनमित्यर्थः । **अन्यापदेशस्येति** यथा कश्चित् सिंहापदेशेन कस्याचित् क्रूरतां कथयति, अयं सिंहसदृशः क्रूर इति । **एतन्न्याय** इति विनापि दर्शनन्याय इत्यर्थः । **संस्कारेति** सर्वेषां संस्कारस्योद्बोधकत्वादेतासामपि संस्कारोद्बोधनेन । **तदुपयोगाद्** दोषारोपोपयोगात् । **पक्षान्तरेति** एतदर्थं भगवान् भ्रमरमपि प्रेषितवान् इति पक्षान्तरकल्पनमयुक्तमित्यत आह **अन्येत्यादिना** । तथा च साधारणे भ्रमरे दूतत्वाभावे मधुपेति पदानि उद्धवे कल्पयितुं शक्यानीति भगवान् वा गोपिकानां स्वरूपमुद्धवाय प्रदर्शयितुं भ्रमरमपि प्रेषितवानिति युक्तमुक्तम् । तेन पक्षान्तरकल्पनेपि दोषाभाव इति भावः । **द्वितीयपक्ष** इति केवलभ्रमरपक्षाद्भगवत्प्रेषितद्वितीयभ्रमरपक्षो ज्यायानिति । अतः पक्षान्तरकल्पना युक्तैवेत्यर्थः । **दोषेति** सुबोधिन्युक्तदोषसम्भावना मधुपादिपदोक्ता उद्धवेपि भवतीति ज्ञेयम् । **उक्तन्याय** इति केवलभ्रमरदर्शनन्याये । **दूते** इति उद्धवे । **मूलोक्तेति** प्रियप्रस्थापितं दूतमित्यत्र भगवत्प्रेषितभ्रमरपक्षे मूलोक्ता दूतोक्तिविरुद्ध्येतेत्यर्थः । **तथेति** द्वितीय एव पक्षो ज्यायानित्यर्थः । **तथाभाव** इति मधुपादिपदोक्तो दोषभाव उद्धवे युक्त इत्यर्थः । **कुत** इति भ्रमरदर्शने तु भ्रमरे दूतोक्तो दोषारोपभावः कुत इत्यर्थः । **भगवत्सम्बन्धेति** युगलगीते स्वतन्त्रलेखे 'दिव्यगन्धतुलसीमधुमत्तै'रित्यत्र भगवत्सम्बन्धप्राप्तमधु अस्मासु अस्ति तद्भक्षणार्थमित्यर्थः । **आकारसङ्गोपनेनेति** यथा कूटरसायनी वेशान्तरकल्पनेन कस्यचिच्चक्षुर्वञ्चयित्वा धनं हरति तथैवेयं गोपिकाप्येनं भ्रमरं मधुहारकं ज्ञास्यतीति । **तज्ज्ञानेति** अयं मधुप इति ज्ञान इत्यर्थः । **क्लेश** इति स्वामिनीनां क्लेशो भवत्येवेति स मा भवतु इति बोधायेत्यर्थः । (पूर्वं[1] भगवता मधुपो बोधितस्त्वां ता यदि पृच्छेयुस्त्वं किंनामेति तदाहं मधुकरनामा इति वक्तव्यं, न तु मधुप इति, तत्सर्वं ज्ञानबलेन शुको बुद्ध्वा अन्येषां बोधनायैव मधुकरपदमुक्तवानिति ।) **तथेतीति** विपरीतमधुकरनामेति भावः । **अन्यापदेशप्रस्तावपक्ष** इति लौकिकभ्रमरपक्ष इत्यर्थः । **सार्थकत्वरूपमिति** पुष्पस्य सार्थकत्वरूपं मधु प्रयच्छतीत्यर्थः । **एवमिति** एवमेतस्या भगवत्सम्बन्धप्राप्तं मधु गृह्णन्नपि तप्ततैलपतितजलबिन्दुसदृशेन ज्ञानोपदेशेन मानादि पूर्वतरं नाशयन्नपीत्यर्थः । **तथेतीति** अतो मधुपत्वे मधुकरत्वं युक्तमेवेति भावः । **अन्यापदेशेत्यारभ्य भाव**-इत्यन्तस्यायं भावः । तथा च नन्वेवं यदाऽयं विपरीतनामा तदा श्रीशुकेन मधुपे मधुकरत्वं किमर्थमुच्यते इत्याशङ्कापरिहाराय दृष्टान्तार्थं साधारणमधुपेपि मधुकरगुणमाह ।

---

१. इदं कुत्रचिदधिकम् ।

तथा च । यथा दृष्टान्ते मधुपः पुष्पस्य रसं संगृह्णन्नपि अहो पुष्पाणि सर्वोत्कृष्टानि यतः सारग्राही मधुपः सेवते इति स्वसम्बन्धेन सार्थत्वरूपं मधु प्रयच्छति, तथा दार्ष्टान्ते गन्धकीर्तेः समानत्वात् 'आसामहो चरणरेणुजुषामहं स्या'मित्यादिनोत्कर्षप्रतिपादनेन व्रजरत्नानां पादपद्मानां सार्थकरूपमधूद्धवः प्रयच्छति अतो मधुकरत्वं ज्ञेयम् । एतत्सर्वं मा स्पृशाङ्घ्रिमिति पदव्याख्याने स्पष्टं भविष्यतीति । **सुबोधिन्यां पुष्पाणी**ति । स्वामिनीपादपद्मानि तदभिमानिन्यः पादपद्माभिमानिन्यः स्वामिन्यो देवता इत्यर्थः ।

**मधुप कितवेत्यत्र** । टिप्पण्यामाभासे । **पु० टि० प्र० धर्मस्ये**ति । ननु 'मधुप कितवे'ति श्लोकवक्त्र्यास्तामसतामसत्वे को हेतुरित्याशङ्क्याह यथा भग-
१०-४४-१२ वद्गीतायां 'तमः सत्त्वं रजस्तथे'ति तमसः सत्त्वरजसोर्भावान्तरविलायकत्वमुक्तम्, तथात्रापि एतस्या अपि तामसतामसीत्वेपि तमसः सत्त्वरजसोर्भावान्तरविलायकत्वेनात्युग्रत्वाद्दोषारोपनिरूपणेन स्वामिनीधर्मस्य तामसत्वेनोपचारे बीजं हेतुरिति योज्यम् । **मधुप कितवेत्यस्याभासे** टिप्पण्याम् । **अविशेषेपी**ति यथा संयोगे गुणगानरूपो रसात्मकः शान्तभाव उत्पद्यते, तथा विप्रयोगे दोषारोपलक्षणोत्युग्ररसात्मकभाव उत्पद्यते । अतोऽविशेषेपि उग्रत्वात्तामसत्वेनोपचर्यते इति योज्यम् । **तत्त्वमि**ति । स्वामिनीष्वपि सत्त्वादीनां परस्परोपमर्दकत्वमित्यर्थः । **तस्ये**ति । रसात्मकप्रभुस्वरूपस्येत्यर्थः । **स** इति । दोषारोप इत्यर्थः । **पु० प्र० धारावाहिके**ति । एतस्या दोषारोपनिरूपणेपि धारावाहिकस्मरणवृत्ते रसात्मकप्रभ्वनुभवाप्रतिबन्धकत्वादित्यर्थः । **टि० नानुभूयमानस्ये**ति । अनुभूयमाने भगवति आरोपो दोषस्यायमिति न वक्तुं शक्यमित्यर्थः । **पु० प्र० स्मरणा**दिति । अनुभूयमानस्वरूपस्मरणादेव दोषारोपोस्त्वित्यर्थः । **तादृश** इति भगवति दोषारोपधर्मः सर्वेषां युक्त इत्येव वाच्यमित्यर्थः । **ज्ञानवते**ति तथा च ज्ञानवतः स्वामिन्यात्मनो भगवति दोषारोपस्फूर्तिर्विप्रयोगे आवश्यकी, अतः तासां तादृशो रसात्मको भगवद्धर्मो युक्तो न सर्वेषामिति भावः । **पु० प्र० आत्मस्फूर्तिकाले** इति । भगवति दोषात्मस्फूर्तिकाले । **पु० टि० प्र० काचिदि**ति काचिन्मधुकरेतिपद्योक्तसुबोधिन्यां पूर्वं हि सा कृष्णसङ्गमं ध्यायन्तीत्यादिनोक्तं स्वामिनीस्वरूपमित्यर्थः । **टि० हृद्यागमनेने**ति । रसात्मकप्रभुधर्मस्य हृद्यागमनेन तामसतामसभावोदयादित्यर्थः । **उपचारोय**मिति । न तु सहज इत्युपचारोयमित्यरुच्या पक्षान्तरमाहुरित्यर्थः । **तद्भावयुक्ता** वेति तामसभावयुक्ता वेत्यर्थः । सुबोधिन्यां **मधुपेत्यस्याभासे यथा अज्ञातपीडे**ति कयाचिन्नायिकया दूतं प्रति वाक्यमुक्तम् । यथा अज्ञातपीडागमा **अधमस्येती**ति । यथाऽधमस्य तव स्वामिनो मम पीडाया आगमा अज्ञाताः सन्ति, तथा अधमस्येति सम्बन्धषष्ठ्युक्त्या तत्सम्बन्धित्वमपि तादृगित्युभयोर्दूषणम्, तथात्रापि मधुपेति दूतदूषणं कितवेति भगवद्दूषणमेवमुभयदूषणमित्यर्थः । **मधुपेत्यत्र मतान्तरेत्यारभ्य वा विरोध** इत्यन्तस्यार्थष्टिप्पण्यामत्रायमित्यारभ्य इत्यर्थ

इत्यन्तो विस्तरत उक्तः । तत्रापि **मतान्तरभाषेयमिति, कामशास्त्रानुरोधिनी निरूपितेति** एतस्यार्थः प्रकारद्वयेनोक्तः । तत्र प्रथमप्रकारो ज्ञानमार्गाद् भक्तिमार्गो मतान्तरमिति स च 'शुद्धपुष्टिमार्गीयभक्ताना'मित्यारभ्य 'ज्ञाप्यते' इत्यन्त उक्तस्तन्मध्ये ज्ञानोपदेशस्य कामशास्त्रानुरोधित्वं रसरीत्या भक्तिमार्गानुसारेण भगवति निरुपधिस्नेहभावभङ्गलक्षणं स तु **कथने तूपपत्ति**रित्यादिनोक्त इति ज्ञातव्यः । द्वितीयप्रकारो मर्यादामार्गात्पुष्टिमार्गो मतान्तरमिति स च **समाधिभाषाया**मित्यादिनोक्तः, समाधिभाषात्वं तु व्यासपादानुभवेनैव । स तु प्रथमस्कन्धे ' अनर्थोपशमं साक्षाद्भक्तियोगमधोक्षजे ' इति वाक्ये द्विविधो भक्तिमार्गो दृष्टः, अतो न समाधिभाषायां भक्तिमार्गे वा विरोध इति । कामशास्त्रानुरोधित्वं तु **एतादृशेषु** इत्यादिना उक्तमिति ज्ञातव्यमिति । पु० टि० प्र० **केचिदिति** । 'केचिद्वदन्ति मुनयो विस्मृत्य प्रागुदाहृत'मित्यादिकथनरूपमतान्तरभाषात्वमस्या भ्रमरकथाया भविष्यति न वेत्याकाङ्क्षायां **तथात्वमिति** । यादृशं मतान्तरभाषात्वं तादृशत्व**मत्रायमाशय** इत्यादिना टिप्पण्यामुपपादयन्तीत्यर्थः । **पु० प्र० अन्यभाषाद्वयस्येति** मतान्तरभाषाया लौकिकभाषायाश्च निबन्धादिषु कथनदर्शनादित्यर्थः । **अस्या** इति ज्ञानोपदेशार्थकथाया इत्यर्थः । **एतदिति** ज्ञानोपदेश**कथनदर्शनादि**त्यर्थः । **इयद् बोधन**मिति । टिप्पण्यां कथने तूपपत्तिरियमेवेति इयद् बोधनमित्यर्थः । **वक्ष्यमाणेति** टिप्पण्यां यत्सङ्गमेत्यारभ्यात्मत्वेन बोधनमित्यन्ता वक्ष्यमाणेत्यर्थः । पु० प्र० **तस्याश्च तात्पर्यात्प्रामाण्यमिति** । ज्ञानोपदेशकथाया निरुपधिस्नेहस्य भञ्जकत्वाभावरूपतात्पर्यात्प्रामाण्यमित्यर्थः । **प्रकारद्वयेनेति** । टिप्पण्युक्तेनाग्रे भगवतीत्यादिना प्रकारद्वयेनेत्यर्थः । टिप्पण्यां **सिध्यतीति** प्रिये सिध्यतीत्यर्थः । **न तु स्वरूपत** इति । प्रिये स्वरूपतः सहजोत्तमत्वं प्रियत्वं च न सिद्ध्यतीत्यर्थः । **सर्वेषामिति** गोपिकाव्यतिरिक्तानां सर्वेषामित्यर्थः । **भातीति** ज्ञानोपदेशे सति प्रिये निर्दोषत्वं भातीत्यर्थः । **इदमिति** दोषारोपादिकं रसमर्यादारीत्योच्यत इत्यर्थः । **सिध्यतीति** केवलदोषारोपे सति रसाभाव एव सिध्यतीत्यर्थः । **आधिक्यमिति** ज्ञानोपदेशे सत्यपि रसात्मिका तप्ततैलपतितजलबिन्दुसदृशी भक्तिर्जाता न तु स्वास्थ्यमतो ज्ञानाद्भक्तेराधिक्यं ज्ञाप्यत इत्यर्थः । **पु० प्र० पूर्वोक्तमिति** । टि० अत्रायमाशय इत्यादिना ज्ञानाद्भक्तेर्मतान्तरादिकं यदुक्तं **तदसङ्गत**मित्यर्थः । **तदप्रस्तावादिति** अग्रे वक्ष्यमाणा या ज्ञानोपदेशकथा तस्या अत्राप्रस्तावादित्यर्थः । **अस्तु** वेति अग्रे ज्ञानोपदेशकथाया वक्ष्यमाणत्वाद् अस्तु वा सङ्गतत्वमित्यर्थः । **अस्याः कथाया** इति भ्रमरकथाया लौकिकभाषा अग्रे मतान्तरभाषेति हेतुद्वयमस्तीत्यर्थः । **नोभयविरोध** इति समाधिभाषायां भक्तिमार्गे वा न विरोध इत्येवमुक्तं स्यादिति योज्यम् । **न त्वेवमिति** पोषकत्वेन पूर्वोक्तप्रकारकं त्वदुक्तलौकिकभाषात्वं मतान्तरभाषात्वं च समाधिभाषायां भक्तिमार्गे वा न विरोधकरामित्यर्थः । **टि० समाधिभाषात्वमिति** समाधिभाषात्वं विरुद्धमिति योज्यम् ।

**तद्विरुद्धार्थकत्वं** चेति । समाधिभाषायां तु माहात्म्यज्ञानपूर्वकस्नेहनिरूपणं कृतमत्र तु प्रत्युत दोषारोपनिरूपणमिति विरुद्धार्थकत्वं विरुद्धं चेत्यर्थः । **तथेति** विहित इत्यादिनोक्तं तृतीयविरोधमित्यर्थः । एवमाशङ्क्य **स बोधयन्** इत्यारभ्य इत्यर्थः इत्यन्तेन विरोधःपरिहृतः तन्मध्ये **तत्रेत्यारभ्य हेतुद्वयमित्यन्तेन पु० प्र०** तथा चेत्यादि पूर्वोक्तं परिहृतं ज्ञेयम् । **पु० प्र० । लौकिकभाषात्वाङ्गीकारेपीति** । भ्रमरकथाया लौकिकभाषात्वाङ्गीकारेपि । **विरोधस्येति** । माहात्म्यज्ञानस्य स्नेहस्यचाभावेन **विरोधस्यापरिहारेण** असङ्गतत्वमित्यग्रिमेण योज्यम् । माहात्म्यज्ञानस्य प्रकृतानुपयोगाच्चासङ्गतत्वमित्यर्थः । **तादृशस्य बोधने इति** । भ्रमरकथाया लौकिकभाषामतान्तरभाषेतिहेतुद्वयस्योच्यमानस्य बोधने टिप्पण्युक्तं मतान्तरभाषात्वं कामशास्त्रानुरोधित्वं च हेतुद्वयमिति योजनीयम् । न तु त्वदुक्तरीत्या पोषकत्वमिति भावः । **न तु पूर्वाशङ्कोक्तेरिति** । माहात्म्यज्ञानपूर्वकः स्नेहः समाधिभाषेति पूर्वाशङ्कानिवृत्त्यर्थं टिप्पण्युक्तहेतुद्वयं नेत्यर्थः । **टिप्पण्याम् अत्रेदमिति** । तथा च विरोधत्रयमस्यां कथायां, समाधिभाषात्वं तद्विरुद्धार्थकत्वं च विहितस्नेहाभावेन भक्तिमार्गविरोधश्चेति तत्परिहारोत्रेदमित्यारभ्येत्यर्थ इत्यन्तेन कृतस्तत्र तद्विरुद्धार्थकत्वं माहात्म्यज्ञानराहित्यं यदुक्तं तन्मर्यादामार्गे माहात्म्यज्ञानस्यावश्यकत्वं न तु पुष्टाविति, अतो नास्याः कथायाः समाधिभाषायां विरोध इति शङ्कनीयं, तदेवोक्तं **मर्यादे**त्यादिना । एवमेकं विरोधं परिहृत्य द्वितीयं परिहरति । ननु कथमस्याः कथायाः पुष्टिमार्गीयसमाधिभाषात्वमित्याशङ्कापरिहारस्तु व्यासपादैः समाधौ यः साक्षात्फलरूपो भक्तियोगो दृष्टस्तं व्रजसीमन्तिनीपूक्तवानिति तेनेयं पुष्टिमार्गीयसमाधिभाषेति न कोपि विरोधः । एतत्सर्वं **समाधा**वित्यादिनोक्तम् । **तथेति** तादृशेषु भक्तेषु ज्ञानोक्तिरपि पुष्टिमार्गीयसमाधिभाषारूपेत्यर्थः । तृतीयविरोधो विहितस्नेहाभावेन भक्तिमार्गविरोधश्चेति तत्परिहारस्तु सुबोधिन्यामियं समाधिभाषा कामशास्त्रानुरोधिनीत्युक्तं तेन कर्तव्यः, तदेवोक्तं टिप्पण्याम् 'कामशास्त्रानुसारेणैव पूर्वं पञ्चाध्याय्यां स्वरूपानन्दं दत्तवानित्यधुनापि विप्रयोगावस्थायामपि तथैवोच्यत इति न कोपि विरोध' इत्यन्तम् ।

**मधुपेत्यत्र** । श्रीपुरुषोत्तमानां प्रकाशे **मधुपेति** । मधुपशब्द इत्यर्थः । **दूषकमिति** भ्रमरदूषकमित्यर्थः । 'निःशेषच्युते'त्यादिवदिति । विद्यमानदोषं प्रति केनचिदुक्तं 'निःशेषच्युते'त्यादि इति तद्युक्तमेवेत्यर्थः । **पु० प्र० । तथोक्तिरिति** । दोषारोपोक्तिरित्यर्थः । **सुबोधिन्यामनुकरणमिति** जात्यनुकरणमित्यर्थः । **साधारणाविगीतधर्माणामेवेति** । ब्राह्मणादिषु साधारणाविगीतानिन्दितधर्माणामेवाऽनुकरणमित्यर्थः । **न तु सर्वेषामिति** सर्वेषां विगीतधर्माणामनुकरणं नेत्यर्थः । तथा च यथा ब्राह्मणजाति-

१. निःशेषच्युतचन्दनं स्तनतटं निर्मृष्टरागोधरो नेत्रे दूरमनञ्जने पुलकिता तन्वी तवेयं तनुः । मिथ्यावादिनि दूति बान्धवजनस्याज्ञातपीडागमे वापीं स्नातुमितो गतासि न पुनस्तस्याधमस्यान्तिकम् । अम० शतकम् ।

रुत्तमा तेनोत्तमजातिमत्त्वात्सर्वे ब्राह्मणा उत्तमा एव, तन्मध्ये एकस्मिन् निन्दिते जाते सर्वेपि न निन्दिता भवेयुः, तथा यादवेषु पानरतेष्वपि भगवति भक्तेषु च न दूषणमित्यर्थः। तर्हि गोपिका दोषारोपोक्तिं किमर्थं करोतीत्याशङ्कायामाहुः साधारण्येतीत्यादिना। **संभावनेति**। गोपिकानां दोषारोपसम्भावनामात्रमेवेत्यर्थः। **पूर्वं तदभावादिति**। भगवति भक्तेषु च पूर्वं दोषाभावादत्यन्तखेद उदेतीति भावः। **न विशिष्य श्रुत** इति। भगवति भक्तेषु च न दोषविशेषः श्रुत इत्यर्थः। **सोदेतीति** दोषारोपसम्भावनोदेतीत्यर्थः। अतो नायं वास्तवोर्थः। वास्तवोऽर्थस्तु कालपक्ष एव, तदेवोक्तं **सु० वस्तुतस्त्वित्यादिना**। श्रीपुरुषोत्तमानां प्रकाशे **पूर्वोक्तादिति** 'यद्यपि भ्रमर' इत्यादिसुबोधिन्यां पूर्वोक्तादित्यर्थः। **न व्यासौ** इति अस्मच्चरणौ भगवति सर्वाङ्गेषूपयोगाय न व्यासौ भवेतामित्यर्थः। **सु० फलस्याभावादिति** भगवत्प्राप्तिरूपफलस्याभावादित्यर्थः। **पु० प्र० साधनेति** सन्माननार्थमङ्घ्रिस्पर्शादिसाधनवैयर्थ्यसूचनस्येत्यर्थः। **भगवदेकतानेति** भगवान्यथा कितवो वञ्चकस्तथा त्वमपि, अतः सुबोधिन्यामिममर्थमभिप्रेत्यैव उद्धवस्यापि सन्माननार्थं निषेधो युक्त इति भावः। **मालाकुङ्कुमश्मश्रुभिर्न** इत्यस्यार्थकथने सुबोधिन्यां आघ्राणं मकरन्दपानं वेति, ननु मालायां यथा तासां कुङ्कुमसम्बन्धस्तथा भगवदङ्गरागस्यापि सम्बन्धस्तत्र तासां कुङ्कुमेन श्मश्रूणां पीतत्वे किं मानमित्याशङ्क्याहुः **आघ्राणं मकरन्दपानं** वेति। उद्धवपक्षे आघ्राणं भ्रमरपक्षे आघ्राणं मकरन्दपानं चेति द्वयमपि। **बहिः प्रदेश एवेति**। मालायामुपरिभागे एव। भगवदङ्गरागस्तु मालायास्तलभागे ह्येव, अतो न भगवदङ्गरागेण श्मश्रूणां पीतत्वमिति भावः। **श्रमश्चेति** कुङ्कुमस्य आर्द्रताभावे मालासम्बन्धाभावात् तस्याः सुरतश्रमजलेन कुङ्कुमे आर्द्रता, तेन श्रमश्च तस्याः सूच्यते इत्यर्थः। नन्वित्याशङ्कायाः समाधानं तु अग्रे **सपत्नीभिर्हीत्यारभ्य प्रसादग्रहणमित्यन्तेन** कृतमिति ज्ञेयम्। **तथा मन्यत** इति तस्याः कुङ्कुमस्वीकारं मन्यत इत्यर्थः। **ऋतुद्वयस्यैवेति** ग्रीष्मवर्षानिषेध इत्यर्थः। **आद्येति** वसन्तसङ्ग्रहार्थमित्यर्थः। कालपक्षे **वहतु** मधुपतिरित्यस्यार्थकथने इत्यर्थः। तत्रापि **वसन्ते भगवत्कृतकालोत्कर्ष** इति। एतदर्थो गोस्वामिश्रीवल्लभानां **लेखे कालसापेक्षेति**। कालस्य यज्ञादिना भगवत्कृतसापेक्ष उत्कर्ष इत्यर्थ उक्तः। अग्रे तदेवोक्तं सु० **वसन्ते हीत्यादिना**। **व० ले०** कर्मणां कालसापेक्षत्वात् परस्परं सापेक्षतोक्ता ज्ञेया। **तापाधिक्येनेति** ग्रीष्मे वर्षायां च तापाधिक्यादित्यर्थः। **सु० शरदि तु सर्वथेति** सुबोधिन्यां रासारम्भे नित्यलीलास्थत्वादीनां प्राकट्यकरणाद् भगवता कालस्योत्कर्षः सर्वथा कृत इति तदेवोक्तमाचार्यचरणैः 'भगवानपि ता रात्री'रित्यस्य सुबोधिन्यां ऋतुमपि शरदमेव कृत्वेत्यादिना। ननु मूले अङ्घ्रिमित्यत्र मध्ये वसन्तस्य प्रसादवाहकत्वं वक्तव्यं, तत्र मधुपतिरिति कथने कोभिप्राय इत्याशङ्कापरिहारार्थं पु० प्र० अस्याङ्घ्रिं वहत्वित्युक्तम्। प्रथमार्थे द्वितीया ज्ञेया तथा च अस्य संवत्सरस्य वसन्तरूपोङ्घ्रिः स मानिनीनां प्रसादं वहत्वित्यर्थः। **पूर्वेणैवेति सु० आद्यसङ्ग्रहार्थमिति** पूर्वं यदुक्तम्,

तत् संसिद्धमित्येवं पूर्वेणैव सम्बन्धो ज्ञेयः । वसन्तस्य संवत्सराङ्गित्वं कथमित्याशङ्कापरिहारस्तु **किमिहेत्यत्र** सु० कालपक्षेपि ऋतुभिःषडङ्गिर्भवति संवत्सर इत्युक्तं तेन कर्तव्य इत्यर्थः । यद्वा । मधुश्चासौ पतिश्च मधुपतिर्वसन्तः तथा सति सम्पूर्णसंवत्सरस्य तासां प्रसादवाहकत्वं नाभिमतमिति भाति, तन्मानिनीनां प्रसादं वहत्वित्यर्थोपि लक्ष्यते । पु० प्र० **एवं योग्यतेति** । तासां प्रसादवहने वसन्तस्य एवं योग्यतामापाद्यतइत्यर्थः । **स्वानुपयोगायेति** वसन्तस्य स्वानुपयोगायेत्यर्थः । तेन वस्तुतस्तु संयोगे सर्वेपि ऋतवः सुखदा इति भावः । सु० प्रसादवहनमाह **यत इत्यादिना** । **तत्सम्बन्धेनेति** पुरस्त्रीसम्बन्धेन भगवता विहारः कृतस्तेन अहो वसन्तो धन्यो यस्मिन्भगवान्विहरतीति **महत्त्वमापद्यत** इत्यर्थः । **तस्येति** कालस्येत्यर्थः । सुबोधिन्यां **सपत्नीभिरिति** वसन्तसमये रमणेषु कुब्जादिभिः प्रसादतया भगवते कुङ्कुमं दत्तमित्यर्थः । **वस्तुस्वाभाव्यादिति** यथेष्टमधुपानादित्यर्थः । **अयमितीति** वसन्त इत्यर्थः । तथा च सेवायां भगवत्प्रसादितकुङ्कुमादिभिर्वसन्तस्य पूजा प्रसिद्धेति गृह्णातीत्युक्तम् । ननु वसन्तरूपकालस्य कुङ्कुमश्मश्रुत्वं कथमित्याकाङ्क्षायाम् पु० प्र० कुङ्कुमपरागधूसरो वायुरेव श्मश्रुस्थानीय इत्युक्तम् । पु० प्र० **वायुप्रस्तावनेति** वायुप्रस्तावना तु सुबोधिन्यामनेन तयैवं ज्ञातमित्यादिनाऽनुपदोक्ता ज्ञेया । सुबोधिन्यां **अथापीति** ननु उद्धवभ्रमरपक्षे भगवान् भक्तवश्यतया सर्वं करोत्यतो न कोपि निषेधति, अत एवाहमपि भवतीनां नयनार्थमागतोस्मि तस्माद्युष्माभिरपि अनुमोदनेन हितोपदेश एव कर्तव्यो न तु निषेधोपीत्यत्राहुः **अथापीतरसम्बन्धात्स** एव तत्प्रसादं वहतु इति । अथापीत्यस्यार्थो श्रीव० लेखे यथा यादवा न जानन्तीति तथेति । तथा वहतु नामैको हितोपदेशः । द्वितीयं हितोपदेशमाहुः सुबोधिन्यां न तु **वयमिति** । एतदर्थो व० ले० **अस्मन्नयनेपीति** तत्रागतास्वस्मास्वपि प्रथमतः प्रसादत्वे कुङ्कुमं चेद्दास्यति तदा न वयं वहाम इति त्वयापि हितोपदेशः कर्तव्य इति भावः । सु० **धर्मरूपेति** वसन्तकृतश्चोत्सवो भगवदीयानां सेवाधर्मरूप इत्यर्थः । ननु यादवसभायां कथं विडम्ब्य एवानुकार्य इत्याशङ्क्याह **ते हि लौकिकप्रधाना** इति । **अनुकरणेति** भविष्योत्तरोक्तपिशाचक्रीडामात्रेण धर्मं करिष्यन्तीति भावः । **भगवदीयकृतादिति** सेवारूपधर्मोऽस्मदादिभगवदीयकृतादित्यर्थः । ननु वसन्तकालकृतो लौकिकधर्मो भगवदीयकृताद्धीन इति वाऽप्रमाणमित्यत्र किं मानमित्याकाङ्क्षायां मानमाह **यस्येत्यादिना** । **कलिरूप** इति भविष्योत्तरे कलावेव तत्प्रवृत्तिकथनात् कलेर्दूतत्वं पिशाचक्रीडाकथनाच्छ्यामत्वं चेत्यर्थः । **न हि धर्मे उत्कृष्टे तदाधारः श्यामो भवतीति** । वसन्तधर्मे उत्कृष्टे तदाधारः कलिः श्यामो नहि भवतीत्यतो वसन्तो नादरणीय इति भावः । पु० प्र० **सुखस्य दत्तत्वादिति** व्रजसीमान्तिनीषु सुखस्य दत्तत्वात् । **अन्येष्वपीति** अन्येषां साधारणानामपि वसन्तस्य सुखदत्वादित्यर्थः । **अयमिति** पिशाचक्रीडारूपो हेतुरिति ।

**सकृदधरसुधामित्यत्र । सु० बहुवारमिति** । सकृदपि प्रतिदिनमित्यर्थः । **तच्चापीति** सकृदपीत्यर्थः । **सुखं भवेदिति** । सुखरूपं भवेदित्यर्थः ।
१०-४४-१३ **किन्तु सकृदेवेति** एवकारो बहुवारं निषेधति । **अन्यथेति** पदस्यार्थो **वल्लभानां लेखे अन्यथेति** पानाभावे इत्यर्थ उक्तः । **प्राप्ता** इति विविधरसभावोदये प्राप्ता इत्यर्थः । **प्रत्यासत्तिरिति** । ज्ञानमस्माकं न भवतीत्यर्थः । तथा च । पूर्वमोहेन **विवेकाद्यभावाज् ज्ञानभक्ती निवारिते** इत्युक्तम् । तत्र न हि भगवदीयान् भगवांस्त्यजतीति भक्तिर्निवारिता । **प्रत्यासत्तिश्चे**त्यादिना ज्ञानं निवारयति । तत्र ज्ञानमधुना कथं नेत्याशङ्कायां हेतुमाह **मोहेनेत्यादिना** । एवं सति मोहज्ञानयोः सहानवस्थानात् तत्र दृष्टिपदं सर्वेन्द्रियाणामुपलक्षणं तेनास्मदिन्द्रियाणि सर्वाण्यपि भगवति स्थितानि, अत एव पूर्वाध्याये भगवताप्युक्तं 'ता मन्मनस्का' इत्यादिना, अतः प्रत्यासत्तिश्च न भवतीति सुष्टूक्तम् । **पु० प्रकाशे** एतदर्थं लक्ष्मीकृत्योक्तं **ज्ञानलक्षणा से**त्यर्थः । ननु यथा कमलादीनां भ्रमरेण रसपाने कृतेपि पुना रससम्पत्तिः स्यात्तथा भवतीष्वपि पुना रससम्पत्तियोग्यतेति समाधाने सिद्धे कथमाक्रोश इत्याशङ्क्याह **पाययित्वेति** । तथा च यः पिबति स जातिभ्रष्टो भवति, न तु पाता । **तदेवोक्तं उच्छिष्टतयेत्यादिना**, अतो युक्त उपालम्भ आक्रोशश्चेति भावः । **ननु भगवानित्यारभ्य** तत्र मोहे हेतुद्वयमुद्भाव्य परिहरति । तत्र तासां त्यागाद् भगवति न स्वार्थः, तासां संसारासक्तिलक्षणदोषनिवृत्तावपि भगवत्सम्बन्धलक्षणगुणाभावात्तासामर्थे मोहसम्पादनमयुक्तमित्याशङ्का, तामेव दृढयति **दोष** इत्यादिना । **दोषाभावे** इति । दोषाभावे अवश्यमेव दुःखनिवृत्तिः । **तदभावादिति** दुःखनिवृत्त्यभावाद् दोषः स्थित एवेयर्थः ।

**सकृदित्यत्र । पु० प्र० पूर्वोक्त** इति । **काचिन्मधुकरमित्यस्याभासे** ततोप्यधिकोऽचिकित्स्यस्तृतीयो दोषो ज्ञेयः । **तात्पर्यज्ञाने** इत्यग्रे 'यत्त्व'मित्यस्याभासोक्तवियोगस्य चतुर्विधपुरुषार्थसाधकत्वमिति तात्पर्यज्ञान इत्यर्थः । **सु० स्मरणेनेति** । **मध्यावेश्येत्यत्र सु०** दशापि वृत्तयो भ्रमरवाक्येषु निरूपिताः । तत्त्यागपूर्वकस्मरणेन गोपिकानां दोषः परिहर्तव्य इत्यर्थः । **पु० प्र० । मोहत्वाज्ञापनरूप** इति । अग्रे स्मरणेन दोषः परिहर्तव्यो, न तु मोहः, तदर्थमेव **सु० सत्यमित्यारभ्य दोष** इत्यन्तेन ग्रन्थेन मोहत्वाज्ञापनरूप उद्योगः **कृत** इत्यर्थः । **सु० अपि** चेत्यारभ्य **निर्विवाद**मित्यन्तो ग्रन्थः **पद्मेति**पदस्य सूचितार्थः प्रतिभाति तत्रैवं योजना कर्तव्या । 'तस्मान्नन्दात्मजोऽयं ते नारायणसमो गुणै'रिति गर्गवाक्यस्य सुबोधिन्यां यज्ञादिषण्णां नारायणानां ये गुणास्ते श्रीकृष्णे चोक्ताः, तन्मध्ये आदित्योपि गणितः । **रूपान्तरेषु सौम्येष्वप्यादित्योऽत्यन्तंकठिन** इति । तस्य रूपान्तराणि जलशायिनारायणादिस्वरूपाणि । सौम्येष्वप्यादित्यस्तापात्मकत्वेनात्यन्तकठिन इति । **तत्र कथं सेवां कृतवतीति** तादृशस्यादित्यस्य सेवां

लक्ष्मीः कथं कृतवतीति प्रश्नः । **उपालम्भो वेति** । तादृशस्य सेवां लक्ष्मीः किमर्थं कृतवतीति उपालम्भो वेत्यर्थः । ननु लक्ष्मीः आदित्यस्य सेवां कृतवतीत्यत्र किं मानमित्याशङ्क्य मानमाहुः 'पुनश्च पद्मा सम्भूते'ति वाक्यात् सा तु पद्मा, स तु पद्मबन्धुरिति वाक्यात् पूर्वमपि परस्परसम्बन्धो लक्ष्यते इति मानम् । तादृश एवायमवतार इति । 'नारायणसमो गुणै'रिति वाक्यात्तद्गुणाः श्रीकृष्णेपि सन्तीति भावः । **पद्मेति** 'पुनश्च पद्मा सम्भूते'ति प्रमाणं चोक्तम् । अथवा सा हि पदि चरणे मातीति, पूर्वं प्रमाणं चोक्तम् । **सेवा लक्ष्यत** इति । 'श्रयत इन्दिरा' इति 'श्रीनिकेतन'मिति 'श्रीर्वधूः साकमास्ते' इत्यादिवाक्येषु वर्तमानप्रयोगेण इदानीमपि **सेवा लक्ष्यत** इति । **भगवांस्तूदासीन** इति । 'उदासीना वयं शश्वत् न स्त्र्यपत्यार्थकामुकाः । आत्मलाभेन पूर्णार्था गेहयोर्ज्योतिरक्रिया' इति श्रीरुक्मिणीं प्रति भगवद्वाक्याद् भगवान् उदासीन इति निर्विवादमित्यर्थः ।

**किमिहेत्यत्र** । **उद्धवस्याग्रे वाक्यमिति** । वाक्यं ज्ञानोपदेशलक्षणम् । **अनेन निषिध्यते** इति 'किमिह बहु षडङ्घ्रे गायसी'ति गाननिषेधेन निषिध्यत
१०-४४-१४ इत्यर्थः । कालपक्षे निषेधमाह **कालगतानि सर्वाण्येव प्रमाणानि चेति** । मधुप कितवेत्यत्र कालपक्षे वसन्ते हि यज्ञा अध्ययः संस्काराश्चेति पूर्वोक्तानि वसन्तकालगतानि सर्वाण्येव, वसन्तेन त्वर्तुना हविषा दीक्षयामीत्यादिश्रुत्युक्तप्रमाणवाक्यान्यप्यनेन निषिध्यन्ते इत्यर्थः । ननु प्रमाणवाक्यनिषेधे कोपपत्तिरित्याशङ्क्य अत्रोपपत्तिमाह **न हि तैः प्रमाणैर्भगवद्गता धर्मा दोषाः परिहर्तुं गुणा वा वक्तुं शक्या इति** । प्रभोर्विरुद्धधर्माधारत्वात् कितवादिदोषा अपि भगवद्गता धर्मा एव, अतस्तैः प्रमाणैर्भगवति गुणाधायकवसन्तकालगतप्रमाणवाक्यैर्न हि दोषाः परिहर्तुं शक्याः, गुणा वा वक्तुं शक्याः, अतो युक्त एव कालपक्षेपि गाननिषेध इति भावः । **अतो व्यर्थमिति** तव गानं व्यर्थमित्यर्थः । **त्रिष्वपीति** कालोद्धवभ्रमरपक्षेषु गाननिषेधकरणं साधारणं समानमित्यर्थः । ननु भगवद्गुणगाने न कुत्रापि शङ्का, अतो न निषेधो युक्त इत्याशयेनाशङ्कते, **ननु गान**इत्यादिना । किमिह गायसि एतद्भावार्थकथने स्थानान्तरे गानं न करोषि, अतः शङ्का, गानं करोषि यदि स्थानान्तरे तदा न शङ्केति योजनीयम् । **बहु किमिति गायसीत्यस्यार्थः** नापि कदाचिद्गानशङ्केत्यर्थः स्पष्ट एव, यतो बहु गायसि, अतो निषेधो युक्त इत्यर्थः । **इतोधिकमिति** अधुना तु वियोगमनुभवाम इतोधिकं संयोगजं फलं न पश्यामस्तदेवोक्तं पु० टी० प्र० पुनर्मिलनरूपमित्यर्थः । **सु० विवाहं करोतीति** । वर्तमानप्रयोगो नित्यलीलाभिप्रायेणोक्तो ज्ञेयः । **तस्य सखीति** सखी कुब्जाप्रभृतिः । **अनुभूतेर्थे** इति नन्वननुभूतार्थश्रवणेन भगवत्यपूर्वस्नेहो भविष्यतीति कथं गुणवर्णनं निषिध्यतेऽतो ममापि वचनं मन्तव्यमित्याशङ्क्याह **अस्माभिरनुभूतेर्थे** तव वचनस्य दुर्बलतेत्यतो युक्तमुक्तं भगवद्गुणवर्णनेन तास्वेव दौत्यं कर्तव्यमिति । तथा च ननु तासां दौत्यं मया न

कृतामिति न वक्तव्यं, यतः त्वया भगवता सह कुब्जादीनां गृहे गमनेन दौत्यं कर्तव्यमिति द्योतितमिति भावः।

किमिहेत्यत्र। सुबो० कोकिलादिशब्दैर्वेदैश्चेति। तत्र पु० प्र० कोकिलादिषण्णां शब्दा वेदशब्दाश्च षट्सु ऋतुषु सुबोधिन्युक्तभगवत्सहितादीनां सुखदा भवन्तीत्युक्तम्। तत्रेयं व्यवस्था प्रतिभाति। तत्र कोकिलानां शब्दा भगवत्सहितानां भक्तानां वसन्ते सुखदा भवन्तीति प्रसिद्धम्। एवमग्रे ग्रीष्मे कुररशब्दा ज्ञानिनां भगवन्तं स्मारयन्ति। तत्रायं प्रकारः। यथा कुरराः स्वनीडेऽण्डानि स्थापयित्वा देशान्तरगमनेऽपि स्मरणमात्रेण स्वबालवृद्धिं कुर्वन्ति तथा ज्ञानिनामपि तद्वद्भगवत्स्मरणं सुखदं भवतीति ज्ञेयम्। एवं वर्षायां 'भारद्वाजमयूराणां चाषस्य नकुलस्य च। एतेषां दर्शनं पुण्यं वामभागे विशेषत' इति वाक्यान्मयूरशब्दा धर्मपराणां सुखदा भवन्तीति ज्ञेयम्। एवं शरदि क्रौञ्चशब्दा उदासीनानां सुखदा भवन्तीति प्रसिद्धम्। तत्रायं प्रकारः। रामायणे वाल्मीकीये 'यत्क्रौंचमिथुनादेकमवधीः काममोहित'मिति वाक्यात् काममोहितानां नाशं स्मृत्वोदासीना वीतरागत्वेन सुखिनो भवन्ति। एवं हेमन्ते हंसानां शब्दा भक्तानां सुखदा भवन्ति। तत्रायं प्रकारः। हंसास्तु क्षीरनीरविवेचनचतुराः दृष्टान्तेन क्षीररूपान् भगवद्धर्मान् गृह्णन्ति, नीररूपविषयत्यागेन भक्ताः सुखिनो भवन्ति। एवं शिशिरे चक्रवाकाणां शब्दा भगवति मिलितानां सुखदा भवन्तीति। तत्रायं प्रकारः, यथा चक्रवाकाणां मिथुनानि दिवा सहचरन्ति रात्रौ वियोगे पृथग्भावेनापि वियोगानुभवं कुर्वन्ति, तद्दृष्टान्तेन भगवति मिलिता दिवा भगवत्सेवां कुर्वन्ति, रात्रावपि वियोगानुभवं कुर्वन्ति, तेन सुखिनो भवन्तीति। एवं कोकिलादीनां शब्दा भगवत्सहितादीनां वसन्तादिषड्ऋतुषु सुखदा भवन्तीत्युक्तम्। वेदानां शब्दा अपि तेषां सुखदा भवन्तीति तदुक्तं पु० प्र० ज्ञानिनामित्यादिना। तत्र ग्रीष्मे उत्तरकाण्डस्था उपनिषद्रूपा ब्रह्मनिरूपका वेदशब्दा ज्ञानिनां सुखदा भवन्ति। एवं पूर्वकाण्डस्थवेदशब्दा 'यज्ञाद्भवति पर्जन्य' इत्यादिरूपा धर्मपराणां वर्षायां सुखदा भवन्तीति। शेषाणाम् आर्तवा ज्ञेया इति। अवशिष्टानां उदासीनादीनां चतुर्णां ऋतुधर्मप्रतिपादका वेदशब्दा भगवत्स्मारकत्वेन सुखदा भवन्ति। तत्र शरदि 'आश्लिष्य समशीतोष्णं प्रसूनवनमारुतम्। जनास्तापं जहुर्गोप्यो न कृष्णहृतचेतस' इति वाक्यात् पूर्वं उदासीनानां गोपिकानां शोक आसीत्, पश्चात् 'स चर्षणीनामुदगाच्छुचो मृजन्' इति वाक्याद्भगवदात्मकं चन्द्रं दृष्ट्वा शोकनिवृत्तिरासीत्। तदनन्तरं वेदात्मका वेणुशब्दाः सुखदा जातास्तदेवोक्तं मन्त्रे शारदेन ऋतुनेति। तदर्थस्तु श्रुत्यर्थानन्दसन्दोहे गोस्वामिश्रीव्रजाभरणानां लेखे शारदेन ऋतुना सह विराजमानमित्यादिनोक्तः। एवं हेमन्तेपि भक्तानामग्निकुमाराणां 'हेमन्ते प्रथमे मासी'ति वाक्याद् व्रतकरणानन्तरं 'मयेमा रंस्यथ क्षपा' इति फलदातु-

भगवतो वेदात्मकाः शब्दाः सुखदा जाताः । तदेवोक्तं **मन्त्रे हेमन्तेन ऋतुने**ति । तदर्थस्तु हेमन्तेन ऋतुना सह विराजमानं भगवन्तमित्यादिनोक्तः । एवं शिशिरे भगवति मिलितानां रहसि वेदात्मकाः 'त्वमसि मम जीवन'मित्यादिगीतगोविन्दोक्ताः भगवच्छब्दाः सुखदा भवन्तीति । तदेवोक्तं मन्त्रे **शैशिरेण ऋतुना देवा** इत्यादिना । तदर्थस्तु शैशिरेण ऋतुना सह विराजमानमित्यादिनोक्तः । एवं वसन्ते भगवत्सहितानां दोलाद्यारोहणेन सन्तुष्ट्या वेदात्मका भगवच्छब्दाः सुखदा भवन्ति । तदेवोक्तं मन्त्रे 'वसन्तेन ऋतुना देवा वसवस्त्रिवृता स्तुतं रथन्तरेण तेजसा हविरिन्द्रे वयो दधु'रिति । तदर्थस्तु वसन्तेन ऋतुना सह क्रीडन्तं भगवन्तं दृष्ट्वा देवा भक्ताः, दीव्यन्तीति देवाः त्रिवृता स्तोमेन तेजसा ब्रह्मवर्चस्विनां मुखारविन्दसम्बन्धिना सह वर्तमाने हविः अधरसुधात्मकं इन्द्रे परमैश्वर्यरूपे वयश्च षोडशवर्षात्मकं दधुः श्रीमद्गोवर्धनाधीशे स्वात्मानं निवेदितवन्त इत्यर्थः । गानतात्पर्यमाहुः **गायन्तं स्त्रियः कामयन्त** इत्यादि । विशेषजिज्ञासायां तत्रैव द्रष्टव्यम् । विस्तरभयान्नो लिखितम् । श्रीपु० प्र० । **संयुक्तावस्था** इति । अन्तर्हृदये स्मरणात्मिका धर्मिज्ञानिसंयुक्तावस्था 'ज्ञात्वात्मानमधोक्षज'मित्यत्र सुबोधिन्युक्ता ज्ञेया ।

**दिवि भुवि च रसायामित्यत्र** । सु० **हेतुं वक्ष्यती**ति । कपटरुचिरहासादीन् हेतून् वक्ष्यतीत्यर्थः । **नानाविलासैर्ही**ति । देवस्त्रीणां नानाविलासै-
१०-४४-१५
रालिङ्गनादिस्वेच्छाचाररूपप्रकटविलासादिभी रमणं तदत्र प्रथमं 'कुचविलुलितमाले'त्यत्र कुब्जादिषु प्रकटविलासनिरूपितमिति योज्यम् । **भूस्त्रीणामि**ति भूस्त्रीणां रमणं प्रत्येकनियततया, तदुक्तं 'परिचरति कथं तत्पादपद्मं नु पद्मे'त्यादिना । **विलासतया** चेति विलासतया च रमणं क्वचिद्भूस्त्रीणाम्, तदुक्तं 'सकृदधरसुधे'त्यादिना । **परं निरोधस्तुल्य** इति निरोधस्तु सर्वासां तुल्य इत्यर्थः । रसास्त्रीणां रमणमतिगुप्ततयेति योज्यम् । तदुक्तं तृतीयश्लोके विजयसखेतिपदसूचितार्थकथने **अतिप्रयासेन अतिगुप्तत्ये**ति सुभद्राहरणवदिति योज्यम् । कपटरुचिरहासो वर्तते यस्य तस्य भगवतः काः स्त्रियो दुरापाः । **धर्मस्यैव वे**ति कपटादीनां धर्माणामपि काः स्त्रियः इति योजनीयम् । **इती**ति नारदं प्रति द्रौपद्या वाक्यमित्यर्थः । **एतावत्यर्थे कृते** इति रमणार्थसर्वसामग्रीसम्पादने कृते इत्यर्थः । **अकृतेपी**ति एतावत्यर्थेऽकृतेपि प्रार्थना व्यर्थेति योज्यम् । **एतावत्कर्तव्यमि**ति प्रार्थनादिकं न कर्तव्यमित्यर्थः । **प्रमाणबलेनेति दिवि भुवी**त्यारभ्य **भ्रूविजृम्भस्ये**त्यन्तं प्रमाणबलमुक्तम् । चरणरज इत्यारभ्य वयं का इत्यन्तेन प्रमेयबलमुक्तं, अपि चेत्यादिना लोकप्रसिद्ध्या भगवान्दीनानुकम्पीत्युक्तं प्रतिभाति । **तद्भावापन्नाया वे**ति तामसतामस्यास्तु सर्वभावापन्नाया भ्रमरकथायां स्वरूपं वक्तव्यमिति यत्पूर्वं प्रतिज्ञातं तदत्र निर्गुणगोपिकाया वचनं तामसतामस्या अपि वचनमित्यर्थः ।

**विसृज शिरसि पादमित्यत्र । मूलेऽभ्येत्यदौत्यैर्मुकुन्दादिति ।** दूतकर्मभिर्मुकुन्दमभ्येत्य प्राप्येति योजनीयम् । व्याख्याने मुकुन्दपदस्यार्थः **स मुकुन्दो**
१०-४४-१६ **मोक्षदाता मारयिष्यत्येवेति** न तु जीवन्तीनामस्माकं सुखं करिष्यतीत्युक्तम् । अत एवोक्तमस्माकं तु विपरीतनिश्चय एवेति । अतस्त्वमपि तादृगेवेति भावः । **स्वापमानमिति ।** यदि स्वाम्युक्तमनभिप्रेत्य कार्यं कुर्युस्तदा स्वापमानं भवति तन् न कश्चित्करोतीति योज्यम् । अत उत्पत्त्योपपत्त्या च तव मनो न शुद्धमिति, मनसः शुद्धिरशुद्धिश्च प्रकारद्वयेन ज्ञाता भवति शरीरचेष्टया वाक्यैश्च । तत्रोत्पत्त्या उत्पत्तिमत्कायचेष्टया वृथा प्रणत्या तथा उपपत्त्या उपपत्तिमतो वाक्यस्य वृथानुनयेन मनो न शुद्धं, तदेव दर्शयति **कायेनेत्यादिना ।** एवं कृतेपि निषेधे तेनैव प्रकारेण स्वमनसो शुद्धत्वं साधयन्नाशङ्कते **नन्वित्यादिना ।** अन्तःकरणं कथं ज्ञातं भवति इत्याशङ्क्याह **कायवाग्भिरेव तदभिज्ञानादिति ।** तस्य अन्तःकरणस्याभिज्ञानादित्यर्थः । अतः प्रणत्यानुनयेन ममापि मनः शुद्धमिति मन्तव्यमिति न त्वस्मासु दोषोस्तीति, एवं मद्द्वारा भगवानपि प्रणत्यानुनयं करोतीति न भगवत्यपि दोषोस्तीत्यस्मच्छब्देन बोधितम् । एवमाशङ्कायां शुद्धत्वे बोधितेपि प्रमाणबलेन स्वानुभवेन चाशङ्कां परिहरति **स्वकृतेत्यादिना ।** तत्र प्रमाणबलमाह **न हि युक्तिबाधितं वेदोपि बोधयतीति ।** एतदर्थो **व० लेखे** उदाहरणेनोक्तः घटस्य पटत्वं न बोधयतीति । ननु वेदार्थेपि कुत्रचित् कस्यचिद् युक्तिबाधो दृश्यत इत्याशङ्क्य महदनुभवेन परिहरति, ब्रह्मत्वादिकं त्वस्मदादियुक्तिबाधितमपीत्यादिना । **ब्रह्मत्वादिकमिति** 'सर्वं खल्विदं ब्रह्मे'ति श्रुत्युक्तं सर्वं ब्रह्मत्वादिकं ब्रह्मस्वरूपं भविष्यति । आदिपदेन महदादिकं चेति । विचारे 'आनन्दं ब्रह्मणो रूपं' इति श्रुत्या इदं दृश्यमानं जडमलिनरूपं सर्वं कथं ब्रह्मरूपं भविष्यतीति अस्मदादियुक्तिबाधितमपि शुकादियुक्तिसिद्धमेवेति सर्वत्रानन्दमात्रकरपादमुखोदरादिमत्त्वं सिद्धमेवेत्यर्थः । तदुक्तं प्रथमस्कन्धचतुर्थाध्याये 'दृष्ट्वानुयान्तमृषिमात्मजमप्यनग्नं देव्यो ह्रिया परिदधुर्न सुतस्य चित्रम् । तद्वीक्ष्य पृच्छति मुनौ जगदुस्तवास्ति स्त्रीपुंभिदा न तु सुतस्य विविक्तदृष्टे'रिति । एवं पुनरपि न हि युक्तिबाधितं वेदोपि बोधयति इत्यत्र प्रकारान्तरेण वाक्यं विचारयति **अहं मनुरभवमित्यादाविति** श्रुत्यादावित्यर्थः । वेदे वामदेवज्ञानिनोक्तमहं मनुर्जात इति तच्छ्रुत्वाहो अर्वाचीनोयं जनः कथं प्राक्कालीनो मनुरूपो भवतीति साधारणानां शङ्का अस्तु नाम न तु ज्ञानिनामपीति अन्वयव्यतिरेकेणाहुः । **ब्रह्मभावे सर्वभावादिति** अहं ब्रह्मास्मीति यस्य ब्रह्मभावः स सर्वरूपोपि भवति, एवं ब्रह्मत्वेन मनुत्वमपीति, अहं मनुरभवमित्यत्र ब्रह्मत्वेन मनुत्वमपि सिद्धं, तेन न हि युक्तिबाधितं वेदोपि बोधयतीत्यपि सिद्धमिति भावः । व्यतिरेके तदभावमाहुः **न तु मनुत्वेनेति** केवलमनुत्वे तु ब्रह्मभावाभावान् न स सर्वरूपोपि भवत्यतो वेदे युक्त्यबाधाभावाभावोपीति भावः ।

एवं ब्रह्मत्वादिकं त्वित्यादिना युक्तिबाधाभावकथनेन वयमपि श्रुतिरूपा न युक्तिबाधितं बोधयाम इति प्रमाणबलमुक्त्वा स्वानुभवबलमाहुः **व्याख्याने** भगवानीश्वर इत्यादिना ।

**मृगयुरिव कपीन्द्रे**ति । सु० **स्थलत्रये**इति वालिशूर्पणखाबलिष्वित्यर्थः । **पूर्वावस्था-मि**ति श्रीकृष्णस्य पूर्वावतारावस्थामित्यर्थः । ननु वाली बलवत्तरो मया च
१०-४४-१७ सुग्रीवसख्यं कृतं तत्स्मृत्वा ममाप्यपकारं करिष्यतीति भयान्मारितवान् इति चेत्तत्राह **ईश्वरत्वेने**ति । **तदुक्तमि**ति सीतोक्तमायामृगानयनार्थं न गच्छेदित्यर्थः । **काम एव यानमि**ति काम एव विमानं यस्याः यतस्तदधीनगतिका, अतः सर्वथा निरपराधा इत्यर्थः । **न दोषाये**ति अत एव मूलश्लोकेपि लोकत्रयग्रहणं नोक्तम् । पु० प्र० **पूजे**ति अर्घ्यपाद्या-दिग्रहणरूपेत्यर्थः । सु० **नात्र धात्वादेश** इति । पु० प्र० **अग्र** इति 'अदोर्जग्धिरि'-त्यादेशसूत्रोत्तरं 'बहुलं छन्दसी'तिसूत्रेणाऽत्त्वेत्यस्य सिद्धिरित्यर्थः । **द्वितीयार्थे बलिरि**ति वत्प्रत्ययार्थो द्वितीयार्थे तथा च ध्वाङ्क्षं बलिं यः प्रभुः आवेष्टयतीति योजनीयम् । तदेव दर्शयति **अयुक्तो हीत्यादि**ना । व० ले० अयुक्तोहीत्यस्याभासे । **दोषस्ये**ति तृतीय-दोषस्येत्यर्थः । **गुणपक्षमि**ति भगवद्गुणगानपक्षमित्यर्थः । पु० प्र० **अस्ये**ति बलेर्ध्वाङ्क्षेति विशेषणकरणे **सुबोधिन्यां अयुक्तो हीति** प्रथमं तात्पर्यमुक्तम् । तथा कृतवन्तं धृष्टं बध्नाति प्रभुरिति, अस्य बन्धनस्य तात्पर्यान्तरमुच्यत इत्यर्थः । व० ले० **पूर्वत्रे**ति यथा बलेर्निग्रहकरणे भगवति न दोषोस्तीति सुबोधिन्यामयुक्तो हीत्यादिनोक्तं, तथा गुणे पक्षे वालिहननेपि न दोषोस्तीति । मृगयुरिव कपीन्द्रेति पूर्वत्र दृष्टान्तार्थं तथा **कपिरित्या**रभ्य **बुद्ध्यैवे**त्यन्तं इद-मुक्तमित्यर्थः । सुबोधिन्यां **अत एवे**ति यतः शूर्पणखया सीताया अतिक्रमे कृतेऽनिष्टं जातं **अत एव ता** इत्यादि ता मधुपुरीस्थाः सजातीयानामस्माकमतिक्रमं न कुर्वन्ति इत्यर्थः । **तथा नगर** इति यथाबलेस्तन्मन्वन्तरकालोऽनुपभोग्यस्तथा नगरेऽस्मदनुपभोग्यो भगवानित्यन्वयः कर्तव्यः, तृतीयदृष्टान्ते ननु शूर्पणखया कः व्यतिक्रमः कृत इत्याशङ्क्य तस्या अतिक्रमानाह **अत इत्यादि**ना । **स्वायोग्यस्त्रीत्वा**दिति श्रीरामस्याऽयोग्यस्त्री-त्वादित्यर्थः । **अन्यावसरत्वा**दिति सीताया अवसरत्वादित्यर्थः । तन्मध्ये तस्या आगमनं व्यतिक्रमइति योजनीयम् । व० ले० **स्वातन्त्र्यमि**ति 'अर्थस्य पुरुषो दासो दासो ह्यर्थो न कस्यचित् । इति सत्यं महाराज बद्धश्चार्थेन कौरवै'रिति युधिष्ठिरं प्रति भीष्मवाक्येनार्थस्य स्वातन्त्र्यमुक्तम् । **तस्या अपी**ति कथाया अपीत्यर्थः । पु० प्र० **तथे**ति भगवद्रूपत्वमित्यर्थः । तदेवात्र पूर्वमुक्तं शब्दार्थयोरित्यादिना । तदेवोक्तं सु० **सापीत्या-दि**ना । व० ले० दिविभुविश्लोकार्थस्तु निर्गुणगोपिकाया वचनमित्यर्थः । **पक्षत्रयेपी**ति मधुपेत्यादिनवश्लोकेषु तामसादिपक्षत्रयेपीत्यर्थः । **तुल्य एवे**ति तुल्यार्थ एवेत्यर्थः । तथा च वस्तुतस्तु सर्वा अपि गोपिका निर्गुणा इति भावः । **चनेत्यव्ययमि**ति **किञ्चने**ति अव्यय-मित्यर्थः । न तु कारक इति नकारो निषेधवाची नेति योज्यम् । विसृज शिरसीतिश्लोकस्य

कालपक्षो न व्याख्यातस्तमिदानीं व्याकुर्वन्ति **कालेनापीत्यादिना** । **कालेनापीति** वेदेनापीत्यर्थः । **श्रवणादय** इति 'आत्मा वा अरे श्रोतव्यो मन्तव्य' इत्यादिश्रुत्युक्तश्रवणादय इत्यर्थः । **सख्यमिति** यथा 'सुपर्णावेतौ सदृशौ सखाया'विति सख्यं बोध्यते । **आत्मनिवेदनमिति** 'ब्रह्मैव सन् ब्रह्माप्येती'त्यात्मनिवेदनं च बोध्यते । **वेदा यज्ञाश्चेत्यस्यार्थस्तु** मूलानुसारेण व० ले० स्पष्ट एवोक्तः । ननूपनिषत्सु भगवद्भक्तिनिरूपणं न कर्तव्यमिति पुष्टिश्रुतीनां किमर्थमभिप्राय इत्याशङ्क्याहुः **इतरथा अन्यथासिद्धिः स्यादिति** । एतदर्थस्तु व. लेखे तदोपनिषदैव कार्यसिद्ध्या भगवदवतारस्यान्यथासिद्धिः **स्यादिति** उपनिषदुक्तसख्यात्मनिवेदनेन भक्तिमार्गीयफलसिद्धिस्तदा 'तथा परमहंसानां मुनीनाममलात्मनाम्। भक्तियोगवितानार्थं कथं पश्येमहि स्त्रिय' इति कुन्तीस्तुतावुक्तभक्तियोगवितानार्थं भगवदवतारप्रयोजनाभावः स्यादित्यर्थः । **अत्रायमाशयः** । उपनिषत्सूक्तसख्यात्मनिवेदनं ज्ञानमार्गपर्यवसायि मोक्षप्रदं, भक्त्यर्थमवतीर्णस्य भगवतः सख्यात्मनिवेदनं तु स्वरूपसम्बन्धप्रदमतो महानेव विशेषः । तत्र भजनीयोपि मोक्षप्रदः परमात्मैवेति वक्तुमाशङ्कामुद्भावयन्ति **सु० नन्वित्यादिना** । समाधाने यथा पुष्टिश्रुतीनामभिप्रायस्तथैव भगवतोप्यभिप्राय इति ज्ञापयितुं **भवदभिमतः परमात्मेत्युक्तम्** । **मोक्षप्रद** इति मूले मुकुन्दपदस्यार्थः । **प्ररोचनार्थमेव भक्तिमिव प्रेमेव वदतीति** । तत्रैव वाक्यद्वयमाहुः 'न वा अरे पुत्राणां कामाय पुत्राः प्रिया भवन्ति किंत्वात्मनः कामाय पुत्राः प्रिया भवन्ती'ति । आत्मकामनां भक्तिमिव वदति श्रुतिस्तथा 'यमेवैष वृणुते तेन लभ्य'इति श्रुत्युक्तवरणमपि 'अहं भवान्न चान्यस्त्वं त्वमेवाहं विचक्ष्व भोः । न नौ पश्यन्ति कवयच्छिद्रं जातु मनागपी'ति पुरञ्जनोपाख्यानोक्तपरमात्मन एवेति तस्य प्रेमैव वदतीत्यर्थः । **किञ्चेत्यारभ्याग्रिमग्रन्थस्यायमभिप्रायः** । 'यथात्मकामः सर्वं परित्यजे'दित्यादिवाक्यैः सर्वपरित्यागेनात्मानुसन्धानं ज्ञानमार्गीयसाधनमात्मस्फूर्तिश्च फलं, तदभावे उपनिषद्धर्वादीनां प्रयोजनाभावो यस्मात्तस्मात्सख्यादिकमनभिप्रेतमेवेत्यर्थः । ननु तर्हि भक्तिमार्गीयसख्यादिष्वपि प्रमाणाभावो भविष्यतीत्याशङ्क्याहुः **तथापि वैदिकत्वेन भाव्यमिति** प्रमाणार्थं 'यमेवैष वृणुत' इति श्रुत्युक्तसख्यादिकं भाव्यमित्यर्थः । **एवं सर्वत्र योजनीयमिति** एवं यत्र यत्र भक्तिमार्गीयश्रवणादिष्वपि प्रमाणाभावाशङ्का तत्र तत्र सर्वत्र 'आत्मा वा अरे' इत्यादि प्रमाणं योजनीयमित्यर्थः ।

**मृगयुरिवेत्यत्र कालपक्षे** । पु. प्र. **शिरःश्रुतेरिति** 'ब्रह्मैव सन् ब्रह्माप्येती'-त्यादिशिरःश्रुतेरित्यर्थः । **विवक्षिततदात्मिका** इति दूतत्वेन विवक्षितो यः कालस्तदात्मिका शिरःश्रुतिः साक्षाद्भगवत्प्रापिका भवत्येवेत्यर्थः । **तुरीयमिति** तुरीयपुरुषार्थरूपं मोक्षं तत्र त्यजेत्यर्थः । ननु मोक्षः सर्वेषां पुरुषार्थरूपः कथं तत्त्याग इत्याशङ्क्याहुः **एतदेवेत्यादि** । **एतदेवेति** मोक्षे पुरुषोत्तमपर्यवसायित्वाभावाद् अस्मान्प्रत्यकारणत्वं

**स्यादिति । त्यक्तत्वादिति** भगवता त्यक्तत्वादित्यर्थः । **अग्रे किमिति** अग्रे किमनुसन्धेयमस्तीत्यर्थः । **उक्ते च स्वरूपे** इति वामनस्वरूपे । **तद्विपरीतदर्शनेनेति** । पश्चात् त्रिविक्रमस्वरूपदर्शनेन स्वरंहसा पूर्वं त्रिसाम्यसदनमुरुकम्पयानं त्रिपृष्ठं पश्चाच्चस्कम्भ, अवष्टब्धवान् धृतवानिति, विपरीतदर्शनेनानाश्वसनीयमिति विश्वासरहितसख्यमित्यर्थः । अत एवोक्तं **तदलमसितसख्यैरिति । नित्यसम्बन्धादिति** शब्दार्थयोर्नित्यसम्बन्धात् । भगवानिव कथापि दुस्त्यजेत्यर्थः । ननु कथाया अनभिप्रेतत्वेपि कथं गले पादुकान्यायेन धारणीया इति चेत्तत्राहुः **युक्तानामित्यादि** । युक्तानामस्फुरणे इति 'तदा गन्तासि निर्वेदं श्रोतव्यस्य श्रुतस्य चे'ति वाक्याद् युक्तानां श्रोतव्यस्य श्रुतस्य चाऽस्फुरणेऽनभिप्रेतमपि युक्तैः शुकादिभिः गले पादुकान्यायेनाङ्गीक्रियते, तथास्माभिरपि अनभिप्रेतमप्यङ्गीक्रियत इति भावः । ननु पूर्वश्लोकोक्तकालपक्षोस्मिन् श्लोके किमर्थमुक्त इत्याशङ्कापरिहारस्तु पूर्वं 'किं नु सन्धेयमस्मि'न्नित्यनेन भगवति सन्धिर्न कर्तव्य इत्युक्तम् । अस्मिन् श्लोके तदलमसितसख्यैरिति अनेनास्मिन् सख्यं न कर्तव्यमिति द्वयोः श्लोकयोरेकार्थज्ञापनाय तथोक्तम् । **अथवा** मधुप कितवेति दशश्लोका गुणभेदेनोक्ताः । तत्र प्रथमे तामसतामसी वक्री, तत्र कालनिषेध उक्तः । द्वितीये तामससात्त्विकी तत्र न कालपक्षः, तृतीये तामसराजसी, तत्रापि कालनिषेधोक्तिः, चतुर्थे गुणातीता तत्र न कालनिषेधः, पञ्चमे राजसराजसी षष्ठे राजसतामसीति द्वयोरेकार्थत्वेप्यत्र तामसभावात् कालनिषेध उक्तः । एवं यत्र यत्र तामसभावस्तत्र तत्र कालनिषेधः । तत्र तामसत्वेपि यत्र सत्त्वमिश्रत्वं तत्रापि नेत्यर्थः । सात्त्विकास्तु स्वयं प्रमाणभूता अतो न निषेधोक्तिः । तर्हि तामसानां जघन्यत्वं भविष्यतीत्याशङ्कापरिहारस्तु पुष्टौ तामसा एव मुख्या इति वाक्यान्न जघन्यत्वमिति ज्ञातव्यम् । सप्तमे राजससात्त्विकी तत्र कालपक्षोऽनुगुणोऽननुगुणश्चोक्तः । अष्टमे सात्त्विकतामसी तत्र कालपक्षो नोक्तः, नवमे सात्त्विकराजसी तत्र कालपक्षस्त्वनुगुणत्वेनोक्तः, दशमे सात्त्विकसात्त्विकी तत्रापि न कालपक्ष इति व्यवस्था प्रतिभाति ।

**यदनुचरितेत्यत्र** । सु० **शब्दव्यवहित**मिति । व्यासादिभिरुपनिबद्धमनुचरितं शब्दव्यवहितमपि **तथाकार्यं** सर्वेषां सम्पादयतीत्युक्तम् ।

१०-४४-१८ तत्र दृष्टान्तो वस्त्रादिव्यवहितोपि भानुः सर्वान् तापयत्येवेत्युक्तम् । तत्र अपिशब्देन व्रजसीमन्तिनीषु चरितं तु दृष्टत्वात्साक्षाद्भानुरिव तापं सम्पादयतीत्युक्तं भवति । एतत्सर्वं पु० प्र० शब्दव्यवहितेत्यादिना विस्तृतोक्तम् । तत्र 'शब्दार्थयोर्नित्यसम्बन्धेपी'ति पदं 'अन्यथैवे'ति कारिकोत्तरं सम्बन्धमर्यादा प्रकृते नास्तीत्यत्र योजनीयम् । ननु व्रजरत्नासु कथं सम्बन्धमर्यादा नास्तीत्याशङ्कायां हेतुमाहुः **साक्षादित्यादिना** । ननु सर्वेषां च व्यवधाने को हेतुरित्याशङ्कायां हेतुमाहुः **वैदिक्याः सृष्टेरित्यादिना** । ननु तथापि व्रजसीमन्तिनीषु कथं तापाधिक्यं, कथं वा सर्वेषां नेत्याशङ्क्य कारिकायामग्नि-

दृष्टान्तेन तापाधिक्यमाहुः तत्र **अन्यथैवेति**। अग्निसंयोगाद्दग्धः पुरुषो दाहं अन्यथैवाभिमन्यते तीव्रवेदनां वैलक्षण्येन मन्यते । अन्यथा अग्निसंयोगं विना दाहशब्देन दाहोर्थः दाहरूपोर्थः सम्प्रतीयेत सम्प्रतीतमात्रः स्यादिति । **सु० यथा सर्वप्रतीत्येति** । एते कस्मिन्वर्णे कस्मिन्नाश्रमे वर्तन्त इति सर्वेषां प्रतीता न भवन्ति तथा गच्छन्तीत्यर्थः। तत्र हेतुः **लौकिकवैदिक** इत्यादिना । तदेवोक्तं एकादशे 'आश्रमादाश्रमं गच्छेन्नान्यथा मत्परश्चरे'दिति। तदर्थस्तु मत्परो भक्तः, आश्रमादाश्रमं न गच्छेत्, किन्तु अन्यथा चरेदिति। **स्वसुखमिति** 'भिक्षुचर्यां चरन्ती'त्युक्त्या एकत्र स्थित्यभावात्कथापि स्वसुखं बहु नानुभावयतीत्यर्थः। **पुष्टीत्यादिना** कालपक्षोऽनुगुणोऽननुगुणश्चोक्तस्तदर्थः **पु० प्र० तथा चेत्यादिना**। तत्र **विवेकराहित्यादिति** । 'भिक्षुचर्यां चरन्ती'ति मर्यादामार्गीयत्यागरूपविवेकराहित्यादेव गृहे स्थितिरित्यर्थः । नन्वेवं पूर्वोक्तमर्यादामार्गीयत्यागरूपविवेके सत्यपि किमर्थं गृहे स्थितिरित्याशङ्क्याहुः **अन्यथेत्यादि** । **अन्यथेति** गृहे स्थित्यभावे इत्यर्थः। ननु गृहे स्थित्या कथं देहस्थितिर्भिक्षुचर्याचरणे च कथं नेत्याशङ्कायां अत्रेदं तत्त्वम्। एताः पुष्टिमार्गीयाः, अतो गृहे स्थित्या कालान्तरेण पुनरपि भगवत्प्राप्त्याशास्ति । तेन देहस्थितिः । यदा भगवान्नागमिष्यत्येवेति निश्चयस्तदा उदरभरणार्थं गृहे किमर्थं स्थातव्यमतो भिक्षुचर्यां चरिष्याम इति निश्चयमात्रेण विरहानलेनैतासां देहा एव न तिष्ठेयुरिति। तथा च सुबोधिन्यां 'पुष्टिमार्गश्रुतीना'मित्यादेरर्थोऽप्येवं कर्तव्यः । तत्र पुष्टिश्रुतयो गोपिकास्तासां भगवन्मर्यादाश्रुतयो **यदनुचरितेत्यादि**भगवत्कथामहिमप्रतिपादिका भिक्षुचर्याचरणादिरूपा अपि विरहदशायां नात्यन्तं द्वेष्याः, किन्तु ग्राह्या एव, परं नाभिप्रेता इति साक्षात्सम्बन्धविघातकत्वेन नाभिप्रेता इति दिक् ।

**वयमृतमित्यत्र** । **सुबोधिन्यां पश्चादित्यादिना** । अनधिकारेण साधने फलव्यभिचारं दृष्ट्वा **कचिद्वाक्ये इति** 'आयास्ये इति दौत्यकै'रिति वाक्ये
१०-४४-१९ बाधितार्थमपि ज्ञात्वा वयं भगवद्वाक्ये अन्यथासिद्धिं निश्चितवत्यः इति शेषः । पश्चादसाधारणवाक्यत्वादन्यथासिद्ध्यभावं निश्चित्य निवृत्ता जाता इति दोषारोपान्निवृत्ता जाता इति योज्यम् । भगवद्वाक्ये असाधारणत्वं विवृण्वन्ति **भगवता हीत्यादिना** । तदर्थस्तु व० ले० **पश्चादित्यादिनोक्तः** । तन्मध्ये तस्य व्यभिचारेऽन्यथासिद्धिः स्यादिति सम्बन्धो ज्ञेयः । व्यभिचारे हेतुमाहुः **नियतत्वाभावादिति** । भगवतो वाक्ये नियतत्वाभावादित्यर्थः । भगवत्यन्यथासिद्ध्यभावकथनार्थं न्यायशास्त्रोक्तमन्यथासिद्धेर्लक्षणमाहुः **साधनस्येत्यादिना** । तत्र घटादिकरणे यथा नियतावश्यकपूर्वभावी यो दण्डस्तदतिरिक्तस्य साधनस्य दण्डे नीलपीतादिवर्णसाधनस्यान्यथासिद्धत्वादन्यथासिद्धिः स्यात्तथा भगवतो वाक्ये नान्यथासिद्धिरिति तदेवाहुः । **तदभावार्थमाहुरिति** । भगवत्यन्यथासिद्ध्यभावार्थमाहुरित्यर्थः । भगवत्यन्यथासिद्ध्यभावमग्रे विवृण्वन्ति । **असाधारणेत्यादिना** ।

सु० **भवदर्थे वक्ष्यामीति** । नन्वेतासां कोर्थो सिद्धो भगवति किञ्चानृतमित्याकाङ्क्षायामत्रायमाशयः । वस्त्रदानद्वारा पुम्भावप्राप्त्या रमणयोग्योर्थः सिद्धः । भगवत्यनृतं तु वस्त्रदानकथनं पुम्भावदानरूपं ज्ञेयं, न त्वन्यत् । अतो युक्तमुक्तं भवदर्थे वक्ष्यामीति । एतत्सर्वं व्रतचर्याध्याये 'भगवांस्तदभिप्रेत्ये'ति श्लोकस्य सुबोधिन्यां 'एते हि बालका' इत्यादिना विवृतं द्रष्टव्यम् । एवमग्रेपि **न पारये** इति न करिष्यामीति यदुक्तं तदप्युत्तरदलदानार्थमनृतोक्तिर्ज्ञेया । एतदपि पञ्चाध्यायीचतुर्थाध्याये **'नाहं तु सख्य इत्यत्र'** सु० 'तदा भजनमेव नाशयामी'त्यादिनोक्तं द्रष्टव्यम् । ननु हरिणीनां बाणेन नाशावस्था सर्वैर्दृष्टचरा एव, न भवतीनां, अतः कथं तुल्यार्थतेत्याशङ्कायामाहुः **एतद्ददृशुरिति** । **एतदस्मदङ्गे** नखक्षतावस्थां सर्वेपि जना ददृशुरित्यर्थः । **प्रदर्शयन्त्य** इति उद्धवस्याग्रे स्वावस्थामभिनयेन प्रदर्शयन्त्य इत्यर्थः । **तामवस्थामिति** स्वनाशेन हरिणीनां नाशावस्थां स्वदृष्टान्तेनाहुरित्यर्थः ।

**प्रियसख इत्यत्र** । टिप्पण्यां **प्रथमपर्यायाद्** इति तामसप्रकाराद् इत्यर्थः। **तदैतद्दर्शनेनेति** । तस्मिन्समये तामसभावेन मधुकरदर्शनेन यादृशी बुद्धिर्जनितेति ।
१०-४४-२० 'मधुप कितवे'त्यादिनोक्तप्रकारेण दोषारोपा बुद्धिर्जनिता । **तस्याः सकाशादिति** तस्याः बुद्धेः सकाशादित्यर्थः । **अधुनेति** अस्मिन्सात्त्विकपर्याये । **प्रकारान्तरेणेति** सात्त्विकप्रकारेण यद्दर्शनं तद् **अन्यथा बुद्धिं जनयतीति** । दोषाभावरूपां बुद्धिं जनयतीत्यर्थः । ननु 'जानीमस्त्वां यदुपतेः पार्षदं समुपागतं, भर्त्रेह प्रेषितः पित्रोर्भवान्प्रियचिकीर्षये'त्यादिषु पूर्वमागमने दोषसम्भावना कृता 'प्रियसख पुनरागा'इत्यत्र, कथमधुना प्रकारान्तरेणागमनं सम्भावयति इत्याशङ्कायामाहुः **आगमनमपि तथैवेति** । 'काचिन्मधुकरं दृष्ट्वे'त्यादिषु पूर्वं दर्शने यथा दोषसम्भावना कृता, तथा **अधुना**, दर्शने गुणान् सम्भावयति, आगमनमपि तथैव सम्भावयतीत्यर्थः । ननु व्रतस्य इष्टसाधकत्वे वक्तव्ये तत्र कालस्य कथमिष्टसाधकतेत्याकाङ्क्षायामाहुः **व्रते इत्यादिना** । **तत्त्वमिति** कालस्य इष्टसाधकतेत्यर्थः । **दोषाभावेति** व्रजरत्नानां दोषाभावज्ञापनपूर्वकं भगवति प्रियत्वादिज्ञानानुगुणत्वेन **तथेति** कालस्य सात्त्विकत्वमित्यर्थः । सु० **इदानीमपि किं प्रेयसैव प्रेषित** इति प्रश्ने कृते तदा तथेत्यङ्गीकृते इति यदुक्तं तस्यैवानुवादो **तदीयेत्यारभ्य आह** इत्यन्तेन कृतः प्रतिभाति । तत्र स्वस्येति पूर्वं व्रतवरदानसमये सात्त्विकः कालः भक्त्यनुगुणो वा योऽहं आगतः सोऽहं तदीयप्रमाणान्युररीकृत्य पुनरागत इति स्वस्य पुनरागमनमाहेत्यर्थः । तत्र **दृष्टान्तं** दर्शयन्ति **तदीयेत्यादिना** । यथा सात्त्विकं भक्त्यनुगुणं श्रीभागवतं शास्त्रं भगवदीयानि प्रमाणान्युररीकृत्य भगवत्प्राप्त्यर्थं दूतत्वेनागतमिव, आदिपदेन श्रीभगवद्गीतापि तथा ज्ञेया, तथाहमपि आगतोऽतो मम निषेधो न कर्तव्य इति भावः । एवमुक्ते आह

**वरयेत्यादीति** योज्यम्। टि० **पृथक्कार्यकरणार्थ**मिति पृथक् श्रीवधूरूपः सन् रमणकार्यकरणार्थम्। **तथेति** विभज्यैव शक्तिं कृष्णो भगवानवतीर्ण इति योज्यम्।

१०-४४-२१ **अपि बतेत्यत्र**। व० ले० **अन्यत्रेति**। युद्धाद्यर्थमन्यत्र गमनसम्भावनया प्रश्न इत्यर्थः।

**अथोद्धवेत्यस्याभासे**। सु० **प्रातीतिको दोष** इति। कितवेत्याद्युक्तिरूपो वस्तुतस्तु
१०-४४-२२ गुणो गानरूप इत्यर्थः। **सान्त्वयन्नित्यत्र**। **भगवदीया** इति। अतः सान्त्वनीया इत्यर्थः। टि० **एतदवस्थेति**। तामसतामसावस्था। **तादृग्वाक्येति** किमिह गायसीति। भण्यतामन्यवार्तेति वाक्यश्रवणेपीत्यर्थः। **वाक्प्रसव** इति। श्रीमदुद्धवानां वाक्प्रसव इत्यर्थः।

**दानव्रतेत्यत्र**। सुबोधिन्यां **स्नेहे वैलक्षण्याभावादिति**। दानादिभिः कामादिभिश्च स्नेहस्य तुल्यत्वादित्यर्थः। **फल** इति कृष्णे भक्तिरिति फल इत्यर्थः।
१०-४४-२४
पु० प्र० **तदघं हित्वेति विशेषस्तूक्त** इति तथा च यथा तपोदानसमाधिभिः कृष्णे भक्तिर्हि जायते तथा 'कामाद् द्वेषाद्भयात्स्नेहाद्यथा भक्त्येश्वरे मनः आवेश्य तदघं हित्वा बहवस्तद्गतिं गता' इत्यत्र कामादिनापि तदघं हित्वेति विशेषस्तूक्त इत्यर्थः। तत्र **तान्प्रतीति**। उक्ताधिकारिणो मार्यादिकान्प्रति दानादेः प्रयोजकत्वम्। अतो वैजात्यस्य दानादेरप्रयोजकत्वं सुबोधिन्युक्तं सूपपन्नमेवेति योज्यम्। सु० **अन्यानि श्रेयांसीति**। मूले **श्रेयोभिर्विविधैरि**तिमात्रस्यार्थो ज्ञेयः। ननु तथापि मूले दानादिभिः 'कृष्णे भक्तिर्हि साध्यते' इत्युक्तम्, तदाचार्यैस्तु कथमप्रयोजकत्वमुक्तमिति सन्देहो नापैतीत्याशङ्कायामाहुः पु० प्र० **तथा चेत्यादिना**। तत्र अधिकारिविशेष इति मार्यादिकाधिकारिविशेषे भक्तिसाधकत्वमिति न सन्देह इति। सु० **अन्यैरित्यविहितैः**। दीनादिषु अन्नादिदानादिभिरित्यर्थः। **साध्यत** इति 'आत्मनः कामाय पुत्राः प्रिया भवन्ति' इति श्रुत्युक्ता स्वात्मनि सर्वेषां सहजा या प्रीतिः, सा दानव्रतादिनापि भविष्यतीत्याशङ्का 'कृष्णे भक्तिर्हि साध्यते' इति पदेन निवारितेत्यर्थः।

**भगवत्युत्तमश्लोके इत्यत्र**। सु० **बहुत्वमिति**। भवतीभिः बह्वीभिः प्रवर्तितायाः भक्तेर्बहुत्वमित्यर्थः, सा सेवा पुष्टिमार्गे अद्यापि दृश्यते इति
१०-४४-२५
भावः। **सामर्थ्यं चेति** भवतीपदस्य धात्वर्थो 'भातेर्डवतुरि'ति सूत्राद् भातीति दीप्तिकथनेन साधनं विनापि पुष्टिभक्तिप्रवर्तनरूपमिदं सामर्थ्यं सूचितमित्यर्थः। **न उत्तमा** इति यस्याः भवदीयायाः भक्तेः सकाशाद् अन्या भक्तिर्न उत्तमा अस्तीति योज्यम्। पु० प्र० **एतत्त्यागेनेति** दानव्रतत्यागेनेत्यर्थः। **एतस्या** इति भक्तेरित्यर्थः। **त्यागस्येति** दानव्रतत्यागस्येत्यर्थः। **तदपेक्षया** इति मननापेक्षया इत्यर्थः। **अस्यामिति** अस्यां भक्तौ

मनने उत्कृष्टत्वं प्रतिभातमित्यर्थः । तदेव दर्शयन्ति **यथा वयमित्यादिना** । नन्विमामुत्तमां भक्तिं परित्यज्य कथं मनने सर्वेषां प्रवृत्तिर्भविष्यतीत्याशङ्कायामाहुः **ज्ञानाभावादित्यादिना** । **तत्रेति** मनने प्रवृत्तिः । **इयमिति** अत इयं भक्तिरुत्कृष्टेति भावः । तथा च शुकादीनां तादृग्भक्तिकरणाधिकाराभावेपि मनने अस्या उत्कृष्टत्वं ज्ञात्वा 'नित्यं विष्णुजनप्रिय' इति वाक्यात् तदर्थं वर्णिता इति भावः ।

**दिष्ट्येत्यत्र** । सु० **अवस्थाभेदेनेति** । बाल्युवाद्यवस्थाभेदेन भिन्ना देहा इत्यर्थः । **नानाविधोपयोगा** इति मात्राद्युपयोगादित्यर्थः । **तदपेक्षा** इति क्रीड-

१०–४४–२६

नाद्यपेक्षा इत्यर्थः । **स्वार्थमिति** भगवद्व्यतिरिक्तस्वार्थमित्यर्थः । **भगवतः स्थानेति** मोक्षस्थाने इत्यर्थः । **पुत्रादिवदिति** यथा पुत्रादिष्वनासक्तिस्तथा देहेष्वनासक्तिरित्यर्थः । **प्रासङ्गिकः समाज** इति भगवद्गुणगानातिरिक्तः गोपिकानां परस्परमपि लौकिकः प्रासङ्गिकः समाज इत्यर्थः । **पूर्वमिति** । 'संत्यज्य सर्वविषया'नित्यत्र पूर्वमुपपादितमित्यर्थः । **पुरुष** इति पतिरित्यर्थः । **परमिति** उत्कृष्टं भगवन्तमित्यर्थः । पु० प्र० **ब्रह्मपुरःसरमिति** 'ब्रह्मानन्दमयी लक्ष्मी'रिति वाक्यात् । तथा च स्त्रीणां जगतश्च ब्रह्मांशत्वात् स्त्रीप्रायमित्याद्युक्तं । **विवाहितेति** । 'स वै पतिः स्या'दिति वाक्याद् विवाहितो भगवान्पतिरित्यर्थः । **वाचनिकेति** लौकिकपतिरित्यर्थः । **उक्तविशेषत्वादिति** 'अकुतोभयः स्वय'मित्याद्युक्तविशेषाद्भगवद्भजनमेव मुख्यमिति सूचितमित्यर्थः । 'व्यभिचाराद्दतौ शुद्धिः' आपदि व्यभिचारे जातेपि 'रजसा शुध्यति नारी'ति वाक्यादृतौ जाते नारी पश्चात्पतिव्रता स्वपतिभजनेन शुध्यतीत्यर्थः । **एवं भजनव्यवस्थेति** गौणपतिभजनेपि शुद्धिरित्यर्थः । **मुख्येति** भगवतीत्यर्थः । **परिभ्रमणशीला** इति तथा च अनेकजन्मभिः परिभ्रमणशीला 'चर्षणीशब्दवाच्यास्ते रुचिस्तेषां न कुत्रचिदि'ति वाक्यात्तासां लक्षणान्युक्तानि । तथाविधा अपि भगवति मुख्यभावेन चेद्भजमानास्तदा उत्कृष्टा इत्यर्थः । **तथात्वादिति** स्थूलशरीरस्य प्रतिक्षणं भेदेनापि अप्रयोजकत्वादिति योज्यम् । तथा च स्थूलशरीरं वस्त्रप्रायं तद्दिने दिने नूतनेपि द्वितीयदिने यथा अन्यपतौ क्रियमाणे व्यभिचारो भवति तथा लिङ्गशरीरस्य सत्त्वाज् जन्मान्तरेपि अन्यपतौ क्रियमाणे व्यभिचारो भवत्येवेति । एतदेवोक्तं **प्रभोरित्यादिना** । एतत्सर्वं 'क्वेमाः स्त्रियो वनचरी'रित्यत्र विशदीकृतम् । **भजनं कुर्वन्त्यः स्थिता** इति । गोपानां गृहे गोपानां भजनं कुर्वन्त्यः स्थिता इत्यर्थः । **भगवता तथात्वेन विचारितादिति** गोपसम्बन्धत्वेन दोषविचारितादित्यर्थः । भगवद्विचारस्तु 'क्वेमाः स्त्रिय' इत्यत्र 'व्यभिचारदुष्टा' इत्यस्य व्याख्याने **प्रकृतेऽपी**त्यारभ्य **भजनादि**त्यन्तोक्तोग्रे द्रष्टव्यः । सु० **एवमग्रेपीति** यथा पूर्वं आभिमानिकगोपसम्बन्धदोषान्निवृत्ता रासक्रीडायां भगवन्तमुपगता एवमग्रेपि पतिसम्बन्धिदोषान्निवृत्ता भविष्यन्तीत्यर्थः । किमर्थमुक्तं पतीन् हित्वेत्याशङ्क्याहुः **इदानीं वरप्राप्तो भगवानिति** । इदानीं रासक्रीडायाम् । वरत्वेन साक्षात्

सम्बन्धं प्राप्तः, अतः सर्वत्यागेन परमपुरुषप्रपत्तिः कार्येति भावः । **पूर्वमिति** रासक्रीडायामात्मनिवेदनात्पूर्वम् । **इच्छयेति** इच्छामात्रेण स्वप्नादिषु प्राप्तो भगवानिति, इदमेवोक्तं पञ्चाध्यायीप्रथमाध्याये 'त्वयाभिरमिता'इत्यस्य व्याख्याने 'सर्वदैव स्वप्ने त्वत्सम्बन्धं प्राप्नुम' इति । **विशेषेति** । अतः सर्वत्यागेन भवतीनां प्रपत्तिरुक्तेति युक्तमुक्तमिति ।

**श्रूयतामित्यस्याभासे** । **धाष्ट्यादिति** यो यदनुगृहीतः, स तस्योपदेशं करोति, तदा
धाष्ट्यं भवति, तदभावाय **विज्ञाप्यंत** इत्युक्तमित्यर्थः । **स्तोत्रवदिति** यथा
१०-४४-२८ स्वस्य स्तुतिश्रवणं शिष्टानामनभिप्रेतं भवति, तथैतत्सन्देशकथाया अपि
श्रवणमनभिप्रेतं ज्ञास्यन्तीत्याशङ्क्याहेत्यर्थः । **अन्यार्थमुपकारवदिति** यथा गीतायामर्जुनस्योपकारार्थं ज्ञानमुक्तं तेन अन्येषामप्युपकारो जातस्तद्वदित्यर्थः । **सुखावह** इत्यस्यार्थकथने **दृष्टफलेति** । अत एतत्सन्देशश्रवणेन भवतीनां दृष्टफलं भविष्यतीति भावः । **सुखं चावहतीति** एतच्छ्रवणमेव सुखं वहिष्यति, न तु फलार्थं साधनापेक्षेति, तदेवोक्तं 'तत एव सुख'मित्यादिना । एतत्सर्वं 'ज्ञात्वात्मानमधोक्षजं' इत्यत्र व्याख्याने विशदीकृतं भविष्यतीति । **एतादृशत्वे** इति श्रवणे फलरूपत्वे इत्यर्थः । **मया हीति** 'भवतीनां वियोगो मे न हि' इत्यादेरर्थः प्रथमतः भगवन्मुखाज् ज्ञातः । **ज्ञायते** चेति भवतीनां फलानुभवे अधिकारश्चाधुना ज्ञायते इत्यर्थः । तथा च **ज्ञायते चेत्यादि** मूले 'भद्रा' इति सम्बोधनस्यार्थो ज्ञेयः । सिद्धार्थमाहुः **एवमित्यादिना** । **एवमपि सतीति** सन्देशे सुखावहत्वे सतीत्यर्थः । **तमेवेति** सुखावहसन्देशमित्यर्थः । अतः अहमेव प्रमाणमित्यर्थः । **अभूता** इति अपूर्णा इत्यर्थः । **नापीति** एतदर्थो भविष्यति, न भविष्यतीति नेत्यर्थः । **एकान्तेति** रहसीत्यर्थः । **एकान्तं वेति** । अव्यभिचारं यथा स्यात् तथा अभिप्रेतं करोमीत्यर्थः । **यथोक्तेति** भवतीनां सुखावह इत्युक्तफलक इत्यर्थः ।

**भवतीनामित्यत्र** । सु० **मूलहेतून् वदन्निति** । आत्मत्वाद्युक्तवश्यत्वा-
दित्यादि उत्तरार्धोक्तमूलहेतून् वदन्नित्यर्थः । पु० प्र० **संयोगाख्य** इति
१०-४४-२९ वियोगोऽत्र भगवता सह बाह्यतः संयोगाख्यस्पर्शाभाव इत्यर्थः । **न
तु विभागात्मा** इति । भगवता सह स्वरूपतः पृथक्स्थितिर्नेत्यर्थः । अत्रायमुपदेशः केवलं गोपिकानामेव, न तु साधारणानां सर्वेषामिति टिप्पण्यभिप्रायेण ज्ञायते । अत एव मूलेपि **भवतीनामित्युक्तम्** । अन्यथा जीवात्मनामिति वदेत् । सु० **वियोगस्त्रेधा भवतीत्युक्तम्** । तत्र स्वाभाविको वियोगस्तु 'सर्वं खल्विदं ब्रह्मे'त्यादिश्रुत्यैव निराकृतः, सोत्र न विचार्यते । द्वितीय औपाधिको वियोगस्तन्निषेधार्थं विचार्यते **आत्मनामित्यादिना** । **आत्मनां जीवानामिति** सर्वात्मपदस्य सूचितार्थो ज्ञेयः । **औपाधिको भेदोस्तीति** देहोपाधिको भेदोस्तीत्यर्थः । **उद्गमो** वा इति यथाऽग्नेः क्षुद्रा विस्फुलिंगा व्युच्चरन्तीति श्रुत्युक्तव्युच्चरण-

मुद्गमः । **वादान्तर**मिति मायावादे अज्ञानोपाधिरित्यर्थः । तदुक्तं पु० प्र० **अज्ञान**-मित्यादिना । एवं गोपिकानां परस्परवियोगे हेतुरुक्तः । भगवता सह वियोगे हेतुमाहुः सु० **जीवब्रह्मणो भेदेऽज्ञानमेव हेतुरि**ति । जीवास्त्वत्र व्रजीया एव ज्ञातव्याः । ब्रह्मशब्दोऽपि पुरुषोत्तमपर एव । एतासामज्ञानमपि द्वितीयदलदानार्थं भगवानेव करोतीति सुतरां वियोग इत्युक्तम् । इदमेवोक्तं **टिप्पण्यां अत्रेद**मित्यादिना । तत्र **न तु पूर्व**मिति विभूतिरूपब्रह्मात्मकप्रपञ्चमध्यपातित्वं नेत्यर्थः । **एवं सती**ति श्रुत्युक्तप्रकारेण सर्वस्यापि लीलापदार्थस्य पुरुषोत्तमात्मकत्वे सतीत्यर्थः । **आत्मरूपेण सहे**ति । लीलापदार्थस्य पुरुषोत्तमात्मरूपेण सह यथा वियोगो न भवति तथा भवतीनामपि लीलामध्यपातित्वान् मया सह वियोगो न सम्भवतीति सुष्ठूक्तम् । नन्वेतासां दृष्टफलाभिकाङ्क्षिणीनां 'अहं सर्वात्मे'ति पदकथनमात्रेण कथं स्वास्थ्यमित्याकाङ्क्षायां **तथा चे**त्यारभ्य **स्वास्थ्यमि**त्यन्तेन सिद्धार्थमाहुस्तत्रा**तृणस्तम्बस्ये**ति । तत्तद्देशादेर्नित्यस्येति योज्यम् । तेन सिद्धमाहुः **श्रीरासोत्सव इत्यादि**ना । **पूर्वमनुभूतानी**ति संयोगावस्थायामनुभूतानीत्यर्थः । **अधुनापि वर्तमानैरि**ति विप्रयोगावस्थायामपि वर्तमानैरित्यर्थः । **तैः साकमेतदवस्थापन्नानामपी**ति संयोगावस्थासाकं विप्रयोगावस्थापन्नानामपीत्यर्थः । **स्वानामभेदज्ञापने** इति स्वानां देहादीनां भगवता 'भवतीनां वियोगो मे न हीं'त्यभेदज्ञापने इत्यर्थः। **पूर्वोक्ता**नामिति श्रीरासोत्सवादीनामित्यर्थः। **तथात्व**मिति निरवध्यानन्दत्वमित्यर्थः । पुनरपि स्वास्थ्याभावमाशङ्क्य परिहरन्ति **यद्यपीत्या**दिना । **अस्य कादाचित्कत्वेने**ति भगवतोपदिष्टवियोगाभावस्य कादाचित्कत्वेनेत्यर्थः । **तस्य सर्वोपमर्दित्वेने**ति विप्रयोगस्य सर्वोपमर्दित्वेनेत्यर्थः । **अस्ये**ति उत्कटविरहस्येत्यर्थः । **तथात्व**मिति स्वास्थ्यमित्यर्थः । नन्वेवं भगवदुपदेशेनैतासां श्रीरासोत्सवस्वनृत्यप्रभुबाहुगृहीतकण्ठानि स्वस्वरूपाणि स्वहृद्याविर्भवन्ति तेन निरवध्यानन्दो भवतीति सत्यमुक्तम्, परमग्रे 'हा नाथेत्यत्र' पुनरपि वैक्लव्यं भविष्यतीति किमुपदेशेन फलं सिद्धमित्याकाङ्क्षायामाहु**र्येनेत्या**दिना । **तत्र किञ्चित्काल**मिति। किञ्चित्कालं स्वास्थ्यं भवतीति पूर्वोक्तं योज्यम् । किं च । मम च वियोगो भवतीनां नास्तीति सुबोधिन्यां यदुक्तं तद्विशदीकुर्वन्ति **सस्मिते**त्यादिना । **स्वागमनसार्थकत्वज्ञानेने**ति भगवतः स्वामिनीनां विप्रयोगे हृदि गमनेन सार्थकत्वज्ञानेनेत्यर्थः । **स्वस्यापी**ति भगवतोपीत्यर्थः । **दुःखनिवृत्तिरि**ति स्वास्थ्यं भवतीत्यर्थः । नन्वेवं विप्रयोगे यदि अन्तर्लाभः संयोगे बहिरिति विशेषाभावात् सन्निकर्ष एव कुतो न साध्यते दुःखहेतुर्विप्रकर्षः किमर्थं साध्यते इत्याशङ्कायां, 'आन्तरं तु परं फल'मिति वाक्यात् परमफलप्राप्त्यर्थं सन्निकर्षो न साध्यत इति । एतत्सर्वं 'यथा दूरचरे प्रेष्ठे' इत्यत्र टिप्पण्यां विस्तृतोक्तं विचारणीयम् । नन्वेतासां यथाऽज्ञानेन भ्रमः तथा समानयोगक्षेमत्वाद् भगवतोपि कथं न भ्रम इत्याशङ्क्याहुः सुबोधिन्यां **ब्रह्मणस्तु तदुभयाभावादि**ति । उपाधे-

रज्ञानस्य चाभावान्न जीवैः सह कथंचिद्भेदभ्रम इति भावः । नन्वेवं यदि वियोगाभावस्तदा ईर्ष्यादौ को हेतुरित्याशङ्क्याहुः **भगवानित्यादिना** । आदिपदेन दोषारोपेपि स एव हेतुः सोपि भ्रमादित्याहुः **स इत्यादिना। त्यक्ष्याम इति वदन्त इति**। 'किं नु सन्धेयमस्मिन्' 'तदलमसितसख्यै'रिति वदन्त इत्यर्थः । **अयमर्थो निरूपणीय** इति । भ्रमाभावरूपोर्थो निरूपणीय इत्यर्थः। **दुःखं च फलतीति** । अतो भगवानपि वियोगं करोतीति भावः । एवं वियोगाभावं प्रतिज्ञाय पुनरपि देशकालभेदेन वियोगाशङ्कामुद्भाव्य परिहरन्ति **वस्तुस्वरूपेणेत्यादिना** । अत्र **वल्लभानां लेखे । समुदायरूपेण**ेति सर्वरूपो भगवान् तेनेत्यर्थः । **सुबोधिन्याम्** । एकदेशेन **वृक्षकपिवियोगव**दिति वृक्षकप्योः संयोगेपि एकदेशित्वमस्त्येव तेन कदाचिद्देशान्तरगमनेन यथा वियोगः सम्भवति तद्वद्भगवतोपि देशान्तरगमने वियोगो भविष्यतीत्येका शङ्का । द्वितीयामाह **कालभेदेनेत्यादिना । व० लेखे । जन्मान्तरे वियोगे** इति जन्मान्तरे स्त्रीपुरुषयोः सामीप्येपि वियोगः सम्भवति, तद्वद्भगवतोपि वियोगो भविष्यतीति शङ्कां परिहरन्ति **सुबो० तदुभयं निषेधतीत्या**दिना । **काल** इतीति कालभेदेन जन्मान्तरेपि भगवति न वियोगोस्तीत्यर्थः । **देश** इति देशभेदेनापि भगवति केनाप्यंशेन नहि वियोगोऽस्तीत्यर्थः । **एवं चतुर्धे**ति । भवतीनां मे मम च भवतीनां देशकालभेदेन चेति चतुर्धा वियोगो न भवतीत्यर्थः । **विशेषहेतव एते** इति **आत्मत्वादित्या**दिविशेषहेतव इत्यर्थः । **चेद्भवन्तीति** यथ वेदाः प्रमाणं स्युरितिवदसन्देहेपि पूर्वोक्तो वियोगश्चतुर्धा न भवत्येवं पूर्वग्रन्थेनान्वयः कर्तव्य इत्यर्थः । नन्वेवं वियोगाभावोस्तीति सत्यम्, तर्ह्यधुना संयोगाविर्भावोपि कथं नेत्याशङ्क्यात्र**ायमाशयः** । एतासां संयोगवियोगावुभावपि युगपदाविर्भूतौ स्तः, परं भगवान् क्रमेणाविर्भावयति, उभावपि युगपदाविर्भावयति, तदुक्तं भगवता दशमस्कन्धे कात्यायन्यर्चनव्रतवरदानसमये 'मयेमा रंस्यथ क्षपाः' इत्यत्र । तदर्थस्तु विद्वन्मण्डने नित्यलीलावादे 'अत्रेमाः क्षपाः' इति इदंशब्देन ताभ्यः सर्वाः क्षपाः पुरःस्थिताः कृत्वा प्रदर्शितवानिति । तेनैवं ज्ञायते । तत्र तासां स्वरूपाण्यपि प्रदर्शितवानिति । तथा चैतासां विप्रयोगावसरेपि रूपान्तरेण सर्वदा सङ्गमोऽप्याविर्भूतोस्तीति सूचितमन्यथैतासां स्वरूपस्थितिरपि न स्यात्, 'भवतीनां वियोगो मे नहीं'ति भगवतो वाक्येऽप्यनाप्तत्वं स्यात्, अतस्तासां संयोगवियोगावुभावप्याविर्भूतौ इति फलितम् । वस्तुतस्तु सर्वा अपि लीलाः क्रमेण कृता अपि युगपदाविर्भूताः सन्तीति । 'जयति जननिवास' इति वाक्यं पुरस्कृत्य बहुधाशङ्क्य श्रीमत्प्रभुचरणैर्बहुधोक्तं विशेषजिज्ञासायां तत्रैव द्रष्टव्यम् । विस्तरभयान्नात्र लिख्यते इति दिक् । एवमत्रापि वियोगाभावविचारः श्रीमदाचार्यचरणैर्जीवब्रह्मणोस्तु भेदे अज्ञानमेव हेतुरित्यादिना गूढाभिप्रायेणोक्तः । तत्रायं ज्ञानमार्गीयं ज्ञानं उपदिश-

तीति केषांचिद्भ्रान्तिर्भविष्यतीति तदभावाय तदर्थः श्रीमत्प्रभुचरणैः टिप्पण्यां विस्तरत उक्तः । स सर्वोपि विज्ञैर्विचारणीयः तेनैव सर्वं रमणीयम् ।

**यथा भूतानीत्यत्र । भगवानाश्रय** इत्यारभ्य **प्रलयकर्तेत्यन्तेन** श्लोकद्वयस्य भावार्थ उक्तः । तत्र प्रथमश्लोकस्योत्तरार्धस्यार्थो न तिष्ठेदित्यन्तेनोक्तः
१०-४४-३०,३१
स चैवं योजनीयः । यथा सर्वेषां मनआदिपञ्चानामक्षराश्रयस्तथा भवतीनां मनआदिपञ्चानामहमाश्रय इति । अतो वियोगो नास्तीति सिद्धम् । तर्हि पूर्वार्धस्य प्रयोजनाभावो भविष्यतीति तदभावाय आशङ्कामुद्भावयन्ति **अथेत्यादिना** । **देहभावेनात्मा गौण इति** एतासां आश्रयत्वेन देहरूपोपि भगवानात्मेत्युक्तम् । स च देहभावेन सदंशेन गौण इति एतासां गौण आत्मसम्बन्धो भविष्यतीति, अवतारदशायां आविर्भूतस्तु मुख्यात्मा, तस्यैतासां देहेन सह वियोग उच्येतेत्याशङ्क्य परिहरन्ति **तदपि न घटते** इत्यादिना । कथं न घटते इत्याकाङ्क्षायामाहुः **समवायिकारणत्वेन तेषु वर्तत** इति । यथा महाभूतानि भूतेषु समवायिकारणत्वेन पटेषु तन्तव इव वर्तन्ते तथा तासां देहेषु भगवानपि समवायिकारणत्वेन वर्तत इति । अतो देहभावेन आत्मा गौण इत्यादि न शङ्क्यमित्यर्थः । ननु सर्वेषां देहानां महाभूतानि समवायिकारणानि, कथमेतासां देहानां भगवानेव समवायिकारणमित्याशङ्क्याहुः **अन्यथा देहा निःस्वभावाः स्युरिति** । अत्रायमर्थः । एतास्तु नित्यलीलास्था एतासां देहा अपि पुरुषोत्तमात्मकाः, अतस्तत्समवाय्यभावे देहा मृदभावे घट इव सत्तारहिताः स्युरित्यर्थः । द्वितीयश्लोकस्य भावार्थः श्रीमदाचार्यचरणैराविर्भूतेनेत्यादिना गूढाभिप्रायेणोक्तः, तदर्थष्टिप्पण्यां श्रीमत्प्रभुचरणैर्मूलार्थव्याख्याने प्रकटीकृतः । पूर्वं तदर्थं विचार्य, पश्चाद्भावार्थो विचारणीय इति । **आत्मन्येवात्मनात्मानं** (१०-४४-३१) इत्यस्यार्थो वक्ष्यमाणाभिप्रायेणैवं योजनीयः **टिप्पण्यां** 'आश्रय' इत्यादिना । तत्र आत्मनि स्वात्मरूपे व्रजे इति आश्रयस्यार्थः । **आत्मना स्वयमिति** करणार्थः । स्वात्मरूपगोपिकानामात्मानमिति कर्मार्थः । **अभेदश्चोक्त** इति भगवता सहाभेद उक्त इति । **सृजे हन्म्यनुपालये** इति । ननु पूर्वस्थितानामेतासां कथं सृष्ट्यादिकरणमित्याशङ्क्य भगवानेतासां त्रेधा रसदानं करोति तच्चैतासां सृष्टिरित्याद्युपचर्यते । तदाहुः **सृष्टिरित्यादिना** । **सर्वनिरोधायकत्वादिति** सर्वेषां देहेन्द्रियादीनां तिरोधायकत्वादित्यर्थः । **तदपि रसार्थमिति** द्वितीयरसार्थमित्यर्थः । नन्वत्र सर्वेषां सृष्ट्यादिकं प्रभुः करोतीति प्रसिद्धार्थं विहाय उक्तरीत्या कथने किं मानमित्याशङ्क्य मानमाहुः **अत एव अन्ते पालनमिति** । तथा च पूर्वाध्याये उद्धववाक्ये 'सृजत्यवति हन्ति च' इति अन्ते हननमुक्तं, तथान्यत्रापि च तथा कथनमत्र तूक्ताभिप्रायज्ञापनायान्ते पालनमुक्तमिति मूलाभिप्रायो मानमित्यर्थः । **आत्ममायानुभावेन भूतेन्द्रिय-**

गुणात्मनेत्यस्याभासार्थकथने टि० हेतूनिति । आत्मानुभावेन आत्ममायानुभावेन भूतेन्द्रियगुणात्मनेति सृष्ट्यादिकरणे त्रिधा हेतूनित्यर्थः । एवं त्रेधा रसदानमुक्तम् । तत्र प्रथमं प्रभुसङ्गमरूपं रसदानफलम् । तच्च फलप्रकरणादिषु बहुधोक्तमतोत्र न विचारितम् । द्वितीयं वियोगकरणम् । तदधुना प्रभुः करोतीति तदाहुः सुबोधिन्यामाविर्भूतेनेत्यादिना । नन्वस्तु आविर्भावेन वियोगो हितकारी, परं पूर्वसम्बन्धेनैवैता अर्धदग्धाः, पुनः सम्बन्धेन सर्वदाह एव स्याद् इत्युक्तौ कोभिप्राय इत्याशङ्कायां, अयमाशयः । प्रादुर्भावात्पूर्वं सर्वदा सुखदो भावात्मा भगवानेतासां सर्वदा हृद्यवस्थित आसीत् । स एव पुनः प्रादुर्भावसमये व्रजे समागते वसुदेवनन्दने प्रविष्टस्तदारभ्यैतासां बहिःसम्बन्धे जाते सति कदाचिद्दुःखानुभवोपि भवति । तदुक्तम् 'गोप्यः कृष्णे वनं याते तमनुद्रुतचेतसः कृष्णलीला प्रगायन्त्यो निन्युर्दुःखेन वासरान्' इति । तदनन्तरं सुखानुभवोपि भवति । तदुक्तम् 'रेमिरेहस्सु तच्चित्तास्तन्मनस्का महोदया' इति । एवं सुखदुःखयोर्मिश्रभावेन पूर्वसम्बन्धेनैवैता अर्धदग्धा इत्युक्तम् । दृष्टान्ते तु मथनेनाविर्भूतोऽग्निःकाष्ठं अर्धज्वलितं करोतीति प्रसिद्धम् । स एवाग्निः पुनर्बहिःसम्बन्धं करोति तदा सर्वदाहो भवतीति प्रसिद्धम् । दार्ष्टान्ते तु स यदा पुनर्मथुरां गतः तदा भावात्मा भगवानेतासां पुनर्हृद्येव स्थित आसीत् । पुनरपि बहिःसम्बन्धे कृते स्वस्य तु द्वारकागमनमवश्यं भावि, तदा महद्दुःखं भविष्यतीत्याशयेन पुनः सम्बन्धेन सर्वदाह एव स्यादित्युक्तम् । नन्वेतासामलौकिकदेहवतीनां कथं नाशोक्तिरित्याशङ्कापरिहारस्तु 'नोचेद्वयं विरहजाग्न्युपभुक्तदेहा ध्यानेन याम पदयोः पदवीं सखे ते' इतिवत् नाशशङ्कायां नाशोक्तिर्न तु नाशशङ्का । अथवा नाशेपि न क्षतिस्तदुक्तमत्रैव टिप्पण्यां भूतेन्द्रियगुणस्वरूपेण पुनराविर्भूयानुपालये इति । नन्वधुना भगवतः किमर्थोयमाग्रहो यद्बहिःसम्बन्धो न कर्तव्य इत्याशङ्कायां अधुनैतासां तृतीयरसदानं कर्तव्यं तच्चान्तर्दृष्ट्यानुभूतं भवति, तदर्थं भगवानपि तथैव निर्बन्धेनोपदिशति इत्याशयेनाहुः सुबोधिन्यां सुखानुभवस्त्वित्यादिना । स च सुखानुभवः 'ततस्ताः कृष्णसन्देशैर्व्यपेतविरहज्वराः । उद्धवं पूजयाञ्चक्रुर्ज्ञात्वात्मानमधोक्षज'मिति पुनरुपदेशानन्तरं भविष्यति, तत्र अधोक्षजपदस्यार्थो ह० टि० बहुधा दृष्टान्तेनोक्त इति दिक् । नन्वग्निवद्यदि भगवानेतासु स्वान्तस्स्थितोस्ति तदा कदाचिद्बहिरपि कथं नाभिव्यक्तो भवेदित्याशङ्कायां दृष्टान्तेनाहुः सर्वथेत्यादिना । 'यथा काष्ठस्थितो वह्निराविर्भूतो भवेद्बहिः तदा काष्ठस्य सर्वांशो वह्निरूपो भवेदिति ॥१॥ तथैवैतासु भावात्मा स्थितो व्यक्तो भवेद्बहिः तदैव तासां देहांशा ब्रह्मरूपा भवन्ति हि ॥२॥' तथा तासां पृथक् स्थित्या भजनानन्दानुभवोपि नानुभूतो भवेदतो भगवानपि सर्वथा नाभिव्यक्तो भवेद्बहिरिति भावः । न सम्बध्यत इति अग्निदृष्टान्तेन नाशशङ्कया भगवानपि बहिर्न सम्बन्धं करोतीत्यर्थः । नन्वेवं तर्ह्येतावत्पर्यन्तं सम्बन्धसद्भावेपि कथं न नष्टा जाताः, कथमधुना तथोच्यते, इत्याशङ्कायामाहुः यत्त इत्या-

**दिना**। अधुना प्रलयकर्ता वियोगकर्ता, टिप्पण्युक्तरीत्या पूर्वं तु सृष्टिकर्ता, अतस्तदा न नाशोक्तिरिति भावः। एवं श्लोकद्वयस्य भावार्थमुक्त्वा प्रथमस्य वाक्यार्थं वक्तुं आभासमवतारयन्ति । **स्थितिहेतुत्वान्नैकदेशेनापि वियोगः सम्भवतीति** । एतासां देहांशेन स्थितिहेतुत्वादेकदेशेन वृक्षकपिवियोगवन् न भगवतो वियोगः सम्भवतीत्यर्थः। **अन्येषामिति** तदतिरिक्तानामन्येषाम्, अन्यथा सर्वेषामिति वदेत् । **एतासां तु आधारभूतोपि भगवान्** इति देहांशेन न वियुक्त इत्युक्तम्। **दृष्टान्तेन साधितमित्यत्र** । ननु यथा दृष्टान्ते महाभूतानि अन्येषां भूतानामाधारभूतानि सन्तीति प्रत्यक्षतयोपलभ्यते तथा भगवानपि देहांशेन न वियुक्त इत्युक्तं स च प्रत्यक्षतया नोपलभ्यते। अतो दृष्टान्तेन दार्ष्टान्तः कथं इत्याशङ्कां परिहरन्ति **प्रकरणेनैव तल्लभ्यमिति** । प्रकरणेन दृष्टान्तप्रकरणेन भगवान् दार्ष्टान्तरूपोपि लभ्य इत्यर्थः । ननु युक्तिविरोधादलाभेपि लाभमानने किं मानमित्याशङ्क्य मानमाहुः—**अनन्यलभ्यो हि शब्दार्थ** इति। श्रुतिशब्दार्थः । यथा श्रुतिर्वदति तथैव मन्तव्यो न युक्त्याद्यपेक्षत इत्यर्थः। तदुक्तम्। 'लौकिकेषु च ये भावास्तांस्तु तर्केण योजयेत् । अलौकिकास्तु ये भावा न तांस्तर्केण योजयेत्'। एवं भगवानपि दृष्टान्तेन यथा वदति दार्ष्टान्तेपि तथैव मन्तव्यमित्याहुः **साधारणदृष्टान्तेन चेति**। यथा भूतानि साधारणदृष्टान्तेन देहांशेन न वियुक्तानीति साधितं तथा असाधारणे दार्ष्टान्ते साधितामिति चकारार्थः। चकारात् पुनरुक्तेन दृष्टान्तान्तरमाहेति । अत्र पुनरुक्तिः पुनर्दृष्टान्तमात्र इति ज्ञापनाय । तथाहं चेति मूलस्थचकारोक्तः। न तु पूर्वार्थकथनरूपपुनरुक्तिरिति ज्ञापनाय व्याख्याने **देहव्यतिरिक्तानि चेत्युक्तम्**। ननु यथा पूर्वदृष्टान्ते **यथेत्यारभ्य** न वियुक्तानि भवन्तीत्यन्तेनान्येषां देहाः पाञ्चभौतिका इत्युक्तम्, तेनैव दृष्टान्तेन तथेत्यारभ्य साधितमित्यन्तेनैतासां देहाः पुरुषोत्तमात्मका इति दार्ष्टान्तार्थोऽर्थापत्त्या साधितः। अन्यथा दृष्टान्तकथनं निरर्थं स्यात्। तथा द्वितीयदृष्टान्तेन कोर्थः साधित इत्याकाङ्क्षायामाहुः **देहव्यतिरिक्तानीत्यादिना** । मनःप्राणबुद्धीन्द्रियगुणात्मकानि भवन्तीति । **अन्येषामपीति** पूर्वोक्तवत्पुनरुक्त्या योज्यम्। **तेषामप्यहमाश्रय** इति। मनआदीनामक्षररूपेणाहमाश्रय इति अपिशब्देन सूचितम्। तेनैव दृष्टान्तेनैतासां मनःप्राणबुद्धीन्द्रियगुणाः पुरुषोत्तमात्मका इति दार्ष्टान्तार्थोऽर्थापत्त्या साधितोन्यथात्रापि द्वितीयदृष्टान्तार्थकथनं निरर्थं स्यादिति भाति। एवं वाक्यार्थमुक्त्वा प्रकारान्तरेण पुनरुक्तिमाहुः **समसङ्ख्यार्थं पञ्च गणिता** इति। पूर्वदृष्टान्ते यथा खमादिपञ्च गणितास्तथात्र समसङ्ख्यातात्पर्यार्थं पुनरुक्तिज्ञापनाय मनआदिपञ्च गणिता इत्यर्थः । अष्टाविंशतितत्त्वानि पञ्चगुणितानि भवन्त्यपि तदाहुः **सत्त्वादिगुणेष्वित्यादिना**। प्रकृत्यहङ्कारचित्तानां गुणादिष्वन्तर्भाव उक्तोतः पृथग्गणना न कृता। दशप्राणाः दशेन्द्रियाणि च मनोबुद्धिगुणाश्चेति त्रयोविंशतिर्भवन्ति । पृथिव्यादि-

पञ्चानां मनआदिषु सन्निवेशः श्रुत्युक्तः **क्रमे चेत्यादिना**। अथवा सन्निविष्टानां पृथग्गणनायामरुचिं मत्वा पुनः पुनरुक्तिज्ञापनाय पूर्वार्धोक्तखमादिपञ्च गणिताः खमित्यादिना। च० ले० अष्टाविंशतिपक्षो ब्रह्मवादसिद्धस्तस्यात्र विशेषतो नोपयोग इत्युक्तम्। तत्रायमाशयः। यथा चतुश्चत्वारिंशाध्यायकारिकार्थकथने टिप्पण्यां उद्देश्यत्वेन ज्ञानोक्तिव्यवच्छेदायैवकार इत्युक्तं, तेनात्र ज्ञानमार्गीयज्ञानस्य नोपयोगो युक्तः, तथात्र ज्ञानमार्गीयतत्त्वस्यापि नोपयोग इति प्रतिभाति। तर्हि चतुर्विंशतिगणने कोभिप्राय इत्याशङ्कायामत्रेदमुक्तं भवति। छान्दोग्ये पठ्यते। तत्र आकाशादितत्त्वान्युक्तानि। तत्र 'यच्चेहास्ति यच्च नास्ति सर्वं तदस्मिन्समाहित'मित्युक्तम्, तेन नित्यलीलायां चतुर्विंशतिपक्षः प्रतिभाति। तदनुसारेण गीतायां श्रीपुरुषोत्तमेनापि चतुर्विंशतिपक्षो महाभूतान्यहङ्कारेत्यादिः स्वीकृतोस्ति।

**आत्मन्येवेति** श्लोकस्यार्थः श्रीमदाचार्यचरणैः सुबोधिन्यां प्रकारद्वयेन निरूपितोस्ति। तत्र प्रथमप्रकारः केवलगोपिकानां सृष्ट्यादिकरणरूपो गूढाभिप्रायेणोक्तः। स तु सर्वेषां ज्ञानगोचरो न भविष्यतीति ज्ञात्वा श्रीमत्प्रभुचरणैः टिप्पण्यां स्वतन्त्रतया निरूपितोस्ति। द्वितीयोर्थः सर्वेषामस्मदादीनां सृष्ट्यादिकरणरूपः साधारणरूपः साधारणरीत्या निरूपितः। तत्र साधारणरीत्या 'आत्मन्येवात्मनात्मानं' इति पदत्रयस्यार्थो भगवता वेदोक्तसृष्टिरीत्या निरूपितोस्तीति ज्ञापनाय दृष्टान्तार्थं पूर्वं कर्ता भगवानिति श्रुतिसम्मत्या निरूपितः कर्ता भगवानित्यादिना। **कर्ता भगवानिति** सृष्ट्यादिकर्ता भगवानित्यर्थो 'यतो वा इमानि भूतानि जायन्ते' इति श्रुत्या निरूपितः। समवायश्च भगवानिति समवायिकारणरूपोपि भगवानिति। 'तस्माद्वा एतस्मादात्मन आकाशः सम्भूत' इति श्रुत्या निरूपितः। 'स आत्मानं स्वयमकुरुत' इति श्रुत्या कार्यमपि स्वयमेवेति निरूपितम्। एवं कर्ता समवायी कार्यरूपोपि भगवानिति दृष्टान्तार्थं श्रुत्युक्तं निरूपितम्। अतः परं आत्मन्येवेति पद्यस्यार्थं वक्तुं आभासमवतारयन्ति **जीव इत्यादिना**। अत्रैवमाशङ्क्यते जीवपरत्वेपि सुतरामत्र न सन्देहः। **आधारे सन्देह** इति। अपीति सम्भावनायाम्। जीवाः भगवतो चिदंशाः, अतो भगवान् जीवानां सृष्ट्यादि करोतीति। जीवपरत्वे व्याख्याने 'यथा प्रदीप्तात्पावकाद्विस्फुलिंगा सहस्रशः प्रभवन्ति सरूपा' इति मुण्डकोक्तश्रुतिसंमत्या सुतरामत्र न सन्देहः। परं जडरूपपृथिव्याद्याधाररूपोपि भगवान् कथं भविष्यतीति आधारपरत्वे व्याख्याने सन्देह इत्याशङ्का, तत्परिहारमाहुः **समवाय्यनतिरिक्ताधारं निरूपयन्नाहेति**। अत्र पृथिव्याद्याधारानपि समवायिभगवदनतिरिक्तान्निरूपयन्नाहेत्यर्थः। **आत्मन्येवेति** आधारभूते स्वात्मनि अहं सृष्ट्यादि करोमीत्यर्थः। अतोत्र पृथिव्याद्याधारेषु ब्रह्मणः सदंशत्वान् न जडत्वसन्देह इति भावः। लौकिकाधारे सन्देह इति ज्ञापनायोदाहरन्ति **यथा कुलालश्चक्रे घटं करोतीति**। यथा चक्रे जडत्वसन्देहः तथा नात्रेति भावः। **आत्मानात्मसङ्करप्रतिषेधायैवकार** इति। अत्र पृथिव्याद्याधारे अनात्मत्वसन्देह-

व्यवच्छेदाय मूले एवकार इत्यर्थः । **करणस्य भिन्नत्वमाशङ्क्याहेति** कर्ता भिन्नो भविष्यतीत्याशङ्क्याहेत्यर्थः । **वैषम्यनैर्घृण्यादि**दोषाभावाय **कार्यस्याप्यन्यत्वं निवारयति** इति । ननु यदि भगवानेव सृष्ट्यादिकर्ता तदोच्चावचसृष्टिकरणे वैषम्यं भविष्यतीति जीवानां दुःखदानेन नैर्घृण्यं च भविष्यति, आदिपदेन जीवेपि कृतनाशोऽकृताभ्यागमो भविष्यतीति । तद्दोषाभावाय कार्यरूपोपि स्वयमेवेत्याहुः **आत्मानमिति** स्वात्मानमेव सृज इति द्वितीयाभावेन न वैषम्यादिदोष इति भावः । अत्राप्युदाहरणद्वयमाहुः **कश्चिद्घटादिकमपि कदाचिदानीय** स्वस्मिन् स्थापयतीति, कदाचित्कश्चिद् अन्यकृतं घटादिककार्यमानीय स्वस्मिन्कर्तृत्वं स्थापयति तदा वैषम्यं भवतीति शेषः । द्वितीयमुदाहरणमाहुः **स्वपादं स्वजघने स्फोटयति** चेति । कश्चित्स्वपादं स्वजघने स्फोटयति तस्य न नैर्घृण्यं भवतीति प्रसिद्धम् । स्वस्मिन् तन्निषेधाय **उत्पत्त्यादीनाहेति** । स्वस्मिन्वैषम्यनैर्घृण्यादिदोषाभावाय स्वोत्पत्त्यादीनाह **सृज इत्यादिना** । एवं सर्वेषां सृष्ट्यादिकरणे आधारादिरूपोपि स्वयं भगवानित्यर्थः प्रतीयते । टिप्पण्यां तु केवलगोपिकानां सृष्ट्यादिकरणे आधारादिरूपोपि स्वयं भगवानिति मूलाभिप्रायेणोक्तं, तदेवाचार्याभिप्रायश्चेति ज्ञापनाय मूलाभिप्रायञ्चाहुः । **पालनस्य पश्चाद्वचनं देशवियोगाभावे हेतुत्वज्ञापकमिति** । अत्रायमर्थः । सर्वत्र पूर्वं भगवान्सृजति पश्चात्पालयति हन्ति च । तत्र सृष्टिसमये देश इत्युपलक्षणं, पालनहननसमये यौ देशकालौ तयोर्वियोगो भवति, तदनन्तरं पालनं करोति, तदा तस्मिन् समये सृष्टिहननसमये यौ देशकालौ, तयोः वियोगो भवति, एवं हननेपि ज्ञेयम् । अत्र तु सृजे इत्यादिव्यपदेशेन संयोगविप्रयोगभेदेन गोपिकासु भगवान् त्रिविधा लीलाः करोति इति निरूपितं । सृजे हन्म्यनुपालये इति वर्तमानप्रयोगेण युगपद्वाविर्भावोस्तीति न देशकालवियोग इति ज्ञापनाय पालनस्य पश्चाद्वचनं देशवियोगाभावे हेतुत्वज्ञापकं इत्युक्तम् । एवं पालनस्य पश्चाद्वचनेन सृष्ट्यादीनां देशवियोगाभावरूपो मूलाभिप्रायो ह० टि० निरूपितः । तथा च सर्वदा रासादिदेशेषु एतासां स्वरूपस्थितिहेतुभूतः प्रभुसङ्गम एवेति सृष्ट्यर्थो निरूपितः । तथा मथुरादिदेशेषु सर्वदा स्थित्वा एतासां विप्रयोगकरणं हननमिति द्वितीयं रसदानार्थं निरूपितं तस्मिन्नेव समये आन्तर्हृदयदेशे एतासु स्थित्वा पालयतीति पालनार्थ उक्तः । **सुबोधिन्यां नन्वित्यारभ्य** तत्राहेत्यन्ता शङ्का तदर्थ एवं योजनीयः । तत्र **पुराणे** चेति 'भूतैर्यदा पञ्चभिरात्मसृष्टै'रित्यादिपुराणवाक्यैः पृथिव्यादितत्त्वेष्वेव साक्षाद्भगवत्कारणता प्रतीयते, प्रकृत्यहङ्कारादिद्वारा परम्परया वा भगवत्कारणता प्रतीयते । **न भौतिकेष्विति** पृथिव्यादिभूतपरिणतभौतिकेषु पुत्रादिदेहेषु भगवत्कारणता न प्रतीयते, तत्र तु पित्रादीनां कारणता प्रतीयते इति भावः । **अत एवेति** । यतस्तत्त्वेष्वेव भगवत्कारणता प्रतीयते अत एवेत्यर्थः । 'भूतैर्यदा पञ्चभिरात्मसृष्टैः पुरं विराजं विरचय्य तस्मिन् । स्वांशेन विष्टः पुरुषाभिधानमवाप

नारायण आदिदेव' इति एकादशस्कन्धस्य चतुर्थाध्यायवाक्यम् । **तत्रापीति** भौतिकसृष्टिष्वपि पुत्रादिदेहानहमेव करोमीत्यर्थो योजनीयः । **अन्यथा मन्यते** इति । पित्रादीनां केवलकारणतां मन्यते इत्यर्थः । अन्यथा मानने हेतुद्वयमाहुः **मायया व्यवहित** इति । पित्रादिरूपेण मायया व्यवहितोहं करोमीत्यर्थः । **मायां पुरस्कृत्य करणादिति**-च । एवं भौतिकसृष्टिकरणेपि भगवत्कारणता निरूपिता । पुनरपि प्रकारान्तरेण कारणान्तरमाशङ्कन्ते **नन्वित्यादिना** । तत्र **वाक्यानुभवाभ्यामिति** 'भूतानि भूमौ स्थिरजङ्गमानि' इति चतुर्थस्कन्धे प्रचेतसां वाक्यं, मृदः घटादीनां सम्भव इति सर्वेषामनुभव इत्यर्थः । **पृथिव्यादेरेव कारणत्वं प्रतीयत इति** भौतिकसृष्टिषु पृथिव्यादीनां कारणत्वं प्रतीयत इत्यर्थः । आदिपदेन पित्रादीनां कारणतापि सूचिता । **तत्कथमत्र व्यामोह इति** । मायया अन्यथा प्रतीयत इति पूर्वोक्तप्रकारेण कथमत्र व्यामोह इत्यर्थः । **तत्राहेति** भूतेन्द्रियगुणात्मना इति मूलोक्तेनाहेत्यर्थः । **तदात्मभूता माया तेषु प्रविष्टा** इति । भूतेन्द्रियगुणात्मरूपा माया तेषु पृथिव्यादिषु प्रविष्टा इत्यर्थः । ननु माया प्रविश्य तत्र किं करोतीत्याशङ्क्याहुः **सा** हि यत्र प्रविशति तत्र अन्यदेव भासयतीति । पृथिव्यादीनां कारणतां भासयतीत्यर्थः । **अकरणेषु करणत्वमिति** । पित्रादीनां च करणत्वं भासयतीत्यर्थः ।

**आत्मा ज्ञानमय** इत्यत्र **गुणाश्रया अन्ये** इति । सुषुप्त्यादिगुणाश्रया अन्ये बुद्ध्यादय इत्यर्थः । तदुक्तम् । 'बुद्धेर्जागरणं स्वप्नः सुषुप्तिरिति वृत्तय'
१०–४४–३२
इति गुणमध्यास्तिस्रो वृत्तय इति वृत्तिभेदा एकादशस्कन्धे उक्ताः । 'सत्त्वाज् जागरणं विद्याद्रजसा स्वप्नमादिशेत् । प्रस्वापं तमसा जन्तोस्तुरीयं त्रिषु सन्ततमिति' । ननु यदि सुषुप्त्यादिगुणवृत्त्या आत्मा ईयते इति वक्तव्यम्, तदा मूले गुणवृत्तिभिरीयते इति कथं नोक्तं तत्र मायावृत्तिभिरीयते इति कथने च कोभिप्राय इति चेत् तत्राहुः **तिसृष्वपीत्यादिना** । सुषुप्त्यादित्रिसृष्वपि वक्ष्यमाणरीत्या परमानन्दस्फूर्त्यादि अलौकिकसामर्थ्यं मायाया एव इति ज्ञापनाय मायाग्रहणं । मायाप्यत्र लीलोपयोगिनी ज्ञेया । अतः सुषुप्तौ आन्तररमणेन परमानन्दस्फूर्तिं गोपिकानामेव सा करोतीति ज्ञायते । **स्वप्ने** इति तथा स्वप्ने लीलोपयोगिनानाविधपदार्थानां स्फूर्तिमपि तासामेव करोति । **चतुर्विधपुरुषार्थसिद्धिरिति** तथा जागरणदशायां चतुर्विधपुरुषार्थसिद्धिः वृत्रचतुःश्लोकीव्याख्याने कारिकासु श्रीमदाचार्यचरणैः पुष्टिमार्गीया उक्ता । 'पुष्टिमार्गे हरेर्दास्यं धर्मोर्थो हरिरेव हि । कामो हरेर्दिदृक्षैव मोक्षः कृष्णस्य चेद् ध्रुव'मिति । तानपि माया करोतीति तत्रैव 'त्वन्माययात्मात्मजदारगेहेष्वासक्तचित्तस्ये'त्युक्तम् । एतत्सर्वं हृदिकृत्य टिप्पण्यां श्रीमत्प्रभुचरणैः **स्वापाद्यवस्थावत्त्वेनापीत्यादिनोक्तम्** । एवं सुबोधिन्यां मायाया वृत्तिभेदा उक्ताः । मूले ईयते इति पदस्यार्थमन्वयव्यतिरेकेणाहुः **अत्रेत्यादिना** । **सर्वत्रेति** सुषुप्त्या-

दिषु सर्वत्रेत्यर्थः । आत्मनो व्यतिरेकस्तु सुषुप्त्यादिवृत्तीनां परस्परव्यतिरेककथनेन सूचयन्ति **एकस्यामित्यादिना** । **तद्धर्माणां** चेति आनन्दादिधर्माणां चेत्यर्थः ।

**येनेन्द्रियार्थानित्यस्याभासे साधनाकाङ्क्षायामिति** लोकस्य साधनाकाङ्क्षायाम् । तदेवोक्तं टिप्पण्यां । **लोकस्य तदपगमे** इत्यादि । **येनेन्द्रियार्थानि-**
१०-४४-३३
त्यत्र । **यस्मिन् विद्यमाने ध्यानमावश्यकमिति** । मनसि विद्यमाने विषयध्यानमावश्यकमित्यर्थः । **विनिद्रः प्रतिपद्यते** इत्यत्र । **अवस्थाद्वयं समीचीनम्** । **आनन्दोभिव्यज्यत** इति । सुषुप्तिस्वप्नरूपावस्थाद्वयं यदा उभयनिरोधेन समीचीनं भवति तदा आनन्दोऽभिव्यज्यते इत्यर्थः । तथा च उभयनिग्रहकर्तॄणां जीवानां गोपिकानां लीलाविषयिणी प्रतीतिर्यदा जायते तदा आनन्दोभिव्यज्यते इत्युक्तं भवति, तेन नन्वित्याद्याशङ्का टिप्पण्युक्ता परिहृता ज्ञेया । **पुरुषार्थाश्चान्यत्रे**ति । जागरणदशायां पुष्टिमार्गीयचतुर्विधपुरुषार्थाः पूर्वश्लोके वृत्रोक्ता मुख्याधिकारिसमानां न सर्वेषां भवन्तीत्यर्थः । नन्वेवं तर्हि **स्वप्न एव व्यर्थ** इति कथने कोभिप्राय इत्याशङ्क्य **स्वप्न एवे**ति एवकारकथनेन लौकिकस्वप्न एव व्यर्थ इति सूचयितुं अलौकिकस्वप्नवैयर्थ्यापगमाय उभयनिरोधे विनिद्रः सन् इति निद्रादिदोषरहितः सन् व्यतिरिक्तमात्मानमयमस्मीति प्रतिपद्यत इत्यन्वयः कर्तव्यः । **व्यतिरिक्तमात्मानमिति** । प्रापञ्चिकेभ्यो जीवेभ्यो व्यतिरिक्तानां गोपिकानामात्मानम् । अयमस्मीति प्रतिपद्यते इति एतासु गोपिकासु अयं भगवानेवेति जानातीत्यर्थो टिप्पण्यभिप्रायेण ज्ञायते, अत्र संघात इति पाठस्तु केनचिद् विचारकेण निक्षिप्त इति प्राचीनपुस्तकविचारेण प्रतीयते ।

**एतदन्त इत्यत्र** । सु० **शास्त्रादिति** । 'एकं शास्त्रं देवकीपुत्रगीत'मिति वाक्याद्भगवच्छास्त्रमेकादशस्कन्धस्तत्रभिक्षुगीतायाम् । 'दानं स्वधर्मो नियमो यमश्च
१०-४४-३४
श्रुतानि कर्माणि च सद्व्रतानि । सर्वे मनोनिग्रहलक्षणान्ता परो हि योगो मनसः समाधि'रिति शास्त्रात्साधनानां मनसः समाधिरन्तः उक्त इत्यर्थः । **प्रयोजनमिति** । 'यतो यतो निश्चरति मनश्चञ्चलमस्थिरम् । ततस्ततो नियम्यैतदात्मन्येव वशन्नयेद्' इति गीतासु भगवद्वाक्याद्योगस्य तु मनोनिग्रह एव प्रयोजनमुक्तमित्यर्थः । **अध्यासं निवर्तयन्नि**ति आत्मानात्मविचारेण देहादीनामध्यासं निवर्तयन् प्रथमं देहाध्यासे मूलकारणं मन एव **व्यावर्तयती**ति संघातात्पृथक् करोतीत्यर्थः । **मनीषिणामिति** पदस्य सूचितार्थस्तु मनस ईषिणो मनीषिण इत्युक्तः । ननु आत्मज्ञानार्थिनां कथं मनस ईषणा इच्छा इत्याशङ्क्याहुः आत्मसम्बन्धः **साक्षान् मनस्येवे**ति तदुक्तं गीतायाम् । 'बुद्धिग्राह्यमतीन्द्रिय'मिति । अतो मनसः प्राप्त्यात्मप्राप्तिरावश्यकीति भावः । **हेतुरप्युक्त** इति एवं मनीषिपदस्यात्मप्राप्तेहेतुरप्युक्त इत्यर्थः । **इन्द्रियसंयमो गृहस्थस्येति** तदुक्तं कश्यपेन दितिं प्रति 'यामा-

श्रित्येन्द्रियारातीन् दुर्जयानितराश्रमैः । वयं जयेम हेलाभिर्दस्यून् दुर्गपतिर्यथे'ति । **हेतुं वदन्निति** । मनोनिग्रह एव विश्रान्ता भवन्तीति हेतुं वदन्नित्यर्थः । **सङ्गतेष्वीति** वेदे प्रविष्टाः प्रमाणोक्ता धर्मा इत्यर्थः । **लौकिकवत्तत्रास्थिरा** इति । यथा लौकिकाः लौकिकफलार्थमनेकानि साधनानि कुर्वन्ति तत्रास्थिरा भवन्ति तथात्रापि मनोनिग्रहार्थमनेकानि साधनानि कुर्वन्तोप्यस्थिरा भवन्ति । **तदपगमाकाङ्क्षिण** इति अस्थिरापगमाकाङ्क्षिणः । **सन्मार्गप्रवृत्ता** इति निवृत्तिनिष्ठा भवन्ति । **मध्ये स्थितिमलभमाना** इति त्यागेपि साधनसमाप्तिमलभमानाः । **आत्मानमिति** जीवात्मानं मोचयन्तः । **तन्निग्रहे** मनोनिग्रहे एव विश्रान्ता भवन्ति इति । यथा नद्यः समुद्रे विश्रान्ता भवन्तीत्यर्थः ।

**यत्त्वहमित्यत्र** । **दृष्टिं प्रक्षिपन्तीति** । स्वधर्मान् भगवति स्थापयितुं न तु भगवद्धर्मान् ग्रहीतुमित्यर्थः । तदेवोक्तम् । स्वधर्मानित्यादिना । **व० ले० स्वरूपत**
१०-४४-३५
इति गोपिकानां स्वतः स्वरूपतो न सम्भवतीत्यर्थः । **सम्बन्धस्येति** बहिःस्थितस्येत्यर्थः । तत्साधकत्वेनेति । मनसः सन्निकर्षत्वेन फलत्वम् । तद्भगवता कर्तुं शक्यम् । **निवृत्ताविति** सुबोधिन्या**मेतत्त्वित्यारभ्य स्थापयतीत्यन्तेन** विवृतमित्यर्थः । **फलमिति** मयि दूरे स्थिते दृष्टेरसम्बन्धसम्पादकत्वान् मनसः सन्निकर्षमात्रं फलं नेत्यर्थः । **रतीति** आन्तरेव 'ज्ञात्वात्मानमधोक्षज'मित्यत्रोक्ता ज्ञेया ।

**यथा दूरचरे इत्यत्र** । टिप्पण्यामाभासे **एवं सतीति** । **यथा भूतानीत्यत्र** दृष्टान्तद्वयेनैतासां देहेन्द्रियाणां भगवदात्मत्वेन वियोगाभावे साधिते सति
१०-४४-३६
**विशेषाभावादिति** । यथा पूर्वोक्तप्रकारेण देहेन्द्रियाणां भगवदात्मकत्वे सति वियोगाभाव उक्तः तथा बहिःप्रकटस्वरूपस्यापि वियोगाभावः । एवं यदा उभयत्रापि विशेषाभावस्तदा बहिःप्रकटितस्वरूपेण सन्निकर्ष एव कुतो न साध्यते । **सु० यथा दूरचरे इत्यत्र** । अस्थिरे इति मूले चरे इत्यस्यार्थो ज्ञेयः । **अन्यथेति** । प्रिये दूरे वास्थिरे सतीत्यर्थः । **स्वयं गच्छेदिति** अदूरे सति प्रेष्ठस्याग्रे स्वयं गच्छेदित्यर्थः । **निराशो वा भवेदिति** प्रेष्ठस्य स्थिरत्वज्ञाने सति नागमिष्यतीति निराशो भवेदित्यर्थः ।

**मय्यावेश्येत्यत्र टिप्पण्याम्** । बहिरनुसन्धाने त्विति संयोगे । **तदेवेति** पूर्वोक्तममानुध्यान एव यथा शीघ्रमेव फलं साधयति । तथैवेति अधुना विप्रयोगेपि
१०-४४-३७
ममानुध्यानेनान्तरेव शीघ्रमेव फलं भविष्यतीत्याहेत्यर्थः । **तथेति** ता ऊचुरुद्धवं प्रतीत्यर्थः । **सन्देशपदमिति** 'तत्सन्देशागतस्मृती'रिति सन्देशपदमित्यर्थः । **एतेनैवेति** ईश्वरभावेनैव वियोगं सहन्त इत्यर्थः । **एवमेवेति** यथास्मान् वियोगरसानुभवं कारयति तथा प्रभुः स्वयमप्यस्मद्वियोगरसानुभवं करोतीति दिक् । **टि० कारिकायाम्** । **व्रजतरुमिति** व्रजे
४२-४३

तरुरिव भक्तानामुपकाराय स्थायिभावेन स्थिता व्रजभक्ता इत्यर्थः । अथवा श्रीमद्गोस्वामिचरणा अपि तथैव स्थायिभावेन स्थिताः । तदेवोक्तं नामरत्ने प्रियवृन्दावनाचलाय नम इति ।

**या मया क्रीडतेत्यत्र** । ननु अवश्यप्रतिबन्धरूपदुरितमुपक्षीणमित्युक्तम् । तत्केन प्रकारेणोपक्षीणमित्याकाङ्क्षायामाहुः दुष्टे एव देहनिराकरणे एवोपक्षीणमिति
१०-४४-३८ योज्यम् । प्रतिबन्धरूपदेहक्षये दृष्टान्तमाहुः **कण्टकेनेत्यादिना** । कण्टके- नोक्तप्रतिबन्धकपतिरूपकण्टकेन सायुज्यप्रतिबन्धकदेहरूपकण्टकोद्धरणवदित्यर्थः । **मदुक्त- प्रकारेणेति** 'मय्यावेश्यमनःकृत्स्नमि'त्यत्र मनसः कृत्स्नतापूर्वकस्मरणप्रकारेणेत्यर्थः ।

**एवं प्रियतमादिष्टमित्यत्र** । टिप्पण्याम् । **एतेनैवेति** ईश्वरभावत्वेनेत्यर्थः । तथा च ईश्वरत्वात्कामादिभावसहने सामर्थ्यं सूचितम् । तदेवोक्तम् । कच्चि-
१०-४४-३९ द्गदाग्रज इत्यत्र (१०-४४-४१) **सु०** अर्चितपदस्य सूचितार्थकथनेऽ- स्माभिरिति आरभ्य कामाभावः सूचित इत्यन्तेन ईश्वरत्वाद् भगवति विरहसहने सामर्थ्यं सूचितमिति भावः । **पु० प्र० उपदेशे** सतीति । ततस्ताः कृष्णः सन्देशैरिति ( १०-४४-५४ ) उपदेशे सति पञ्चदशकला इत्यर्थः । **मानसीनत्वादिति** 'ता मन्मनस्का' इति गोपिकानां भगवतो मानसीनत्वमित्यर्थः । **षोडशकलत्वादिति** चन्द्रस्य षोडशकलत्वं तदभेदान्मनसोपि तथात्वमित्यर्थः । **एकस्या अतिशिष्टाया** इति अमायां कला चैका सदैव तिष्ठति तस्या अतिशिष्टा पञ्चदश पोषिका इति योज्यम् , **शेषा सिद्धा** इति । एवं **दिष्टयेत्यारभ्य ततस्ता** इत्यन्तं पञ्चदशश्लोकैः पञ्चदश सिद्धाः । यथा चन्द्रे एका सदैव तिष्ठति तथैवैतासां धर्मिरूपे मनसि भगवद्वशीकरणलक्षणा कला सदैव तिष्ठतीति एवं षोडश सिद्धाः ।

**दिष्टयेत्यत्र** । **भावा** इति भगवच्चरित्रात्मका भावा दोषरहिता एव पुरुषार्थ- साधकाः न त्वक्रूर आगतः किं वेत्यत्रोक्ताः दोषसहिताः पुरुषार्थसाधका
१०-४४-४० इत्यर्थः । **सिद्धानेव कीर्तयन्तीति** । कंसादिहननेन सिद्धानेव कीर्तयन्ती- त्यर्थः । अत्रेदं प्रतिभाति । **मापुर्मद्वीर्यचिन्तयेत्यत्र** **सु०** अतो मत्पराक्रमस्यैव चिन्ता न तु दोषपुरःसरं ममेति भाव उक्तः । तत्र श्रीपुरुषोत्तमेन श्रीगोवर्द्धनोद्धरणेन व्रजरक्षणपराक्रमोचितं व्रजे कृतं तदनुक्त्वा मथुरायां व्यूहावृतेन कृतस्य कंसहननादेः कथनस्यायमाशयः । विप्रयोगे यथा मधुपकितवेत्यादिचरित्रकथनेपि पुरुषार्थसिद्धिस्तथापि भगवता निषेधिता, अतश्चतु- र्दशविद्यारूपत्वाद्गूढाभिमर्षेण वक्रोक्त्या कंसहननरूपं पराक्रमं वर्णयन्तीति भावः । ननु किमत्रामर्षेण वक्रोक्तिरित्याशयेनाहुः अस्मदादिभाग्येन कंसो हत इति । यदा तदर्थं गतस्तदास्माकं वियोगो जात इति गूढाभिमर्षेण वक्रोक्तिरिति भावः । **तमिति** तं कंसहन- नात्मकं गुणम् । पूर्वं हि ता अक्रूर इतिवाक्ये अक्रूरेण स्वस्वामी घातितो भगवता मातुलो हत इति

दोषं गृहीतवत्यः । **तस्येति** कंसहननात्मकगुणस्य । **प्रतिप्रसवोत्रे**ति वास्तवोर्थो अस्मिन् श्लोके निरूप्यते इत्यर्थः । **अहित** इति स्वस्य सर्वेषामित्यर्थः । तदेव मूले कंसनामनिरुक्तिः । न स्वस्य नान्येषामिति । कंसनामनिरुक्तिस्तु **स कं, न कस्यापी**ति, षष्ठयर्थे द्वितीया ज्ञेया । **दिष्ट्येत्य**त्र । पु० प्र० **पूर्वसिद्धोत्र को वा भाव** इति । दोषरहित इत्यादिसुबोधिन्युक्तो भाव इत्यर्थः । **अग्रिम** इति अग्रिमश्लोक इत्यर्थः । **सु० कालातिक्रम** इति वृद्धा अपि यादवा दृष्ट्या भगवन्मुखपानेन युवानो जाता इति कालातिक्रम इत्यर्थः । तदेवोक्तं 'तत्र प्रवयसोप्यासन् युवानोतिबलौजसः । पिबन्तोक्षैर्मुकुन्दस्य मुखाम्बुजसुधां मुदा' इति । एवं यादवानां कालातिक्रमो जातस्तेनापि कास्माकं फलसिद्धिरिति गूढाभिमर्षेण वक्रोक्तिर्ज्ञेया ।

**कच्चिद्गदाग्रज इत्य**त्र । सु० **लोकः पूजितपूजक इति** । सर्वोपि लोकः पूजितस्यैव पूजां करोतीत्यर्थः । ननु कामाभावे कथं प्रवृत्तिरित्याशङ्क्याहुः
१०-४४-४१ **कुत्सितेपीत्या**दिना । **कदाचित्पुरुषः प्रवर्तेत** इति । कामाभावेपि पुरुषमात्रस्य प्रवृत्तिर्दर्शिता । एवं यथास्मास्वधुना कामाभावस्तथा पूर्वमपीति । **इत उत्तमा** इति । अस्मत्सकाशादप्युत्तमाः पुरस्त्रिय इति गूढाभिमर्षेण वक्रोक्तिर्ज्ञेया । **सा च** पु० प्र० अस्मिन् श्लोके 'मधुप कितवे'त्यस्य **प्रतिप्रसव** इत्युक्तया तत्र **प्रतिप्रसव** इति यथा 'मा स्पृशाङ्घ्रि'मिति स्वचरणस्पर्शनिषेधोक्तिः, 'तन्मानिनीनां प्रसादं वहत्वि'ति तत्प्रशंसोक्तिर्वक्रोक्तिस्तथात्रापि **प्रतिप्रसव** इति स एवार्थः ।

**कथमित्य**त्र । **नागरको बन्ध** इति । 'उत्तानितायाः स्मरमन्दिरोपरि स्थितस्त-
१०-४४-४२ दूरूद्वितयं गृहीत्वा । संस्थाप्य बाह्यं कटितो रमेत कान्तस्तदा स्यात्किल नागराख्यः' । **न भवत्येवे**ति स्वकीयासु रसाभावान् नागरको बन्धो न भवत्येवेत्यर्थः ।

**अपि स्मरतीत्य**त्र । **इन्द्रत्वायैवे**ति । ननु यदि भगवति कामाभावस्तदा युष्म-
१०-४४-४३ दिन्द्रः कथं जात इत्याशङ्कायां यथा गवादीनामिन्द्रस्तथास्मदीयोपीन्द्रो, न तु कामदानार्थमिति वक्रोक्तिः । तदुक्तं **पु० प्र० एतेन कामाभावः पुष्टीकृत** इति ।

**ताः किमित्य**त्र । **व० ले० गोपिकेवेत्युक्ते** इति, अहो वयं गोपिकातुल्या उक्ता इति हेतोः । **तस्या** इति । तदा तस्याः पुरस्त्रियाः परितोषो जातः ।
१०-४४-४४
पु० प्र० **इदं वाक्यमिति** साधनरहिता अपि कृतार्था भविष्याम इति अस्मिन् श्लोके सुबोधिन्युक्तवाक्यमित्यर्थः ।

**अप्येष्यतीत्यस्याभासे** । **तथा भविष्याम** इति अन्तर्निष्ठा भविष्याम एवेत्यर्थः । **भोगमिति** अस्मदर्थे भोगं किमर्थमङ्गीकृतवानित्यर्थः । ननु यूयमे-
१०-४४-४५
वात्रागच्छन्त्वित्याशङ्क्याहुः **तत्रेत्यादिना** । नन्वेतासां कथं शूद्रत्वमिति शङ्कायामाहुः **शुचा चेत्यादिना** । **द्रवमाणा** इति शोकेन परिप्लुता जाता इत्यर्थः । अत

एव साम्प्रतं शूद्रा एव । अत्र शूद्रत्वं यौगिकं, न तु जातिशूद्रत्वं । शुचा शोकेन द्रवन्तीति शूद्रा इति निरुक्त्या शूद्रत्वं ज्ञेयम् । तदुक्तं व्याससूत्रे । 'शुगस्य तदनादरश्रवणात्तदाद्रवणात् सूच्यते ही'ति । (१-३-३४) तदर्थस्तु अणुभाष्ये प्रथमाध्याये ज्ञेयः ।

१०-४४-४७ **किमस्माभिरित्यत्र** । **महत्कार्यमिति** । नागरीणां समाधानमित्यर्थः ।

**परं सौख्यमित्यत्र । सुबोधिन्याम्** । **तज्जानतीनामिति** । प्रकारतः फलतः उपपत्तितश्च जानतीनामिति योज्यम् । तत्र आशा हि सर्वेषां दुःखहेतुरिति
१०-४४-४८ **प्रकारतो जानतीनां**, आशाभावे 'यथा सञ्छिद्य कान्ताशां सुखं सुष्वापे'ति **फलं जानतीनाम्** । 'आशाया अन्तो नास्ती'त्युपपत्तितश्च **जानतीनामित्यर्थः** । **परं सौख्यमित्यत्र** । पु० प्र० । **अवैदिकत्वादित्यस्याभासे** । **तदेव कर्तव्यमाशायाःसत्यत्वायेति** कृष्णाशायाः सत्यत्वाय वैदिकं साधनं कर्तव्यमित्यर्थः । **स्वकृतसाधनस्य तथात्वादिति** । गोपिकात्वात्स्वकृतसाधनस्य अधिकाराभावादित्यर्थः । **तथेति** । कृष्णाशा सत्या भवेद्वा न भवेदिति सन्देह इत्यर्थः । तदेवोक्तं सुबोधिन्या**मवैदिकत्वादित्यादिना** । ननु गोपिकात्वेपि श्रुतित्वात्कथमधिकाराभाव इत्याशङ्क्याहुः **कृष्णाशा** इत्यादिना । तथा च 'नायमात्मा प्रवचनेन लभ्य'इति श्रुत्या 'नाहं वेदै'रिति भगवद्वाक्याच्च पुरुषोत्तमप्राप्तौ सन्देहः । एवं सति 'यमेवैष वृणुते'इति 'भक्त्यात्वनन्यया शक्य'इति वाक्यादस्मदनन्यभक्त्या स्वयमेव प्राप्तो भविष्यतीति मूले 'कृष्णे तथाप्याशा दुरत्यये'त्युक्तम् । ननु तथापि श्रुतीनां कथमज्ञानमित्याशङ्क्याहुः पु० प्र० **तथा चेत्यादिना** ।

**क उत्सहेत संत्यक्तुमित्यत्र** । **सु०** **पित्रादिगृहे** इति । यदि **पित्रादिगृहे लब्धप्रतिष्ठाः स्थिता अपि औदासीन्येन तिष्ठन्तीति** पतिगृहे इति
१०-४४-४९ शेषः, इति लोकप्रसिद्धोर्थ उक्तः प्रतिभाति । ननु कामाभावेपि कथमौदासीन्येन स्थितिरित्याशङ्कायां दृष्टान्तमाहुः **धर्मपरिपालिका इवेति** यथा धर्मपरिपालिकाः पतिव्रताः कामाभावेपि पतिगृहे तिष्ठन्ति तथा पूर्वोक्ताः साधारणा अपि तिष्ठन्तीत्यर्थः ।

**पुनः पुनः स्मारयन्तीत्यत्र** । **स्मारयिष्यन्तीति** सरितादयः **कृष्णं स्मारयिष्यन्तीति** भयात् सरितादयः स्मृता एव भवन्ति । अतः कृष्णं पुनः पुनः
१०-४४-५१ स्मारयन्तीत्यर्थः । **श्रीनिकेतैस्तत्पदकैरित्यस्यार्थकथने** नन्विदानीं चरणदर्शनं कथमित्याशङ्कायां मूले तत्पदस्यार्थमाहुः **किञ्चेत्यादिना** । **तत्र असाधारणैरिति** असाधारणत्वादधुनापि व्रजभूमिषु पदानि दृश्यन्ते । **हृदयादिषु स्थापितैर्वा** इति भगवता हृदयादिषु स्थापितानि दृश्यन्ते इत्यर्थः । **सानुभावैरिति** दृष्टादृष्टोपायेन बलिष्ठैः सानुभावैः कृत्वा विस्मर्तुं नैव शक्नुम इति योज्यम् । तत्र दृष्टोपायः सर्वत्रोद्धतानीत्यादिना ज्ञेयः, अदृष्टोपायस्तु हृदयादिषु स्थापितैरित्यादिना ज्ञेयः ।

**हे नाथेत्यस्याभासे** । **लौकिकेति** एतासां लौकिकवैदिकप्रकारपरित्यागे ।
१०-४४-५३ 'यदा यस्यानुगृह्णाति भगवानात्मभावितः । स जहाति मतिं लोके वेदे च परिनिष्ठिता'मिति चतुर्थस्कन्धे प्रचेतसां वाक्येन यद्यप्यनुग्रहस्य लक्षणमुक्तं, तथापि दुःखसागरादुत्तारयितुं प्रार्थना दैन्येनेति भावः । तत्र लौकिकदुःखं रमणाभावरूपं, वैदिकदुःखं पत्यादिपरित्यागपापजन्यमिति ज्ञेयम् । तत्सर्वं व्याख्याने द्रष्टव्यम् । **हे नाथेत्यत्र** । **व० ले० मानुषेति** । 'स एको मानुष आनन्द' इत्यादिक्रमेणोत्तरोत्तरं वर्धमानत्वं तैत्तिरीयोपनिषदुक्तं ज्ञेयम् । सु० **साप्यस्मत्प्रकारेणैवेति** । सा लक्ष्मीरपि रमणेनैव साध्या भवतीति भावः । **न पोषणादिकमिति** रमात्वाद्रमणं त्वपेक्षत एवेति भावः । **तुल्यत्वादिति** नाथत्वेन तुल्यत्वात् । **दोषा गुणा** इति दोषा रमणेच्छादिरूपाः, **गुणास्तन्निष्ठमनोवृत्तिरूपा** इति भावः ।

**ततस्ता इत्यत्र** । ह० **टिप्पण्याम्** (पृ.२३८) **परिचयं प्राप्येति** ज्ञात्वेत्यर्थः ।
**पिण्डितमिति** एकीकृत्य अर्थमाहुरित्यर्थः । **तदात्मकस्येति** गोपिका-
१०-४४-५४ त्मकस्येत्यर्थः । **तथानुभवाभावादिति** भगवता ज्ञानोपदेशस्मारणेपि हृदि प्राप्तस्वरूपानुभवाभावात् । **तूष्णीं स्थितिरिति** नोद्धवस्य पूजाकरणमित्यर्थः । **धर्मात्मक** इति धर्मात्मको मथुरायां स्थितो भगवान् यः संयोगात्मकस्तस्य तापकार्यरूपो यो विलापः स प्रथमपर्यायः पुनः श्रवणेन निवृत्त इति भावः । **तद्भाव** इति अधोक्षजपदभावो बोधित इत्यर्थः ।

पु० प्र० **तथेति** इन्द्रियाद्यध्यासनिवृत्त्या प्रतीतमित्यर्थः । **तदभाव** इति प्रतीताभाव इत्यर्थः । **द्वितीयेनेति** 'यथा भूतानी'ति श्लोके । **प्रथमेनेति** 'भवतीना'मिति श्लोकेनेत्यर्थः । **तथेतीति** विरहाभाव इत्यर्थः । नन्वेवं यदि सुबोधिन्यां स्वप्रकाशत्वेनेत्यादिस्तस्यार्थष्टिप्पण्यामिन्द्रियादिप्रकाश्यरूपोपि भगवानित्युक्तः, तदेव 'भवतीनां वियोगो मे'इत्यादिसन्दर्भेणापि एतासां देहेन्द्रियादिरूपोऽपि भगवानित्युक्तं, तदा पुनरुक्तौ को विशेष इत्याशङ्क्याहुः **अन्यथेत्यादि** । **अध्यारोपन्यायेनेति** । यथा उपासनामार्गे अध्यारोपापवादे आवाहनविसर्जनन्यायेन प्रतिमादिषु देवाविर्भावो जायते इति वाक्यमात्रेण प्रतीतिः स्यात्, न तु साक्षात्प्रतीतिः, तथा भवतीनामित्यादिभगवद्वाक्येनापि एतासां देहेन्द्रियरूपोपि भगवानिति प्रतीतिमात्रः स्यात्, अत्र तु स्वप्रकाशकत्वेन आत्मानं ज्ञापितवानिति विशेषः ।

**उवासेत्यस्याभासे** । **सु० कोमलकण्टकन्यायेनेति** यथा कोमलकण्टकः पुनः
पुनः आवृत्त्या प्रविश्य तिष्ठति तथा । **अयं भाव** इति पूर्वोक्तो 'ज्ञात्वा-
१०-४४-५५ त्मानमधोक्ष'मिति पदोक्तो भाव इत्यर्थः । **पूर्वभावेनेति** 'मधुप कितवे'त्यादिभावेनेत्यर्थः । **पूर्ववासनयेति** । पूर्वोक्तत्रिदोषवासनया भगवता सह भेदः स्फुरतीत्यर्थः । कृष्णलीलाकथा गायन्तित्यस्याभासमवतारयन्ति **यावदित्यादिना** । **स भाव** इति

पूर्वश्लोकोक्तभाव इत्यर्थः । **सजातीयप्रचयसंवलितमिति** ताव'द्भवतीनां वियोगो मे' इत्यादिदशश्लोकप्रचयसमूहसंवलितं संवर्तमानम् । **एतदेवावर्त्यमानं ज्ञानमिति** पुनः पुनरावर्त्यमानं ज्ञानं । **भेददुःखानुत्पादने समर्थमिति** । अत एव उद्धवः स्थित्वा पुनःपुनरुपदिष्टवानिति भावः । ननु पुनःपुनरभेदोपदेशेपि कथं भेदज्ञानमित्याशङ्क्याहुः **देशादीत्यादिना** । **देशादिधर्मैरिति** । यदा बहिर्दृष्टिर्भवति तदा वयं गोकुले स्थिताः, भगवान् मथुरायां स्थित इति **अन्तःकरणावरणे** इत्यर्थः । **योगसमुदायाभ्यामिति** । लौकिका इत्यादित्रयः योगार्थेषु प्रतिपाद्यन्ते । कृष्णलीलाकथा गायन् सर्वमेव गोकुलं रमयामासेति समुदायार्थेषु प्रतिपाद्यन्ते इति योज्यम् ।

**एताः परमित्यत्र** । **सु० रूढभावा** इति प्रादुर्भूतभावाः प्रादुर्भावार्थकरुहधातोः प्रयोगोयमित्यर्थः । नन्वेवं मूले निखिलात्मनि इत्युक्त्या एतासां भगवति
१०-४४-५९ ज्ञाननिष्ठा भविष्यति तदा 'न ज्ञानं न च वैराग्यं प्रायः श्रेयो भवेदिहे'ति वाक्योक्तज्ञाननिष्ठारूपो दोषो भविष्यतीत्याशङ्कायामाहुः **सर्वात्मत्वेनेत्यादिना** । **निर्दोषेति** पूर्वं गोविन्दपदस्यार्थकथने गोविन्दे स्वकीयत्वेन ज्ञाते इत्युक्त्या निर्दुष्टपूर्वभावनिष्ठा एव, अतो नैतासां ज्ञानमार्गनिष्ठत्वशङ्केति भावः । ननु विदेहकैवल्याद्यवस्थाप्राप्तानां मुक्तानां कस्यां न्यूनतायामेतद्भाववाञ्छेत्याशङ्क्य बहिःसंवेदने एव न्यूनतेत्याहुः **अवश्यमित्यादिना** । **पु० प्र० यो हीत्यस्याभासे स्वास्थ्येति** । योगादयः स्वास्थ्यसम्पादका अत उत्कृष्टत्वादतो योगाभ्यासयुक्तानां वसिष्ठादीनां कथं कर्मनिष्ठतेत्याशङ्कायामाहुरित्यर्थः । **यो हीति** यो हि दुष्टं मन्यते स दुष्ट इति निर्धारेण कर्ममार्गीयाणां प्रपञ्चासक्तानां दुष्टत्वं सिद्धमिति । ननु योगाभ्यासयुक्तानां वसिष्ठादीनां कथं कर्मासक्त्या दुष्टत्वमित्याशङ्कापरिहारस्तु तेषां योगादिनिष्ठापि यजमानाद्यर्था, अन्यथा द्वादशवर्षपर्यन्तं गङ्गाया जलमध्ये तपश्चर्यां कृत्वा कथं विश्वामित्रेण सह युद्धं कुर्यात् । एतासां त्वन्तर्निष्ठायां बहिर्निष्ठायामपि पुरुषोत्तमपरत्वमिति महान् विशेष इति भावः । अतः 'एताः परं तनुभृत ' इति युक्तमुक्तम् । ननु तर्हि कर्मादीनां कथं प्रशंसेत्याशङ्क्याहुः **सु० तत्तत्प्रकरणेत्यादि** ।

**क्वेमाः स्त्रिय इत्यस्याभासे** । **व्यभिचारादिति** ब्रह्मजन्माभावेपि तासु तथावस्थादर्शनादित्यर्थः । **अहल्येति** गौतमस्त्रीत्यर्थः । **पु० प्र० कृष्णे**
१०-४४-६० **क चेति** । असम्भावनादोषग्रस्तभाव इत्यर्थः । **दृष्टान्तेति** । यथा भर्त्रा व्यभिचारिणी त्यज्यते, तथा भगवता न त्यक्ता इति भगवतो महदैश्वर्यमिति भावः ।

सु० स्व० **अन्यत्रेति** धर्मशास्त्रे इत्यर्थः । **उक्तन्यायेनेति** । अत्रायमाशय इत्यादि उक्तन्यायेनेत्यर्थः । **तदार्षमिति** धर्मशास्त्रमार्षमित्यर्थः । **इतीति** इति हेतोरित्यर्थः । **धर्मशास्त्रमिति** । धर्मशास्त्रं प्रतीत्यर्थः । **न तद्बाधकमिति** तद् वात्स्यायनीयं यथा न बाधकमित्यर्थः । एवं वात्स्यायनीयं प्रति धर्मशास्त्रमपि न बाधकमित्याहुः **न वेत्यादिना** ।

**तद्विरुद्धोपदेशेनेति**। तथा तद्वात्स्यायनीयमप्यार्षत्वात् तद्धर्मशास्त्रविरुद्धोपदेशेन वात्स्यायनीये धर्मशास्त्रं बाधकं न इत्यर्थः। **न हीति** उभयोरार्षत्वेन अबाधकत्वं नहीति न वक्तव्यं, पूर्वोक्तं भिन्नविषयत्वान् न बाधकं इति च वक्तव्यमिति योज्यम्। नन्वेवमुभयोरार्षत्वे को दोष इत्याशङ्कैवं परिहरणीया। तथा च धर्मशास्त्रीयविहितनिषिद्धाङ्गीकारे सति भक्तिमार्गीयविधिनिषेधौ बाध्येताम्। एवं वात्स्यायनीयानामपि विधिनिषेधाङ्गीकारे धर्मशास्त्रीयविधिनिषेधौ बाध्येताम्। अत आर्षत्वेपि नाङ्गीकार इति भावः। वस्तुतस्तु धर्मशास्त्रीयाणामपि भगवद्धर्मनिरूपणे तात्पर्यम्। तदेवोक्तं फलप्रकरणस्य प्रथमाध्याये 'यत्पत्यपत्य' इत्यस्य सुबोधिन्याम्। 'अतः पत्यादिसेवाविधायकं च शास्त्रं त्वत्सेवामेव विधत्ते' इति। एवं भरतवात्स्यायनादीनामपि संगीतशास्त्रकामशास्त्रनिरूपणेपि भगवद्धर्मनिरूपणे तात्पर्यम्। तदप्युक्तं फलप्रकरणस्य पञ्चमाध्यायारम्भे सुबोधिनीकारिकायां **व्याख्याने टिप्पण्यां** 'नन्वि'त्यारभ्य 'बुध्यस्वे'त्यन्तं द्रष्टव्यम्। अतो न कोपि विरोध इति भावः। **तदुक्तेति** धर्मशास्त्रोक्तनियमस्थाः कृतवानित्यर्थः। कथं व्यभिचारः इत्याशङ्क्याहुः **सहज** इत्यादि। सहजभर्ता भगवानेवेत्यर्थः। फलितमाहुः **अतस्तद्दुरापत्वेऽपीत्यादिना**। कथं न स्फुरतीत्याशङ्क्याहुः एतज्ज्ञापनायैवेत्यादि। **उक्तमिति**। 'दुःशीलो दुर्भग' इत्यादिना उक्तम्। **तथोक्तमिति** व्यभिचारदुष्टा इत्युक्तमित्यर्थः। **तादृशभक्तेति** रुक्मिण्यादिभक्तनिरोधार्थमित्यर्थः। तर्ह्यदित्यादीनां कथं सतीत्वमित्याशङ्कापरिहारस्तु भगवदङ्गीकारबलेनेत्याहुः **अदित्यादीनामित्यादिना**।

सु० **निवेदनानन्तरमिति**। फलप्रकरणे आत्मनिवेदनानन्तरमित्यर्थः। ननु 'अनिच्छन्त्यो ययुर्गोप्यः स्वगृहा'निति वाक्यादिच्छाभावे कथं नाश इत्याशङ्क्याहुः **बलादपीत्यादिना**। **तां रीतिमिति** रमणादिरीतिमित्यर्थः। **प्रक्रमानन्तरमिति**। निवेदनानन्तरमित्यर्थः। **अकारणक** इति ब्रह्मजन्माभावेपि भावोत्पत्तिरित्यर्थः। **विरुद्धस्य वेति** व्यभिचारादिदोषस्येत्यर्थः। **परमेश्वरत्वेति**। ईश्वरस्य नियम्याभावादित्यर्थः। **अविरुद्धमिति** ईश्वरस्य नियामकाभावादविरुद्धमपि भवेदित्यर्थः। **तथा कल्पनायामिति** ईश्वरे दोषकल्पनायामित्यर्थः। **प्रमाद एव भवेदिति** जीवे दोष एव भवेदित्यर्थः। नन्वमृतदृष्टान्ते अग्निदृष्टान्तदाने कोऽभिप्राय इत्याशङ्कायामाहुः **तथापीत्यादिना**। तत्र सजातीयकाष्ठसमूहसंवलित एव दाहहेतुर्भवति, न तु विजातीयजलसमूहसंवलितो दाहहेतुर्भवतीत्यर्थः। एवं दृष्टान्त उक्तः। दार्ष्टान्तिके तु गोपिकासदृशीनां अगदराज इव प्रसादं सम्पादयतीति ज्ञेयम्। एतदेवोक्तं **कदाचिदेवेति**। **न दोषायेति** जीवेऽन्यथाकरणेपि न दोषाय भवतीत्यर्थः। **उपयुक्त** इत्यस्यार्थकथने **समीपेति** सर्वलोके निःसन्दिग्धं समीपे अगदराजः श्रेयस्तनोति न त्वन्यत्र मिश्रित इति योज्यम्। तथा गोपिकास्वपि भगवत्सामीप्यं सर्वलोकप्रसिद्धं, नत्वन्यत्र मिश्रितं। अतः श्रेयस्तनोतीति किं वाच्यमित्यर्थः।

**द्वितीयव्याख्याने** । **पूर्वोक्तलक्षणे** इति । 'बर्हापीडे'तिश्लोकोक्तलक्षणे इत्यर्थः । **गीतोक्तन्यायेने**ति गीतगोविन्दोक्तन्यायेनेत्यर्थः । **तदुक्त**मिति गीतगोविन्दोक्तमित्यर्थः ।

**केमाः स्त्रिय इत्यत्र** । **श्रीमत्प्रभुचरणानां स्वतन्त्रलेखे** ननु यदा श्रुतिसम्मत्या एतत्सृष्टेः स्वरूपात्मकत्वेन आभिमानिकदोषः परिहृतस्तदा गोपानां पृथक्स्थितिर्भगवता किमर्थं कृतेत्याशङ्क्याहुः **रसार्थमित्यादिना** । **तत्र स्थित्यर्थ**मिति । गोपीनां स्थित्यर्थमित्यर्थः । **तथेती**ति सदोष इत्यर्थः । **उक्तोपपत्ते**रिति श्रुत्युक्तोपपत्तेरित्यर्थः । **तथोक्तहेतोरि**ति श्रुत्युक्तहेतोरित्यर्थः । **तदनन्तरमपी**ति भगवत्सम्बन्धानन्तरमपि पतिसम्बन्धस्य न सदोषत्वमिति न वाच्यमिति योज्यम् । **तत्स्वरूपातिरिक्ते** इति । तासां भगवत्सम्बन्धानन्तरं तदतिरिक्तेषु गोपेषु । **तदात्मकत्वे**ति भगवदात्मकत्वाऽस्फूर्तेरित्यर्थः । **तदनन्तरभाविन्याः कृतेरि**ति । स्थित्यनन्तरं तत्पतिना सह रमणादिभाविन्याः कृतेस्तथात्वे अशक्ये किं वाच्यमित्यर्थः । **तेन तासामतत्सम्बन्धकाल** इति । भगवता सह सम्बन्धाभावकालो न कदापीत्यर्थः । **नोक्तानुपपत्ति**रिति । आभिमानिकपतिसम्बन्धोक्तानुपपत्तिर्नेत्यर्थः । **तथात्व**मिति सदोषत्वमित्यर्थः । तत्र हेतुद्वयमाहुः **सर्वप्रमाणविरोधा**दिति द्वितीय**मन्तर्गृहगताना**मित्यादिना च । **तादृशबुद्धियुक्तत्वेने**ति जारबुद्धियुक्तत्वेनेत्यर्थः । **परमात्मपदेने**ति 'तमेव परमात्मानं जारबुद्ध्यापि सङ्गता' इति पदेनेत्यर्थः । **एतदेव ज्ञाप्यते** इति प्रतिबन्धाभावो ज्ञाप्यते इत्यर्थः । **तद्भजनस्ये**ति अन्तर्गृहगतानां भजनस्येत्यर्थः । **अतथात्वा**दिति जारबुद्धित्वादित्यर्थः । **तदधिकारानुसारेणे**ति मोक्षं फलं तत्तनोतीत्यर्थः ।

**स्वार्थपरत्वा**दिति स्वमुक्तिपरत्वादित्यर्थः । **तत्रे**ति सर्वात्मभावे इत्यर्थः । **तत्त्यागस्यापी**ति विवाहितपतिभजनत्यागस्यापीत्यर्थः । **तदभाव** इति मर्यादामार्गीयसाधनाभाव इत्यर्थः । **स्वरूपस्ये**ति भगवत्स्वरूपस्येत्यर्थः । **उभयत्रे**ति गोपिकासु पुलिन्दीषु चेत्यर्थः । **स्वभावदार्ढ्या**दिति । पुष्टिमार्गीयभगवद्भजनकरणरूपस्वभावदार्ढ्यात्तदुक्तं श्रीमदाचार्यचरणैः प्रथमव्याख्याने **प्रकृते**त्यारभ्य **नैताभिरङ्गीकृत** इत्यन्तेन । **तद्भजना**दिति । व्रजदेवीनां कुङ्कुमभजनेन पुलिन्दीनां भगवद्भजनं सिद्ध्यतीत्यर्थः । **माहात्म्यज्ञानवत्त्वेने**ति श्रीगोवर्धनादीनां सङ्गेन पुलिन्दीनां माहात्म्यज्ञानवत्त्वेनेत्यर्थः । ननु बह्वीनां पुलिन्दीनां विदुषो लोकवचनं कथमित्याशङ्क्याहुः जात्यभिप्रायेणेत्यादिपुलिङ्गनिर्देशो वेति । **विदुष** इति पुलिङ्गनिर्देशोपि पुलिन्दीनां तादृशभोग्यशरीराभावायेति योज्यम् । **पूर्वोक्तस्ये**ति पूर्वोक्तव्रजरत्नास्वगदद्दृष्टान्तो नेति ज्ञेयम् । **तथोच्यते** इति पुलिन्दीदृष्टान्ते अगदराज इत्युच्यते इत्यर्थः । **नोक्ताऽनुपपत्ति**रिति इमाः स्त्रियः पुलिन्द्यः केत्यादिपूर्वव्याख्यानोक्तेर्नासमञ्जसतेत्यर्थः । **उक्तानुपपत्तेश्चे**ति किञ्च इमा इत्याद्युक्तानुपपत्तेरित्यर्थः ।

**नायं श्रियोङ्ग** इत्यस्याभासे **अन्योन्याश्रितमिति** अन्योन्याश्रितदोषे द्वयोर्मध्ये नैकोपि निश्चयो भवति । तदेवाहुः **तत्र उत्तमकारणाभावेति** ब्रह्म-
१०-४४-६१
जन्माभावेपीत्यर्थः । **अकारणमिति** उत्तमजन्माभावे कथमिच्छेत्यर्थः । **स दोष** इति अन्योन्याश्रितदोष इत्यर्थः । **व्याख्याने स्वर्योषितामित्यस्यार्थकथने इन्द्रो**-पेन्द्रादीति । स्वायंभुवमन्वन्तरे तद्दौहित्रो यज्ञो भगवानिन्द्रो जातः । तथा उपेन्द्रादि-भावापन्नोपि बहुभिः स्वर्योषिद्भिः सह रममाणोपि अमुं प्रसादं न दत्तवानित्यर्थः । **अव-तारेष्विति** श्रीरुक्मिण्यादय इत्यर्थः । ननु व्रजवल्लवीनामित्यस्यार्थकथने तास्त्वसंवृताः । दध्यादिविक्रये सर्वत्र पर्यटनपरा इत्युक्तम् । सावस्था मर्यादायां सर्वथा निकृष्टाऽतो नैतादृश्यः काश्चन इति कथमेतासां स्तुतिरुच्यते इत्याशङ्क्याहुः । **अतो ज्ञायते इत्यादिना**। तत्र **तासामेतादृश्यवस्थापीति** दध्यादिरसविक्रयेण निकृष्टावस्थापीत्यर्थः । **प्रमाणे-ष्वस्तुतापीति** वेदादिप्रमाणेषु न स्तुतापीत्यर्थः । **सर्वोत्तमैवेति** तथापि तासामवस्था सर्वोत्तमैवेति ज्ञायते अतः स्तुतिरिति योज्यम् ।

**आसामहो** इत्यस्याभासे **ईर्ष्ययेति** अहो एतासामेतादृश्यवस्था भगवता कृता नास्माकं कृतेतीर्ष्यया इत्यर्थः । **एतदर्थमिति** एतदवस्थार्थमित्यर्थः । **न**
१०-४४-६२
**वस्तुनिरूपणे** इति गोपिकानां महत्त्वनिरूपणे तात्पर्यं नेत्यर्थः । व्याख्याने **साधनप्रकारेणैवेति** आसां चरणरजःप्राप्तिप्रार्थनापूर्वकप्रकारेणैवोत्कर्षो जातः सन् फलपर्य-वसायी भवतीत्यर्थः। **तस्य तुल्यत्वादिति** रजःसम्बन्धेनोद्धारस्य सत्त्वादिषु तुल्यत्वादित्यर्थः। **क्रमेणेति** पूर्वं गुल्मादिषु जन्म तत एतासु जन्म तदनन्तरं भगवद्भाव इति क्रमेणेत्यर्थः । **न तु भगवद्भाव** इति न त्वस्मिन्नेव जन्मनि भगवद्भाव इत्यर्थः । **उपपादितत्वादिति** क्वेमाः स्त्रिय इत्यत्र सर्वाभ्यः स्त्रीभ्यः सर्वेभ्यः पुरुषेभ्यश्चाधिक्यमुपपाद्यते इत्यादिनोपपादि-तत्वादित्यर्थः । **अन्यथा फले व्यभिचारश्चे**त्यस्य भावार्थकथने **पु० प्र०** लौकिकस्यार्य-मार्गत्वे इति । लौकिकस्य अलौकिकत्वे इत्य**न्यथा**पदस्यार्थो ज्ञेयः । फल इत्यस्या-र्थकथने । **तत्रापीति** लौकिकालौकिकार्यमार्गसमत्वे लौकिकेऽपि भगवानेव फलं भवे-दित्यर्थः । **न तु तादृशमिति** गोपिकानां फलसदृशं तत्र फलं नेत्यर्थः । ननु 'या पतिं हरिभावेन भजेच्छ्रीरिव तत्परा । हर्यात्मना हरेर्लोके पत्या श्रीरिव मोदते' इत्यत्रापि भगवत्फलं श्रूयते इति कथं न सादृश्यमित्याशङ्क्याहुः **आर्याणामिति** आर्याणां तन्मुख्य-फलानपेक्षितत्वादित्यर्थः । ननु लौकिकार्याणामपि वेदानुवर्तित्वमेतासामपि श्रुतित्वमतः कथमेतासां तन्मार्गापेक्षाभाव इत्याशङ्क्याहुः **अपेक्षिणां त्वार्यत्वाभावादिति** मुख्य-फलापेक्षाणां पुष्टिश्रुतीनां गोपिकानां त्वधुना तन्मार्गीयार्यत्वाभावान्नापेक्षेत्यर्थः । **फल-व्यभिचारादिति** एवं लौकिकालौकिकार्याणां परस्परफलव्यभिचारादित्यर्थः । **न समतेति**

अतः लौकिकार्याणां न समतेति भावः । अतो मूले युक्तमेवोक्तं स्वजनमार्यपथं च हित्वेति । सु० **भगवदुपदेशश्चेति** 'भवतीनां वियोगो मे' इत्याद्युक्तो भगवदुपदेशश्चेत्यर्थः ।

**या वै श्रियार्चितमित्यस्याभासे अङ्गभावमिति कमलादिकमिवेत्यादिना** अङ्गभावोनुपदं वक्ष्यत इत्यर्थः । **प्रमाणत** इति यत्सर्वेषां पूज्यमाराध्यं
१०-४४-६३ तत्तासां तापहारकत्वेन नियुक्तमित्याभासोक्तप्रमाणत उत्कृष्टा इत्यर्थः । **प्रमेयत** इति भगवानप्यत्यन्तवश इत्यादिना प्रमेयत उत्कृष्टा इत्यर्थः ।

**वन्दे नन्देत्यस्याभासे** । **अन्यार्थमिति** । अन्यभक्तार्थमेषा षट्श्लोकोक्ता गोपिकानां प्रशंसेत्यर्थः । **लोके** इति सर्वलोके तन्माहात्म्यं प्रसिद्धमि-
१०-४४-६४ त्युपपादयन्तीत्यर्थः । **गुणानामिति** सत्त्वस्य साधकत्वं राजसतामसयो-र्बाधकत्वं वेत्यर्थः ।

**अथ गोपीत्यस्याभासे** तादृशनिरोधमित्यर्थः । **भिन्नप्रक्रमेणे**ति पूर्वमुपदेशार्थ-मागतः अधुना स्वयमुपदेशं प्राप्त इति मूले अथेति पदस्यार्थो ज्ञेयः ।
१०-४४-६६ **व्याख्याने अनुज्ञामिति** गोपीनामनुज्ञामित्यर्थः । दानैरित्यस्यार्थकथने । **उत्पत्तेरिति** वैश्येष्वेव उत्पत्तेः स्वभावतो देयानामिति योज्यम् ।

**मनसो वृत्तय इत्यत्र** । मनस एकादश वृत्तयस्ताः सर्वाः कृष्णपदाम्बुजमेवा-श्रित्य तिष्ठन्तु इत्युक्तम् । तत्र पादाम्बुजाश्रया इत्यस्यार्थकथने अम्बुज-
१०-४४-६७ दृष्टान्तेन रूपादिचतुर्णां चरणे सद्भावात् । ज्ञानेन्द्रियचतुर्णां वृत्तयो कृष्णे भविष्यन्ति, अवशिष्टानां सप्तानां वृत्तयः केन पदेनोक्ता भविष्यन्ति इत्याकाङ्क्षायामाहुः **शब्दोन्यत्रापीत्यादिना** । **तत्र अन्यत्रापीति** शब्दोन्यत्रापि भगवता सह संलापादिषु इत्यर्थः । स्वतन्त्रतया **विनियोक्ष्यते** इति, शब्दस्य स्वतन्त्रतया विनियोगस्तु द्वितीय-स्कन्धीयपञ्चमाध्याये 'लिङ्गं यद्द्रष्टृदृश्ययो'रिति वाक्ये तदर्थस्तु श्रीधरीये शब्दस्य लक्षणं लिङ्गमिति, कुड्यान्तरितेन केनचिदुच्चैर्गजोगज इत्युक्ते गजद्रष्टा यश्च तेन दृश्यो गजस्तयोर्लिङ्गं बोधक इत्युक्तम् । तेन शब्दः कुड्यान्तरितोप्येकादशेन्द्रियविषयान् गृह्णातीत्यर्थः । स्पर्शादयस्तु त्वगादीनां सम्बन्धे सति स्वस्वविषयान् शीतोष्णादीन् गृह्णन्ति न तु सर्वेन्द्रियाणां विषयान् स्वतन्त्रतया गृह्णन्ति, तदेवोक्तम् पु० प्र० **शब्दो गुणगान-रूप** इति, गुणा इन्द्रियवृत्तयस्तेषां शब्दे गानं भवतीत्यर्थः । सु० शब्दोन्यत्रापि स्वतन्त्रतया विनियोक्ष्यते इति श्रीमदाचार्यचरणैरुक्तं तत् श्लोकद्वयस्यैकार्थत्वा'द्वाचोभि-धायिनीर्नाम्ना'मिति पदस्य संयोगपृथक्त्वन्यायेनोक्तमिति भाति इति न न्यूनता कापी-त्युक्तम् । एकादशेन्द्रियवृत्तीनां कृष्णे न न्यूनता कापीत्यर्थः । वाचोभिधायिनीर्नाम्नामित्य-स्यार्थकथने **अभिधायिन्य** इति । ननु अभिधायिन्य इति वक्तव्ये मूलेऽभिधायिनीरि-

त्यार्षप्रयोगदाने कोभिप्राय इत्याशङ्का, तत्परिहारस्तु **नाम तु** इत्यारभ्य **ज्ञापित**मित्यन्तेन कर्तव्यः । **तत्रैवे**ति भगवतीत्यर्थः । **सर्वशक्तियुक्त**मिति नाम्नां सर्वशक्तियुक्तत्वं तु कपिलस्तुतौ देवहूतिवाक्ये 'अहो बत श्वपचोतो गरीयान् यज्जिह्वाग्रे वर्तते नाम तुभ्यम् । तेपुस्तपस्ते जुहुवुः सस्नुरार्या ब्रह्मानूचुर्नाम गृह्णन्ति ये ते' इति । **गुणकर्माणी**ति अन्यस्य गुणकर्माणि न त्वेवंविधानीति योज्यम् । तदेवोक्तं **व० ले० गुणकर्मणा**मित्यादिना । ननु कथमन्यस्यैवंविधानि गुणकर्माणीत्याशङ्क्य हेतुमाहुः **पदार्थान्तरवाचकत्वं स्यादि**ति । तदेवोक्तं प्रथमस्कन्धे व्यासं प्रति नारदेन 'ततोन्यथा किंचन यद्विवक्षतः पृथग्दृशस्तत्कृतरूपनामभिः । न कुत्रचित्क्वापि च दुःस्थिता मतिर्लभेत वाताहतनौरिवास्पद'मिति तदेवोक्तं **व०ले०**पदार्थान्तरवाचकत्वं स्यादिति । **सु०छान्दसप्रयोगा**दिति छान्दसप्रयोगाद्यज्ज्ञापितं व्यासचरणैः तदेवोक्तं **व०ले०नाम्नस्त्वि**त्यादिना । **अतः सर्वं सुस्थ**मिति **प्रकरणेने**ति अत्र भवत्विति क्रियापदं यद्यपि मूले नास्ति तथापि प्रकरणेन प्रार्थना इत्यर्थः ।

**एवं संप्रार्थित इत्य**त्र । आभासे स इति जन्मोत्कर्ष इत्यर्थः । **एतद्भवती**ति कायवाङ्मनसां भगवति विनियोगो भवतीत्यर्थः । सु० **स्वोत्कर्षो वे**ति
१०-४४-६९
नन्दादीनां प्रार्थनया उद्धवेन स्वोत्कर्षो न ज्ञात इत्यर्थः । **अन्यभजनं** वेति ।
'मतिर्नः कृष्ण ईश्वरे'भवत्वित्युक्त्या नन्दादीनां पूर्वमन्यभजनं भविष्यतीति न ज्ञातम् । अत एव मूले कृष्णभक्त्येत्युक्तम् । तर्हि नन्दादीनां पूर्णत्वेपि किमर्थं प्रार्थनेत्याशङ्कापरिहारस्तु पूर्णभक्तानामयं सहजस्वभावो यत्स्वोत्कर्षं न जानन्तीत्यतः प्रार्थनाकरणमिति भावः । नन्वेवं तर्हि नन्दादीनां सत्सङ्गार्थमुद्धवः पुनरपि कियत्कालं स्थितिं कथं न कृतवानित्याशङ्कापरिहारस्तु **नराधिपे**ति सम्बोधनसूचितार्थेन कर्तव्यः । तत्र । **सेवकानुवृत्तिः स्वाम्यर्थे**तीति सेवकैः स्वार्थं परित्यज्य स्वामिसेवा कर्तव्या अन्यथापराधः स्यादिति तत्सर्वं भवान् जानातीति नराधिपेति सम्बोधनम् । ननु प्रार्थनायाः फलार्थमुद्धवेन प्रत्यक्षतया आशीः कुतो न दत्तेत्याशङ्क्याहुः **तस्ये**ति फलार्थमाशीर्दानस्य प्रीतिरेव मुख्येत्यर्थः । **अतः परमप्रीतः इत्युक्त**मिति उद्धवः परमः प्रीत इति गोपीनां नमनारम्भे श्रीशुकेन पूर्वमुक्तमित्यर्थः । **तावत्पर्यन्त**मिति यावदुद्धवो मथुरायां नागतस्तावत्पर्यन्तं भगवान्मथुरायां स्थित इत्यर्थः । तत्र हेतुः **कृष्णपालिता**मिति । नन्वन्येषां सेवकानां विद्यमानत्वेपि किमर्थं स्वयं पालयतीत्याशङ्कायामाहुः **विशेषत** इत्यादिना तथा च तदा जरासन्धादीनां विशेषतः शङ्कया बहूनां सेवकानां सम्भवेपि 'त्वं हि नः परमं चक्षु'रिति वाक्याद् 'वृष्णीनां प्रवरो मन्त्री'ति वाक्याच्च उद्धवातिरिक्तानामक्रूरादीनामपि विश्वासाभावात् स्वयमेव पालयतीति । अतो युक्तं विशेषतो भयशङ्कयेति विशेषहेतुरुक्त इति । यथा नन्दादीनां निरोधसिद्ध्यर्थं व्रजे नागमनं तथा भगवदनागमने अयमपि विशेषतो हेतुरुक्त इत्यर्थः । **अनेने**ति यथा विशेषभयशङ्कातो मथुरां

परित्यज्य भगवान्व्रजं न समायाति तथा तादृशं स्थानं परित्यज्य किमुद्धवो मथुरायां समागत इति शङ्का निवर्तितेत्यर्थः ।

**कृष्णायेत्यस्याभासे । एतत्सर्वमि**ति भगवदाज्ञया नन्दादीनां सान्त्वनमित्यर्थः । **उपायनान्यदा**दित्युक्त्या कृष्णाय वसुदेवादिभ्यश्चोपायनान्यदादिति

१०–४४–७० योज्यम् । तत्र श्रीकृष्णे विशेषमाहुः **भगवन्तमित्यादि**ना । नन्वेतासां भक्त्युद्रेकं किं भगवान्न जानाति इत्याशङ्कायामाहुः **एतावानर्थ** इति । 'ता मन्मनस्का' इत्यादिवाक्यानि पूर्वं भगवतोक्तानि परमदृष्टो भक्त्युद्रेकरूपोऽर्थो भगवता तदा नोक्त इत्यर्थः । ननु भगवान्कथं न जानातीत्याशङ्क्याहुः **प्रायेणेत्या**दिना । अग्रे पृथक् पृथक् उपायनदानतात्पर्यमाहुः ततो वसुदेवायेत्यादिना । अक्रूरेण मत्पुत्रावानीतौ पुनर्व्रजे मया न प्रेषितौ । अतो नन्दस्य मित्रत्वं न भविष्यतीति न ज्ञातव्यमिति ज्ञापयितुं वसुदेवायोपायनमदादिति योज्यम् । **पूर्वावस्था** इति बालभावावस्था । अतः सुखेनैव स्थातव्यं पुनरपि दर्शनं देयमिति भावः । एवं नन्दादीनां उत्तमभक्तिमत्त्वाद्यथोद्धवस्य गुरुत्वेन प्रार्थना पूर्वं कृता तथोपायनान्यपि पृथक् पृथगदादिति सर्वं सुस्थम् ।

श्रीमदाचार्यवाग्वृन्दविचारणविचक्षणाः ।
असामर्थ्यं चेद्वदन्ति वाक्यगौरवशङ्कया ॥ १ ॥
सर्वथैवासमर्थोऽहमसामर्थ्ये वदामि किम् ।
तथापि बाल्यमालक्ष्य प्रसीदन्तु सदा मयि ॥ २ ॥

इति श्रीमन्मथुराधीशसन्निधौ गोस्वामिश्रीद्वारकानाथात्मजगोस्वामिश्रीरामकृष्णजिदाज्ञया श्रीमद्द्वारवतीनिवासिना वालखिल्यगरुडोद्गारिज्ञातिना पाहाडश्रीविश्रामात्मजहरिकृष्णेनेयं भ्रमरगीतप्रकीर्णटीपिका पूर्णीकृता । तत्र मनसोनेकपथत्वाद्बुद्धिदोषाद्यत्किंचिन्न्यूनाधिकं तद्विज्ञैर्विचार्य कामानुजं विहाय लेख्याहं तल्लेख्यं यतो मया व्याकरणं नाधीतम् । अत्रार्थे केनचिदुक्तम् ।

'एतस्यामहमल्पबुद्धिविभवोऽप्येकोपि कोपि ध्रुवं
मध्ये भक्तजनस्य मत्कृतिरियं न स्यादवज्ञास्पदम् ।
किंविद्याः सरघाः किमुज्ज्वलकुलाः किंपौरुषाः किंगुणा-
स्तत्किं सुन्दरमादरेण रसिकैर्नो पीयते तन्मधु' ॥ १ ॥

किञ्च देहस्यानित्यत्वं, ततो ममोपरि दयां कृत्वा सत्समागमे सद्भिः स्मर्तव्योऽहमिति प्रार्थये ।

**इति श्रीभ्रमरगीतद्वितीयाध्यायप्रकीर्णटीपिका समाप्ता ॥**

## 'सकृदधरसुधा'मित्यत्र श्रीहरिधनचरणानां स्वतन्त्रलेखः ।

श्रीमदाचार्यपादाब्जपरागासक्तिरूपतः । जातो यः कृष्णचरणे भावस्तेनैव सन्ततम् ॥ १ ॥
यथा तथा तापरूपानाचार्यहृदयोद्गतान् भावान् वच्मि तथा तैश्च मयि तुष्यतु मत्प्रभुः ॥२॥

यद्वा, ननु कथं भगवति दोषा आरोप्यन्त इत्याशङ्क्याह **सकृदिति** । भगवता वयं वञ्चिताः, तस्याक्रोशः क्रियते । वञ्चनामेवाह **सकृदिति** । सकृद् अधरसुधां पीत्वा तत्यजे, सुमनसः भवादृगिव । अत्रायं भावः । दृष्टान्ते पानस्यैव सिद्धत्वाद् दार्ष्टान्तिकेपि तथैव कथनमुचितमिति पीत्वेत्यध्याहार्यम् । ननु भवतीभिरपि तदधरसुधा पीतेति तुल्यत्वात् कथमाक्रोश इत्याशङ्क्याह **मोहिनीं स्वां पाययित्वा तत्यजे** इति । अत्रायं भावः । सा सुधा न स्थिता, किन्तु मोहिनी स्थिता । तत्पानेन मोहयित्वास्मदीयां सुखेन पीत्वा गतः । अन्यथास्माभिरेव न दत्ता भवेत् । मोहेन विवेकाद्यपगमात् तथा दत्ता । यद्वा । स्वां मोहिनीं पाययित्वा अधरसुधां तत्यजे । अत्रायं भावः । भगवता तासु रसदानसमये तद्-धराणां सुधारूपतोक्ता, तेनैतासामपि तथात्वं जातम्, तामपि त्यक्तवान् । इतो गृहीत्वा स्वास्मिन्नपि न स्थापितवानिति हि दुःखम् । गृहीत्वा, तत्रापि चेद्रक्षिता स्यात्, तदापि न दुःखं स्यात्, किन्तु त्यक्तवान् । अयं भावः । अस्मन्निकटेपि सा न, तापाधिक्यात्त-च्छोषात् । तत्रापि स्वविप्रयोगात्तापेन तच्छोषात् सा नेति व्यज्यते । एतदेव च दुःखं यत्स्वयमपि दुःखितो भवतीत्यर्थः । नन्वेतादृशं भगवन्तं लक्ष्मीः कथं सेवत इत्याशङ्क्याहुः । **नु** इति वितर्के । तत्पादपद्मं पद्मा कथं सेवते । सापि पद्मा अलौकिकसौन्दर्ययुक्ता पद्मि-नीति यावत् । अत्रोत्तरमाह । उत्तमश्लोकजल्पैः सा सेवते । अत्रायं भावः । तस्याः मध्यस्था भगवदीयाः तत्सेवोत्तमा इति तदनुरोधेन लक्ष्मीनाथ रमेशेत्यादिरूपैर्जल्पैः स्वपक्ष-स्थापनेतरपक्षनिराकरणात्मकैर्हृतचेता भगवान्, अतस्तया सेवां कारयति । सापि हृतचित्ता तथा करोति । अन्यथान्यदैन्येन स्त्रीणामन्यविज्ञप्त्या तथाकरणमनुचितमिति भावः । **बत** इति खेदे । तथा दर्शनात् स्वस्यापि हृतचित्तत्वान्मध्यस्थभक्ताभावात् खेदः । १०–४४–१३.

यदि युक्तमयुक्तं वा जीवबुद्ध्या ह्यलेखि यत् ।
क्षमन्तु तद्गोपिकेशप्रियाः स्वीयविचारतः ॥ १ ॥

# एतत्प्रकरणस्थकारिकाणामकारादिवर्णानुक्रमः ।

# श्लोकानामकारादिवर्णानुक्रमः ।

# उपन्यस्तवाक्यानां सूचिपत्रम् ।

| उपन्यस्तवाक्यम् | पृष्ठम् | पङ्क्तिः | कुत्रत्यम् |
|---|---|---|---|
| ३४ यो यच्छ्रद्धः स एव सः | ७७ | १ | गी. १७-३ |
| ३५ यथेक्षुदण्डं मदकर्युरुक्रमः | ८२ | ९ | भा. १०-३९-१७ |
| ३६ यदा सर्वे प्रलीयन्ते कामा येस्य हृदि स्थिता अथ मर्त्यो-मृतो भवत्यत्र ब्रह्म समश्नुते | ८९ | ५ | बृहदा. ४-४-७ |
| ३७ ब्रह्मैव सन् ब्रह्माप्येति | ८९ | १२ | बृ. ४-४-६ |
| ” ” | १२९ | १ | बृ. ४-४-६ |
| ३८ सर्वस्यात्मा भवति सर्वमस्यान्नं भवति | ९० | १ | बृ. १-२-५ |
| ३९ लोकस्य व्यसनापनोदनपरो दासस्य | ९० | ४ | मुकुन्दमाला. श्लो९ |
| ४० कुरून् मधून् वाथ सुहृद्दिदृक्षया | ९१ | ३ | भा. १-११-९ |
| ४१ पित्रोर्नौ प्रीतिमावह | ९१ | ३ | भा. ९०-४३-३ |
| ४२ को ह्येवान्यात् कः प्राण्याद्यदेष आकाश आनन्दो न स्यात् | ९७ | १४ | तै० २-७ |
| ४३ यदहरेव विरजेत्तहरेव प्रव्रजेत् | १०८ | २० | जाबाल. ४ |
| ४४ अज्ञातपीडा अधमस्येत्यादि | ११५ | १ | अमरुशतकम् |
| ४५ निदाघवहृयर्कभवोतिशाद्वले | ११५ | ५ | भा.द. १५-५(१८-५) |
| ४६ पुनश्च पद्मा संभूता | १२१ | ७ | विष्णुपुराणम् |
| ४७ स्थानं नास्ति क्षणो नास्ति० | १२४ | २१ | म०भा० द्रौ० ना० सं० |
| ४८ न वै स्त्रैणानि सख्यानि | १२७ | १ | महाभारतम् |
| ४९ राजा मित्रं केन दृष्टं श्रुतं वा | १२७ | २ | भा० राजधर्मस्थम् |
| ५० अयोग्यमिच्छन् पुरुषः पतत्येव न संशयः | १२८ | ६ | |
| ५१ सुपर्णावेतौ | १२९ | १ | भा० ११-११-६ |
| ५२ न वा अरे पुत्राणां कामाय० | १२९ | ६ | बृ० ४-५-६ |
| ५३ यमेवैष वृणुते तेन लभ्यः | १२९ | ६ | मुण्डक. ३-२-३ |
| ५४ आत्मकामः सर्वं परित्यजेत | १२९ | ८ | |
| ५५ न मयोदितपूर्वं वा अनृतं तदिमे विदुः | १३२ | २ | भा. १०-२२-११ |
| ५६ न पारयेहं निरवद्यसंयुजाम् | १३२ | २ | भा. १०-२९-२२ |
| ५७ तदघं हित्वा | १३६ | २६ | भा. ७-१-३५ |
| ५८ भक्तियोगवितानार्थम् | १३६ | ४ | भा. १-८-२० |
| ५९ अन्नमयं हि सोम्य मनः | १४३ | ४ | छान्दोग्यं. ६-५-४ |
| ६० यतो वा इमानि भूतानि जायन्ते | १४४ | ३ | तैत्तिरीय २-१ |
| ६१ तस्माद्वा एतस्मादात्मन आकाशः | १४४ | ४ | तैत्तिरीय. २-१ |
| ६२ स आत्मानं स्वयमकुरुत | १४४ | ४ | तैत्तिरीय. २-७ |
| ६३ एतस्माज्जायते प्राणः | १४४ | ११ | मु०२-१-३ |

| उपन्यस्तवाक्यम् | | पृष्ठम् | पङ्क्तिः | कुत्रत्यम् |
|---|---|---|---|---|
| ९६ | अस्प्राक्ष्म तत्प्रभृति नान्य | १७३ | १८ | भा. १०-२६-३६ |
| ९७ | स एतावानास | १७३ | २० | बृह० १-४-३ |
| ९८ | नैष्कर्म्यमप्यच्युतभाववर्जितम् | १७४ | १ | भा. १-५-१२ |
| ९९ | ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम् | १७४ | ३ | भा. १०-४४-१८ |
| १०० | संत्यज्य सर्वविषयान् | १७४ | २२ | भा. १०-२६-३१ |
| १०१ | पतिसुतान्वयभ्रातृबान्धवान् | १७४ | २२ | भा. १०-२८-१६ |
| १०२ | दयितास्तनमण्डितेन— | १७५ | १ | भा. १०-१८-१७ |
| १०३ | वीक्ष्यालकावृतमुखं तवकुण्डलश्रीगण्ड | १७५ | ४ | भा. १०-२६-३९ |
| १०४ | मल्लानामशनिर्नृणां नरवरः स्त्रीणां स्मरः | १७५ | ६ | भा. १०-४०-१७ |
| १०५ | जहुस्तदाधिम् | १७५ | ११ | भा. १०-१८-१७ |
| १०६ | ता मन्मनस्काः | १७५ | १५ | भा. १०-४३-४ |
| १०७ | दृष्ट्वैवमादिगोपीनाम् | १७५ | १८ | भा. १०-४४-५८ |
| १०८ | सरिद्वनगिरिद्रोणीर्वीक्षन् कुसुमितान् | १७५ | १९ | भा. १०-४४-५१ |
| १०९ | एताः परं तनुभृतो भुवि गोपवध्वः | १७५ | २१ | भा. १०-४४-५८ |
| ११० | कृष्णस्य दयितः सखा | १७५ | २७ | भा. १०-४३-१ |
| १११ | तमाह भगवान् प्रेष्ठं भक्तमेकान्तिनम् | १७५ | २७ | भा. १०-४३-२ |
| ११२ | तं वीक्ष्य कृष्णानुचरम् | १७५ | २८ | भा. १०-४४-९ |
| ११३ | आसामहो चरणरेणुजुषाम् | १७५ | २८ | भा. १०-४४-६२ |
| ११४ | व्यासाद्यैरीश्वरेहाज्ञैः | १७८ | ५ | भा. १-८-४६ |
| ११५ | यस्यामतं तस्य मतम् | १७८ | ६ | केनोपनिष. २-३ |
| ११६ | नाग्निं चित्वा रामामुपेयात् | १८६ | ५ | आपस्तम्ब |
| ११७ | विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत् | १९१ | १६ | भ० गीता. १०-४२ |
| ११८ | ब्रह्म वा इदमग्र आस | १९५ | ६ | बृह० १-४-१९ |
| ११९ | तस्मात् सर्वमभवत् | १९६ | ७ | बृह० १-४-१० |
| १२० | आत्मानमेवावेदहं ब्रह्मास्मि | १९६ | ६ | बृह० १-४-१० |
| १२१ | ब्रह्मविदाप्नोति परम् | १९५ | ७ | तैत्तिरीयोप० १-६-९ |
| १२२ | परमेष्ठिनो वा एष यज्ञोग्र आसीत् | १९६ | ८ | तै० सं० १-६-९ |
| १२३ | इन्द्रे प्रजापतौ ब्रह्मन् | १९५ | १० | " |
| १२४ | इमां विद्यां कृष्णाय देवकीनन्दनाय | १९५ | १२ | छा. ३-१७-६ |
| १२५ | यज्ञो वै विष्णुः | १९६ | १ | तै०ब्रा. अ १ प्र २ अनु६ |
| १२६ | पण्डितो बन्धमोक्षवित् | १९७ | २६ | भा. ११-२०-४१ |
| १२७ | सङ्ग्रामे च प्रपन्नानाम् | १९८ | १५ | रा.यु.१९-३३ |

| उपन्यस्तवाक्यम् | पृष्ठम् | पङ्क्तिः | कुत्रत्यम् |
|---|---|---|---|
| १२८ कौन्तेय प्रतिजानीहि० | १९८ | १६ | भ. गीता. ९–३१ |
| १२९ आचख्यौ सर्वमेवास्मै० | २०८ | ५ | भाग० १०–४९–६ |
| १३० सा मां विमोहयति | २०८ | २४ | भा. १–८–३१ |
| १३१ आत्मनःपितृपुत्राभ्याम् | २१४ | ५ | भा. ११–२२–४८ |
| १३२ सम्भोजिनी नाम पिशाचभिक्षा० | २१४ | २८ | आपस्तम्बधर्मसूत्रम् |
| १३३ अनुप्राणन्ति यं प्राणाः | २१५ | ३ | कौषीतकी ३–२ |
| १३४ अण्डेषु पेशिषु | २१५ | ३ | भा. ११–३–३९ |
| १३५ वीरसूरपि नेष्यति | २१५ | ७ | भा. ४–२८–२० |
| १३६ अर्थो बहिश्चराः प्राणाः | २१५ | ८ | |
| १३७ तमुत्क्रामन्तं प्राणोनूत्क्रामति | २१५ | १० | बृह० ४–४–२ |
| १३८ इहैव समवनीयन्ते प्राणाः | २१५ | ११ | बृह० ३–२–११ |
| १३९ यतो मृतोध्मातःशेते | २१५ | १७ | बृह० ३–२–११ |
| १४० पूर्वाभ्यासेन तेनैव | २१६ | ७ | भग० गीता. ६–४६ |
| १४१ नो चेत्प्रमत्तमसदिन्द्रिय० | २१६ | ८ | भा०. ७–१५–४६ |
| १४२ निकृष्टैः कर्मभिर्नित्यं जन्तुः स्थावर० | २१६ | १० | |
| १४३ अन्धंतमः प्रविशन्ति येऽविद्यामुपासते | २१६ | १३ | बृह० ४–४–१० |
| १४४ य एवास्मि स सन् यजे | २१७ | १ | यजुर्ब्राह्मण. ३–७–५ |
| १४५ सत्यं ब्रूयात् प्रियं ब्रूयात् | २१७ | २६ | मनु. ४–१३८ |
| १४६ नादत्ते कस्यचित्पापम् | २१८ | २१ | भ० गीता. ५–१५ |
| १४७ अलौकिकास्तु ये भावाः | २१९ | २० | महाभा०भीष्म. ६–१२ |



# एतत्प्रकरणीयश्रीमदाचार्यवाङ्मुक्तावलिरकारादिवर्णानुक्रमेण ।

क्रमाङ्कः — पृष्ठाङ्कः

## शुद्धिपत्रम्



| पत्रम् | पंक्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ६ | ७ | क्रुद्धः | क्रुद्धः |
| ९ | २९ | आध्यात्मिकेति | आध्यात्मिक इति |
| १० | १६ | प्राकृतव | प्राकृतत्व |
| १० | २३ | अकृतवात् | अकृतत्वात् |
| १५ | ३ | निर्धारितवादुक्तम् | निर्धारितत्वादुक्तम् |
| २१ | २३ | अरत्नीभ्याम् | अरत्निभ्याम् |
| २५ | २४ | बतं | बत |
| ५० | २४ | देवास्तुः | देवास्तु |
| ५२ | ११ | भन्वतीति | भवन्तीति |
| ६३ | २ | श्रुतिवशा | श्रुतिवशात् |
| ६८ | २१ | प्रकार | प्रकट |
| ६८ | २२ | प्रकारो | प्रकटो |
| ९८ | १६ | स्थाष्णु | स्थास्नु |
| १०० | ३० | कथनं तु बहुव्रीहिः | कथनं न तु बहुव्रीहिः |
| १०३ | १९ | व्यावर्तयेति | व्यावर्तयति |
| १०६ | १८ | क्ररा | क्रूरा |
| ११९ | ८ | तु | नु |
| १२७ | २४ | श्रीपुरुषोत्तमकृतो भ्रमरगीतप्रकाशः | श्रीविठ्ठलेशात्मजश्रीवल्लभकृतलेखः |
| १२९ | २८ | मृगुयुरिवेति | मृगयुरिवेति |
| १४६ | १ | सायना | साधना |
| १४९ | १७ | एकादशामी | एकादशासन् |
| १५३ | १७ | अक्रर आगतः | अक्रूर आगतः |
| १५४ | ९ | सम्बाधनम् | सम्बोधनम् |
| १६३ | ९ | भगवदुक्तार्थज्ञानात | भगवदुक्तार्थाज्ञानात् |
| १६४ | ४ | भावात् | भायात् |
| १७८ | २५ | समयः | समता |
| २०७ | १३ | वीय | वीर्य |
| २२७ | ५ | १०-४४-२२ | १०-४४-२० |



# मुद्रितपुस्तकानि ।

| | | |
|---|---|---|
| १ | सेवाफलम् । द्वादशविवरणसमेतम् । | रु. १-०-० |
| २ | निरोधलक्षणम् । षड्विवरणसमेतम् । गुर्जरानुवादसमेतं च । | रु. १-०-० |
| ३ | संन्यासनिर्णयः । अष्टविवरणसमेतः । गुर्जरानुवादसमेतश्च । | रु. १-०-० |
| ४ | जलभेदः । चतुर्विवरणसमेतः । पञ्चपद्यानि । विवरणद्वयसमेतानि । सेवाफलीयं विवरणत्रयम् । | रु. १-०-० |
| ५ | भक्तिवर्धिनी । चतुर्दशटीकासमेता । | रु. २-०-० |
| ६ | सिद्धान्तमुक्तावली । अष्टविवृतिसमेता । गुर्जरानुवादसमेता च । | रु. १-०-० |
| ७ | सिद्धान्तरहस्यम् । एकादशविवरणसमेतम् । गुर्जरानुवादसमेतं च । | रु. १-०-० |
| ८ | पुष्टिप्रवाहमर्यादा चतुर्विवरणसमेता । | रु. १-०-० |
| ९ | नवरत्नम्-पञ्चविवृतिसमेतम् । गुर्जरभाषानुवादसहितं च । | रु. १-०-० |
| १० | श्रीसुबोधिनी । दशमपूर्वार्धीयं तामसफलप्रकरणम् । | रु. ३-०-० |
| ११ | श्रीसुबोधिनी । भ्रमरगीतोपेतम् । दशमपूर्वार्धीयं राजसप्रमेयप्रकरणम् । | रु. ३-०-० |
| १२ | श्रीसुबोधिनी । दशमोत्तरार्धीयं राजससाधनप्रकरणम् । | रु. २-०-० |
| १३ | श्रीसुबोधिनी । दशमोत्तरार्धीयं राजसफलप्रकरणम् । | रु. २-०-० |
| १४ | श्रीसुबोधिनी । दशमोत्तरार्धीयं सात्त्विकप्रमेयप्रकरणम् । | रु. २-०-० |
| १५ | श्रीमती टिप्पणी । श्रीमद्विट्ठलेश्वरप्रणीता । | रु. २-०-० |
| १६ | रासपञ्चाध्यायीप्रकाशः । श्रीपीताम्बरप्रणीतः । | रु. १-०-० |
| १७ | दशमतामसफलयोजना । श्रीलालूभट्टकृता । | रु. ०-८-० |
| १८ | भागवतार्थनिबन्धः । प्रकाशावरणभङ्गसमेतः । आद्यस्कन्धद्वयात्मकः । | रु. १-०-० |
| १९-२२ | भावप्रकाशिका । ब्रह्मसूत्रवृत्तिः । श्रीकृष्णचन्द्रकृता । अध्यायाः १-२-३-४ | रु. २-४-० |
| २३ | प्रथमस्कन्धश्रीसुबोधिनीप्रकाशः । श्रीपुरुषोत्तमप्रणीतः । | रु. १-०-० |
| २४ | वेदान्ताधिकरणमाला । श्रीमत्पुरुषोत्तमप्रणीता । | रु. १-०-० |
| २५ | पत्रावलम्बनम् । श्रीपुरुषोत्तमकृतविवृतिसमेतम् । | रु. ०-४-० |
| २६ | श्रीपुरुषोत्तमनामसहस्रम् । नामचन्द्रिकायुतम् । | रु. ०-१०-० |
| २७ | त्रिविधनामावली । टीकासमेता । | रु. १-४-० |
| २८ | तैत्तिरीयोपनिषद्भाष्यम् । श्रीजयगोपालभट्टकृतम् । गुर्जरानुवादयुतम् । | रु. १-०-० |
| २९ | श्रीमधुराष्टकम् । षड्विवरणसमेतम् । | अमूल्यम् । |
| ३० | प्रेमामृतम् । श्रीविट्ठलेश्वरकृतविवृतिसमेतम् । परिवृढाष्टकम् । श्रीगोपेश्वरकृतटीकासमेतम् । | रु. ०-८-० |
| ३१ | शृङ्गाररसमण्डनम् । श्रीविट्ठलेश्वरप्रकटितम् । गुर्जरानुवादसमेतम् । | रु. २-८-० |
| ३२ | रसाब्धिमहाकाव्यम् । श्रीदेवकीनन्दनकृतम् । | रु. १-०-० |
| ३३ | मनोदूतम्-हृदयदूतं च । गुर्जरानुवादसमेतम् । | रु. ०-८-० |
| ३४ | श्रुतिरहस्यम्-प्रकाशसमेतम्-गुर्जरानुवादयुतम् । | रु. १-०-० |
| ३५-३८ | श्रीमदणुभाष्यस्य प्रकाशरश्मिपरिबृंहितः संपूर्णस्तृतीयाध्यायः । | रु. ५-०-० |
| ३९-४० | श्रीमदणुभाष्यस्य प्रकाशरश्मिपरिबृंहितस्य संपूर्णश्चतुर्थाध्यायः । | |
| 41 | Discuss how far S'ankaracharya truly represents the view of the author of the Brahma-Sutras. | Rs. 1-0-0 |
| 42 | An examination of S'ankara's Refutation of the Sankhya Theory. | Rs. 1 0-0 |

**पंडित गट्टूलालाजीनी पाठशाला, केथिड्रलस्ट्रीट, भूलेश्वर, मुंबई.**

Printed by Manilal Itcharam Desai at the "Gujarati News" Printing Press, Nos. 20--24 Bake-House Lane, Fort, Bombay.

Published by Dhirajlal Vrajdas Sankalia B. A., L. L. B., Vakil, High Court, Khakkar Buildings, C. P. Tank Road, Girgaon, Bombay.